तेषां न भविष्यतीति संसारिजीवातिरिक्तजीवस्वरूपानङ्गीकारेणैव प्रवृत्तिरिति कल्पनीयम्; एवं च सति अध्यायद्वयानन्तरमकस्मादस्य पूर्वपक्षस्य प्रवृत्तिस्तत्समाधानं च कथमुपपद्यते? यथाचाविरोधाध्याये़ऽद्वैतमतस्यानालोचनात् सूत्रकारा न कुत्राप्यद्वैतमतं पूर्वपक्षितं मन्यन्ते, तथाऽन्यत्र व्यक्तम् , अतः प्रथमसूत्रमेकमेव तृतीय-चतुर्थगतमद्वैतपक्षपातमेव सूत्रकाराणां गमयति ॥

एतेन—"ऊर्ध्वरेतस्सु च शब्दे हि" इति प्रथमाधिकरणान्तिमं सूत्रमपि—व्याख्यातम् ; अस्मिन् हि सूत्रे श्रुत्यादिसिद्धतयोत्तराधिकरणस्थापयिष्यमाणोर्ध्वरेतसां ब्रह्मविद्याधिकारिणां विनाऽपि कर्म ब्रह्मविद्याधिकारो हि यो निरूप्यते, स हि ब्रह्मविद्याधिकारं प्रति तत्तज्जन्मीयकर्मणां नोपयोग इति विशदयति; अन्यथोर्ध्वरेतसां ब्रह्मविचारकाले कर्मानुष्ठानासंभवात् कथं तेषां ब्रह्मविद्याधिकारः स्यात्? अत्र यद्यपि विद्या न कर्माङ्गमित्येव बोध्यते; तथापि तुल्यन्यायेन कर्मणोऽपि न विद्याङ्गत्वमित्यूरीकर्तव्यम्। अतएव यदा कदाचिदनुष्ठितकर्ममात्रेण ब्रह्मविद्यानिर्वाहः। तथाचैकत्र विनाऽपि कर्म ब्रह्मविद्यासिद्धिरपरत्र कर्मणैव ब्रह्मविद्येति कल्पनायां प्रमाणाभावात् कर्मणां ब्रह्मविद्यानङ्गत्वस्वीकार एव समुचितः। अयमेवार्थः सूत्रकाराभिमतः ॥

अत एव "अग्नीन्धनाद्यनपेक्षे" ति कर्मणां ब्रह्मविद्यायामनुपयोगः साध्यमान उपपद्यते। यत्त्वत्र श्रीभाष्ये—तेषु तु आश्रमकर्मानपेक्षा विद्येति विवृतम्, तदिदम् ऊर्ध्वरेतसामाश्रमकर्मविचारानन्तरं ब्रह्मविचार इत्यर्थस्यैव स्वीकारापत्त्या सर्वानुगतस्यैकस्याधिकारितावच्छेदकस्यानिरूपणाच्च चिन्त्योपपत्तिकं प्रतिभाति। तथाच "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यनेनैव यथायोगं तत्तत्कर्मोपकारकताया निर्वाहसंभवात् "अग्नीन्धनाद्यनपेक्षे" ति सूत्रं श्रीभाष्यमते वितथं संपद्यते, अद्वैतमते तु यज्ञादीनां फले नोपयोगः, किन्तु

विविदिषायां ज्ञाने वेति सूत्रद्वयमपि सार्थकं भवति। "अग्नीन्धनाद्यनपेक्षा" "सर्वापेक्षा चे" ति सूत्राभ्यामग्नीन्धनादीनां सर्वेषामपेक्षाऽनपेक्षा चांशभेदेन ज्ञाप्यत इति हि सूत्रस्वारस्यतोऽवगम्यते। तथाच एकत्र निरपेक्षस्यापि अन्यत्र सापेक्षत्वमित्येवाश्ववदिति दृष्टान्तेन ज्ञाप्यते। अश्वो हि गमनव्यापारांश एवोपयुज्यते, नतु ग्रामप्रासावपीति तत्त्वदीपनादौ व्यक्तम्। तत्रा"ग्नीन्धनाद्यनपेक्षे"ति सूत्रेऽग्नीन्धनपदप्रयोगेणात्र सर्वपदप्रयोगेण च सूत्रकाराः "यज्ञेन दानेन तपसाऽनाशकेने" ति श्रुतिगतयज्ञ-दानयोरदृष्टविधया पापनिरसनद्वारेण ज्ञानोत्पत्तौ उपयोगात् तस्य जन्मान्तरीयकर्मणाऽपि सिद्धौ नाधिकारिणः स्वाधिकारस्तदानीन्तनकर्मणैवेति नियम इति सूचनेन—"धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि" ति शांकरभाष्याशयमेवोपबृंहयन्ति। तथाच सूत्रकारैः "यज्ञेन दानेन"ति श्रुतिः स्वरूपयोग्यतया, नतु फलोपधानविधयेत्येवमभिप्रायतया—"अग्नीन्धनाद्यनपेक्षे"ति सूत्रेण योज्यते। "सर्वापेक्षे"ति सूत्रे तु मतद्वयेऽपि यज्ञ-दान-तपसां सर्वेषां विद्योपयोगबोधन एव तात्पर्यम्, इति ऊर्ध्वरेतस्सु अग्नीन्धनानपेक्षाऽन्येषु सर्वापेक्षेति श्रीभाष्यरीत्या सूत्रकाराशयावगमाद् नियतपूर्ववर्तित्वं शम-दमादीनामित्येव सूत्रद्वयेनापि गम्यते। अत एव "सर्वापेक्षा चे"ति सूत्रानन्तरं "शम-दमाद्युपेतः स्यादि"ति शम-दमादीनामेव ग्रहणमप्युपपद्यते, अन्यथा—'यज्ञाद्युपेतः' इति खलु सूत्रणीयं स्यात्॥

अयं भावः—ऊर्ध्वरेतोविषयेऽसंभवेऽपि कुत्र चनाधिकारिणि संभवाभिप्रायेण यथा—"यज्ञेन दानेने"ति, एवं "तपसाऽनाशकेने"त्यपि संभवाभिप्रायेण भवतु। तथाच तस्यानियताधिकारितावच्छेदकत्वमिति शङ्कावारणं हि यज्ञ-दानाद्यंशोऽनुवादः तपसेत्यत्र तु विधिरिति व्यवस्थापनेनैव भवति, इति शम-दमादिसाधनचतुष्टयनिय-

तत्पूर्ववर्तित्वं कर्मणां कुत्र चनादृष्टविधयोपयोगमात्रं च व्यवस्थापयितुमेवेदं प्रकरणं प्रवृत्तम्। तथासति हि ऊर्ध्वरेतसां गृहस्थानां संन्यासिनां विधुराणां देवानां च सर्वेषामधिकारिणामेकमधिकारितावच्छेदकं शम-दमादिकं भवतीति न किञ्चिदनुपपन्नम्॥

वस्तुतस्तु श्रीभाष्यकारा अपि—वाक्यजन्यज्ञाने न कर्मणामुपयोगं "सर्वापेक्षा चे"ति सूत्रेण मन्यन्ते, किन्तु ध्रुवानुस्मृतिपदवाच्यश्रवण-मननाद्यनन्तरकालिकदर्शनसमानाकारविद्यायामेव। अत्र तु "अथातो ब्रह्मजिज्ञासे" तिसूत्रेऽथपदेन वाक्यार्थज्ञाने कर्मणामुपयोगो यदि तेषामप्यसम्मतः, तर्हीदमेव विचारणीयम्—यत् "अथातो ब्रह्मजिज्ञासे"ति प्रतिज्ञातजिज्ञासापूर्वतनत्वं कर्मविचारस्य कथमुपपद्यते ? तदिदं सिद्धम् यत् कर्मणामनियतोपयोगस्य शमदमादीनां नियतोपयोगस्य च निरूपणार्थमेवा"ग्नीन्धनाद्यनपेक्षे" त्यादि "शम दमाद्युपेतः स्यादि"त्यन्तं प्रवृत्तमिति॥

अत्र सर्वेषु भाष्येषु विषयवाक्यतया—"यज्ञेन दानेने"ति वाक्यमेव विवक्षितम्। अनेन चेदं सिद्धं भवति—यद् गृहस्थविषये यज्ञादीनामुक्तवाक्येऽनुवादमहिम्ना विविदिषोत्पत्त्यादौ उपयोग इति। एवं स्वीकारे ह्यपरा शङ्का समुन्मिषति—यत् सर्वेषामाश्रमकर्मणामुक्तवाक्येऽननुवादात् गृहस्थाश्रमधर्मा अपरे न सम्पादनीया भविष्यन्तीति; तदर्थमिदं सूत्रम्—"विहितत्वाच्चाश्रमकर्मापी"ति केचन मन्यन्ते। एतेषां मतरीत्या—"यज्ञेन दानेने"त्यत्राश्रमकर्ममात्रविवक्षेति सूचनार्थमुक्तं सूत्रमिति न दोषः, परं तु—नेदं विवरणं साम्प्रदायिकम्। अयमत्र मतद्वयसम्प्रदायसिद्धोऽधिकरणार्थः—यद् मोक्षोपयोगिनामेषामाश्रमशेषत्वमपि विद्यत इति। सर्वथा तु अविरक्तविषयत्वाद् यज्ञादिविधीनां यावदुत्कटवैराग्यं गृहस्थैः शम-दमादिसम्पन्नैरपि स्वस्वाश्रमकर्माण्यप्यनुष्ठेयानीति मतद्वयेऽप्यविशेषः। श्रीभाष्यकारा अपि—

"ऊर्ध्वरेतस्सु च शब्दे हि" इति सूत्रे यावज्जीवश्रुतिरत्वविरक्तविषयेति विवरणेनोक्तमर्थमनुमन्यन्त एव ॥

ये तु पुनर्विधुरास्तेऽपि शम-दमादिसम्पन्ना एवाधिकारिण इति "अन्तरा चापी"त्यधिकरणमपि व्याख्यातम्। तथाच कर्माधिकारं विनापि ब्रह्मविद्याऽधिकारो भवतीत्येव सूत्रकाराशयः। अत एव हि "तद्भूतस्य तु नातद्भावः" इति—पतितानां ब्रह्मविद्याधिकारसम्भवोऽस्ति वा नवेति विचार उपपद्यते; अन्यथा कर्मानधिकारिणां तेषां ब्रह्मविद्याधिकारः कथं सम्भवदुक्तिकः? इत्यद्वैताचार्यसम्मत एव सूत्रार्थः सूत्रकारहृदयङ्गमः। अद्वैते हि शूद्राणामिव साधनचतुष्टयसम्पन्नानामधीतवेदानामपि पतितानां वचनबलान्न ब्रह्मविद्याधिकार इति सर्वं सङ्गतम्। एतेन श्रीभाष्यमतेऽपशूद्राधिकरणासाङ्गत्यमपि देवताधिकरणवैयर्थ्यमिवापरिहरणीयमेव। तथाहि—

"अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" इत्यन्तं चतुर्लक्षणं ब्रह्ममीमांसाशास्त्रम्—"अथातो धर्मजिज्ञासा" इत्यारभ्य प्रवृत्तायाः कर्म-देवतामीमांसायाः पृथग्भूतम्, न तयोरैक्यमिति शङ्करभगवत्पादानां राद्धान्तः। तदुक्तं भाष्ये—"एवंच सति "अथातो धर्मजिज्ञासा" इत्येवारब्धत्वाद् न पृथक् शास्त्रमारभ्येत, आरभ्यमाणं चैवमारभ्येत "अथातः परिशिष्टधर्मजिज्ञासा" इति; "अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासा" इति वदि"ति। इयमत्र भामती—"ब्रह्मणः शास्त्रार्थस्य धर्मादन्यत्वाद् भिन्नविषयत्वेन शास्त्रभेदात् "अथातो ब्रह्मजिज्ञासा" इत्यस्य शास्त्रान्तरत्वमित्याह—एवं च सतीति। इतरथा तु धर्मजिज्ञासैवेति न शास्त्रान्तरमिति न शास्त्रारम्भत्वं स्यादित्याह—प्रतिपत्तिविधिपरत्वे हीति। न केवलं सिद्धरूपत्वाद् ब्रह्मात्मैक्यस्य धर्मादन्यत्वम्, किन्तु विरोधादपो"त्यादि। अयमत्र कल्पतरुः—"ननु बाह्यक्रिया-

विधिः प्रथमकाण्डे गतः, मानसज्ञानविधिविचाराय पृथगारम्भ इति शङ्कापोहार्थमारभ्यमाणं चेति भाष्यम्" इति। एतैर्हि भाष्य-भामती-कल्पतरुवाक्यैः स्पष्टमिदमवगम्यते, यत् "अथातो धर्मजिज्ञासा" इति धर्मजिज्ञासाप्रतिज्ञया न ब्रह्ममीमांसापि गता, नवा धर्मशब्देन ब्रह्मापि तत्र विवक्ष्यत इति, न विंशतिलक्षणमेकं मीमांसाशास्त्रम्, किन्तु षोडशलक्षणात् पृथगेव चतुर्लक्षणं ब्रह्ममीमांसाशास्त्रमिति। तदुक्तं परिमले—"टीकाकारैर्धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं वदद्भिर्धर्म-जिज्ञासासूत्रं वेदार्थविचारप्रतिज्ञापरं विंशतिलक्षणीसाधारणमङ्गी-कृतमिति न मन्तव्यम्" इति जिज्ञासासूत्रव्याख्यानोपसंहारे। एवं च धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं वदतां भामतीकाराणां श्रोत-व्यादिवाक्याविधिपक्षपातिनां फलवदर्थावबोधार्थवेदान्ताध्ययनमपि स्वाध्यायविधिप्रयुक्तमित्येवाशयः, न तु धर्मजिज्ञासासूत्रेण ब्रह्म-ज्ञानेच्छाप्रदर्शनमुखेन ब्रह्ममीमांसाप्रतिज्ञापि सिद्धेति। तदुक्तं परिमले—"अत्र हि ब्रह्मजिज्ञासासूत्रं ब्रह्मज्ञानेच्छोपदर्शनमुखेन ब्रह्ममीमांसायां प्रवर्तनार्थम्, नतु वेदान्ताध्ययने प्रवर्तनार्थम्, वेदान्तानां विवक्षितार्थत्वोपपादनार्थं वा"—इति॥

सति चैवं "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्येण ब्रह्म-जिज्ञासायामपि स्वाध्यायानन्तर्यस्य विवक्षितत्वे "अथातो ब्रह्म-जिज्ञासा" इति सूत्रमपि "स्वाध्यायोऽध्येतव्यः" इति विध्यर्थ-निर्णयार्थमित्येव स्यात्, सा तु "अथातो धर्मजिज्ञासा" इत्यनेनैव सिद्धा, इति पृथक् प्रतिज्ञा वितथा स्यादित्येवाभिप्रेतम्, नतु धर्मशब्देन ब्रह्मणोऽपि विवक्षितत्वाद् धर्मजिज्ञासेति साधारणी प्रतिज्ञा, ब्रह्मजिज्ञासेति विशिष्टा प्रतिज्ञेति। इदं हि सर्वसम्मतमेव—यत् साधारणप्रतिज्ञा यदनन्तरा, तदनन्तरा तदवान्तराध्यायानन्तरैव वा तदन्तर्गता विशेषप्रतिज्ञेति। तत्र यदि भाष्यकारा धर्मजिज्ञासा साधारणप्रतिज्ञा, ब्रह्मजिज्ञासा तु विशेषप्रतिज्ञेत्येवमाशयाः,

तर्हीदमत्र स्वीकर्तव्यम्—यत् सिद्धान्तभाष्यमेवेदं "स्वाध्यायानन्तर्ये तु" इति, नतु पूर्वपक्षभाष्यमपीति। भाष्यकारा हि—"स्वाध्यायानन्तर्ये तु समानम्" इत्यादिना स्वाध्यायाध्ययनस्य कर्मविचारस्य च ब्रह्मजिज्ञासापूर्ववृत्ततानिरासमुखेन साधनचतुष्टयसंपत्तेरेव तत्त्वं साधयन्तः "स्वाध्यायानन्तर्ये तु समानम्" इति भाष्यमन्तर्णीत-पूर्वपक्षनिरासपरमेवाशरत इति नेदं कस्यापि तिरोहितम्॥

सत्यप्येवं "स्वाध्यायानन्तर्ये तु समानम्" इति भाष्यान्तर्णीत-पूर्वपक्षभाष्य-भामत्यादिग्रन्थेन शंकरभगवत्पादानामपि पूर्वोत्तरमीमांसयोरैकशास्त्र्यं सम्मतमिति यदैकशास्त्र्यमीमांसायां प्रतिवादिभयङ्करोपनामश्रीमदनन्ताचार्यस्वामिनोऽभिमन्यन्ते, तदिदं न केवलं सत्संप्रदायसंदर्भादिविरुद्धम्, किन्त्वसंभवदुक्तिकमपि॥

इयमत्रैकशास्त्र्यमीमांसा—

"स्वाध्यायानन्तर्यं तु समानमि" ति भाष्यगतसमानशब्दस्य तुल्यार्थकत्वपक्षे "अथातो धर्मजिज्ञासा" इति सूत्रगतस्य जिज्ञास्यसमर्पकस्य धर्मशब्दस्य वेदार्थमात्रपरताश्रयणे धर्ममीमांसायामिव ब्रह्ममीमांसायामप्यथशब्देन वेदाध्ययनानन्तर्यस्य तत्रैव बोधिततया न पुनर्ब्रह्ममीमांसासूत्रगतेनाथशब्देन स्वाध्यायानन्तर्यमर्थो वर्णनीय इत्येव तात्पर्यं भाष्यकृतो वर्णनीयम्। तथैव वर्णितं च भामतीकारेण। समानशब्दस्य साधारणमित्यर्थमङ्गीकृत्य वेदाध्ययनानन्तर्यं ब्रह्मविचारारम्भस्य पुष्कलं कारणमिति वदतामन्येषां टीकाकारणामाशयो यथा तथा वा भवतु, समानशब्दस्य लोकसिद्धतुल्यार्थकतामङ्गीकृत्य व्याचक्षाणस्य भामतीकारस्य तु मते "अथातो धर्मजिज्ञासा" इति सूत्रगतधर्मशब्दो वेदार्थमात्रपर इत्येव भाष्यकृदभिप्रायो भवितुमर्हति—इति।"

युक्तं चैतत्—यद् भामतीकाराः, किं बहुना? तुल्यार्थतापक्षपातिनः सर्वेऽपि टीकाकाराः भाष्यकाराश्च "स्वाध्यायानन्तर्ये तु" इति भाष्यम् "अथातो धर्मजिज्ञासे" ति सूत्रगतस्य धर्मशब्दस्य ब्रह्मसाधारण्योरीकरणेनैव प्रवृत्तं मन्यन्ते। अयमेव च सांप्रदायिको-

पि भावोऽस्य भाष्यस्य। नात्र मात्रयापि त्रुटिरैकशास्त्र्यमीमांसाकाराणामपि समस्ति। परन्तु इदमेवात्रालोचनीयम्—यदिदं भाष्यं किं पूर्वपक्षभाष्यम्? उत सिद्धान्तभाष्यमेवेति। आद्ये पूर्वपक्षिणां मतदृष्ट्या खलु धर्मपदस्य ब्रह्मसाधारण्यम्, न तु सिद्धान्तिनां दृष्ट्या। ततश्चेदमत्र सिद्धं भवति—यत् "स्वाध्यायानन्तर्यं तु समानम्" इति भाष्यमैकशास्त्र्यवादेन स्वाध्यायाध्ययनस्य पूर्वतनत्वमाशङ्क्य निराकरोति, इति कथं वा तत्रत्यपूर्वपक्षाशयनिरूपणपरभामतीग्रन्थानुसारेण पूर्वोत्तरसन्दर्भविरुद्धमैकशास्त्र्यंकल्पनं सम्भवदुक्तिकमित्यलमनेनार्धजरतीयन्यायाश्रयणेन। वस्तुतस्तु—न केवलं स्वाध्यायाध्ययनस्य, किन्तु कर्मविचारस्यापि ब्रह्मविचारपूर्ववृत्तत्वं स्पष्टमेव भाष्यकाराः प्रतिक्षिपन्ति, इति पूर्वोत्तरमीमांसयोरैकशास्त्र्यं शाङ्करभाष्यस्यापि सम्मतमिति कल्पना निरस्यतया तत्सम्मतमित्येवमाशयैव योजनीया॥

अयमाशयः—"स्वाध्यायानन्तर्यं तु समानम्" इति हि भाष्यं स्वाध्यायाध्ययनस्य ब्रह्मविचारपूर्ववृत्तत्तानिरासपरमेव, न तु तत्समर्थनपरमित्यैकशास्त्र्यमीमांसायां भामत्याद्याशय उपवर्णितः। इयमत्रैकशास्त्र्यमीमांसा—"कर्म-ब्रह्मणोर्विचारे वेदाध्ययनानन्तर्यस्य तत्रैव सूत्रे कथिततया गतार्थत्वेन "अथातो ब्रह्मजिज्ञासा" इत्यत्राप्यथशब्दस्य वेदाध्ययनानन्तर्यार्थकत्वाङ्गीकारे सूत्रमेवानारब्धव्यं भवतीति स्पष्टशब्दैः कथयतो भामतीकारस्ये"ति। सति चैवं नात्र कस्यापि विप्रतिपत्तिः—यद् येषां मते पूर्वोत्तरमीमांसयोरैकशास्त्र्यम्, तेषां मते "अथातो धर्मजिज्ञासा" इति सूत्रगतधर्मजिज्ञासयैव ब्रह्मजिज्ञासापि गतेति। इदमेवात्र विरुद्धम्—यत् शाङ्करभाष्य-भामत्यादिसिद्धान्तेऽपि धर्मजिज्ञासया ब्रह्मजिज्ञासा गतेति। अन्यथा स्पष्टशब्दैर्भाष्य-भामत्यादिषु वेदाध्ययनस्य कर्मविचारस्य च ब्रह्मविचारपूर्ववृत्ततानिरास ऐकशास्त्र्यमीमांसाया-

मप्यनूदितः कथमुपपद्यते ? अनेन च पूर्वापरविरोधीऽप्येक ऐकशास्त्र्यमीमांसायां सूच्यते ॥'

एतेन—पूर्वोत्तरमीमांसयोरेकप्रबन्धत्वाङ्गीकर्तारोऽद्वैतिनः के ? परिमलकाराः ।"समर्थितं च पूर्वोत्तरमीमांसयोरैकशास्त्र्यं नानाविधपूर्वपक्षयुक्तीनां समाधानपूर्वकं तत्रैवेति कल्पनापि—परास्ता ॥

सत्यं परिमलकारैः—"तदपि सिद्धान्ते प्रौढ्याऽभ्युपगम्य मतान्तरमिष्यन्न एव" इति प्रौढिवादेन पूर्वोत्तरमीमांसयोरैकशास्त्र्यं व्यवस्थापितम् । परन्तु नेदं मुख्यम्, किन्तु वेदार्थविचारत्वोपाधिकल्प्यं गौणमेव । अयं भावः—श्रीभाष्यमतावलम्बिभिः पूर्वोत्तरमीमांसयोरैकशास्त्र्यं कर्मविचारपूर्ववृत्ततानियामकं मुख्यं यदभिमन्यते, तदेवात्र विप्रतिपत्तिविषयः, नतु गौणम् । तत्तु प्रौढ्यापि परिमलकारैर्न व्यवस्थापितम्, प्रत्युत प्रतिक्षिप्तमपि । स्पष्टं हि परिमलकाराः—"नचैवं कर्म-ब्रह्मविचारयोरैकशास्त्र्याभ्युपगमे ब्रह्मजिज्ञासासूत्रगतस्याथशब्दस्य कर्मविचारानन्तर्यमर्थः स्यादिति वाच्यम्; भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः । न हि ज्वरादिवाजीकरणान्तचिकित्साप्रतिपादकानां वैद्यकसंहिताग्रन्थानामेकग्रन्थत्वमात्रेण तत्तच्चिकित्साप्रकरणं विचारयिष्यता ज्वरप्रकरणमारभ्यैव विचारणीयम्"—इत्यादिना कर्मविचारपूर्ववृत्तत्वमैकशास्त्र्याभ्युपगमेऽपि निरस्यन्ति । तथाच वन-सेनादीनामिवौपाधिकमेवैकत्वं परिमलकारैः साध्यते, न तु मुख्यम्, इति परिमलगतैकशास्त्र्यपदमात्रेण स्वविघातकेन कथं प्रतिवादिभयङ्करास्सन्तुष्यन्ति ? न हि वयमपि स्वतो भिन्नानां पटादिव्यक्तीनां जातितोऽप्यैक्यं नानुमन्यामहे । नापि वा मीमांसात्वेन मीमांसयोर्मीमांसानां वा पुराणत्वेन पुराणानामिव वयमप्यैक्यं प्रतिक्षिपामः ॥

एतेन—"काण्डत्रयात्मकमेकं विचारशास्त्रं चतुर्दशविद्यास्थानेष्वन्यमततया महर्षिभिः परिगणितमि" ति वाक्यमपि ऐकशास्त्र्यमीमांसागतं व्याख्यातम् ॥

न हि "पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" इति वाक्यगतानि पुराणपदवाच्यानि शैव-वैष्णवादीनि सर्वाणि पुराणान्येकः प्रबन्धः । सत्यपि तु रूपान्तरेण भेदे रूपान्तरेणाभेदो न कस्यापि विप्रतिपन्नः, इति सिद्धवेदार्थविचारत्वेन साध्यवेदार्थविचारत्वेन च पूर्वोत्तर मीमांसयोर्भिन्नशास्त्रत्वमेव, इति न ब्रह्मविचारे कर्मविचारापेक्षा, न वा कर्मविचारानन्तरो ब्रह्मविचार इत्यस्मिन्नंशे मात्रयापि परिमलकाराणामनुमतिर्वर्तते, इति नाद्वैतिनां केषामपि सम्मतमिदम्—पूर्वोत्तरमीमांसे अधिकारितो विषयतः प्रयोजनतो वाऽपृथग्भूते इति । इदमेवाभिप्रेत्यास्माभिरस्मदीयशास्त्रदीपिकाभूमिकायामेवं विवेचितम्, यत्—"वेदार्थविचारत्वोपाधिना समशास्त्रत्वे कल्पगृह्यसूत्रादिभिरपि तदापत्तिः, युक्त्यात्मकविचारत्वाभावेन तत्र भेदसाधने, प्रकृतेऽपि साध्यवेदार्थविचारत्वाभावेन भेदसिद्धिरिति निर्णयामः ।" "भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, इह तु भूतं नित्यवृत्तं ब्रह्म जिज्ञास्यमि"ति प्रतिपाद्यवैलक्षण्यं निरूपयन्तो हि भगवत्पादा ब्रह्मणो धर्मशब्दानर्हतामपि बोधयन्ति" इत्यादि । अत्र विचारपदेन निर्णयप्रयोजकग्रन्थमात्रविवक्षायामेवास्माभिर्गृह्यसूत्रादिभिरभेद आपादितः, न तु तेषामपि युक्त्यात्मकविचारत्वमपि स्वीकृत्य ॥

एतेन—कल्पसूत्र-गृह्यसूत्रादीनां वेदार्थविचारशास्त्रत्वाभावादित्यादि दूषणमनुक्तोपालम्भनमेवेति—सूचितम् ॥ धर्मशब्देन "अथातो धर्मजिज्ञासा" इति सूत्रगतेन ब्रह्मणो न ग्रहणं भगवत्पादसिद्धान्तदृष्ट्यैव, न तु मतान्तरदृष्ट्या ॥

एतेन—कर्म-ब्रह्मणोर्भव्यत्व-भूतत्वाभ्यां वैलक्षण्यमस्तु वा मा वा। धर्म-शब्दो ब्रह्मापि बोधयितुं शक्नोत्येव; तत्पदशक्यतावच्छेदकस्यालौकिक-श्रेयःसाधनत्वस्योभयसाधारण्यादित्यादिकमपि—परास्तम्; अस्या-द्वैतसिद्धान्तविरुद्धत्वात् ॥

अद्वैतमते हि निर्गुणमेव ब्रह्म "थातो ब्रह्मजिज्ञासे"ति मुख्यजिज्ञास्यतया विवक्षितम्, न तु सगुणं ब्रह्मेति सर्वविदित-मिदम्। एतावन्मात्रमत्र निष्कृष्यते—यदद्वैतमतरीत्या न धर्म-शब्दो ब्रह्मणि प्रवर्तते, इति नाद्वैतिसम्मतमिदं यत् पूर्वोत्तर-मीमांसयोरैकशास्त्र्यं नाम ॥

अत्रेदं समालोचनीयम्—यत् पूर्वोत्तरमीमांसयोरैक-शास्त्र्यम्—किं पूर्वमीमांसकदृष्ट्या साध्यते, आहोस्विदद्वैतदृष्ट्या उताहो श्रीभाष्यसिद्धान्तदिशा। कर्मापेक्षितकर्तृस्तावकतयैव वेदान्तानां पर्यवसानोरीकरणेनोपनिषदां स्वातन्त्र्येणोपासनाविधि-पराणामप्यद्वितीये सिद्धे ब्रह्मण्यतात्पर्येण जिज्ञास्यब्रह्मसमर्प-कत्वानूरीकरणेन सिद्ध-साध्यभेदेन धर्मद्वयानङ्गीकारेण च कर्म-मीमांसां द्वादशलक्षणीं षोडशलक्षणीं वातिरिच्य ब्रह्ममीमांसैव न वर्तते, इति न पूर्वमीमांसकदृष्ट्या तत्सम्भवः। इदमेव जैमिन्यभिमतमित्यत्र—"शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इति बादरायणसूत्रम्, "एतेनोपनिषदो व्याख्याताः" इत्यर्थवादाधिकरणगतोपनिषदर्थवादत्वव्यवस्थापकं तन्त्रवार्तिकं च मूलम्। अत एव—"फलमत उपपत्तेः" "धर्मं जैमिनिरत एव" इतीश्वरस्यैव फलसाधनत्वम्, नतु कर्मणोऽपूर्वद्वारेति बादरायणमतस्य कर्मण एवापूर्वद्वारा फलसाधनत्वमिति जैमिनिमतस्य च निर्देश उपपद्यते। तत्र यदि पूर्वोत्तरमीमांसयोरैकशास्त्र्यमभिसंहितं स्यात्, तर्हि विरुद्धयोः सिद्धान्तयोः पूर्वोत्तरपक्षरूपेण निर्देशोऽ-सङ्गत एव स्यात् ॥

एतेन—"जैमिनिना कर्ममीमांसावद् ब्रह्ममीमांसापिन कुतः प्रणीता ? बादरायणेन वा कर्ममीमांसा कुतो न प्रणीतेति न शङ्कनीयम् ; उभयोरुभयभागसामर्थ्ये सत्यपि प्रमेयगौरवानुसारेणैकैकभागप्रणयनोपपत्तेः । ·······यथोपकोसलायाग्नयो ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्यां चोपदिश्य प्रमेयगौरवं पश्यन्तः "आचार्यस्तु ते गतिं वक्ते" त्यब्रुवन्, तथैवात्रापि जैमिनिरन्तेवासी बादरायणेन स्वाचार्येण तत्प्रणयनं युक्तमुत्प्रेक्षमाणः सशेषमेव शास्त्रमस्थापयत । यथाच त्रिभिरग्निभिः सत्यकामेन च भागश उपदिष्टाया अप्युपकोसलविद्याया एकविद्यात्वम्, तथात्रापि जैमिनिना बादरायणेन च भागशः प्रणीतस्यापि शास्त्रस्यैक्यमुपपन्नतरमि" त्युक्तिरपि—परास्ता ; वैषम्यात् ॥

नहि जैमिनिमतनिरसनपूर्वकं प्रवृत्तस्य ब्रह्ममीमांसाशास्त्रस्य जैमिनीयेनैकत्वम्; भिन्नकर्तृकयोर्विरुद्धसिद्धान्तपरयोश्च शास्त्रयोरेकत्वे हि न किमप्युदाहरणं प्रदर्शयितुं शक्यते । सर्वथा जैमिनीयदृष्ट्या न पूर्वोत्तरमीमांसयोरेकशास्त्रत्वम्; अन्यथा "एकं वा संयोग-रूप-चोदनाख्याविशेषात्" इति पूर्वतन्त्रसूत्रेणैव गतार्थत्वात् "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि"ति सूत्रम्, पूर्वतन्त्रगतेन वेदापौरुषेयत्वाधिकरणेनैवेष्टसिद्ध्या "अत एव च नित्यत्वम्" इति सूत्रम्, पूर्वतन्त्रगतापशूद्राधिकरणेनैव कृतार्थत्वादपशूद्राधिकरणान्तरम्, बलाबलाधिकरणेनैवाभीष्टलाभात् "श्रुत्यादिबलीयस्त्वाच्च न बाधः" इति सूत्रम्, "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रेणैकशास्त्र्यमीमांसोक्तरीत्या ब्रह्मजिज्ञासाया अपि प्रतिज्ञाततत्वपक्षे तेनैव गतार्थत्वात् शास्त्रयोर्नित्वाधिकरणादिकं च वितथं स्यात् । अतोऽवश्यमिदमूरीकर्तव्यम्—यत् स्वतन्त्रमेव पूर्वमीमांसायामिवोत्तरमीमांसायामपि तानि तानि भेदादिनिमित्तन्यायशरीराणि बादरायणाचार्यैरुल्लिख्यन्त इति । व्यक्तं चैतत् परिमले कर्मविचारपूर्ववृत्ततानिरासावसर उत्तरमीमां-

सानपेक्ष्यत्वं पूर्वमीमांसायां विवेचितमिति तत एवाधिकमवगन्तव्यम् ॥

यथाचाद्वैतसिद्धान्तदृष्ट्या न पूर्वोत्तरमीमांसयोरेकप्रबन्धत्वम्, तथा सविस्तरं पूर्वमेव विवेचितम् । यानि पुनः "एक आत्मनः शरीरे भावात्" इति सूत्रगतान्यैकशास्त्र्यमीमांसासमुद्धृतानि पूर्वतन्त्रेण पौनरुक्त्यशङ्कापराणि वाक्यानि, ततो ज्ञायते यथोत्तरमीमांसायाः कुत्रचन पूर्वमीमांसापेक्षा, एवं पूर्वमीमांसाया अपि समस्ति देहातिरिक्तात्मस्वरूपनिर्णयार्थमुत्तरमीमांसापेक्षेति, इति नोपजीव्योपजीवकभावनिबन्धने पूर्वत्वोत्तरत्वे, किन्तु तत्तदवसेयफलपूर्वत्वोत्तरत्वनिबन्धने एव ते इति । तथाच न पूर्वतन्त्रेत्यादिव्यपदेशान्यथानुपपत्त्यैकप्रबन्धत्वाध्यवसायः स्थाने ॥

अयमाशयः—सत्यमस्ति पूर्वोत्तरमीमांसयोरकत्वव्यपदेशः, तत्र पूर्वमीमांसायाः प्राथम्यमुत्तरमीमांसाया उत्तरत्वमिति च, परन्तु स गौणः । तत्र कानिचन पूर्वोतरतन्त्रशेषाणिः, यथा वेदनित्यत्वादीनि, कानिचन तत्तदसाधारणानि । तत्र साधारणानां तन्त्रान्तरनिर्णीतानां सम्भवति ततोऽप्यनुसन्धानम्; अनुक्तमविरुद्धमन्यतो ग्राह्यमिति न्यायात् । ततश्च स्वाविरुद्धानां तन्त्रान्तरनिर्दिष्टानां व्यर्थं स्वस्मिन्नपि सङ्कलनमित्यभिप्रेत्यैव "एक आत्मनः शरीरे भावात्" इत्यादौ पौनरुक्त्यमाशङ्क्यते, नतु तदेकप्रबन्धत्वमभिप्रेत्य । सति चैवं शाङ्करभाष्यानुसारेणापि पूर्वोत्तरमीमांसयोरेकप्रबन्धत्वकल्पनमैकशास्त्र्यमीमांसागतं छिन्नमूलमिति सिद्धम् ॥

अथेदानीमिदमेवावशिष्यते समालोचयितुम्—यत् श्रीभाष्यमतानुसारेण पूर्वोत्तरमीमांसयोरैकशास्त्र्यं सांप्रतमुतासांप्रतमिति । अत्र च—

"उपदेशादथोक्तादिस्वारस्याद्धर्मयोगतः ।
पूर्णोपदेशतश्चैक्यं पूर्वभागोपजीवनात् ॥"

इति प्राचां संग्रहकारिकैकैव समालोचनमर्हति।

"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेन" इति सत्यमस्ति बोधायनाचार्याणामुपदेशः, परन्तु अनुपपन्न उपदेशो न वस्तुसाधनायालम्, इदमेवादौ परीक्षितव्यम्—कथमुपपद्यतेऽय-माचार्याणामुपदेश इति। अत्र प्रथमं "जैमिनीयेन षोडशलक्षणेन" इति जैमिनीयत्वं षोडशलक्षणस्य यदुल्लिखितम्, तदिदं न केवलम्—"कर्म-देवता-ब्रह्मगोचरा सोद्भौ त्रिधा सूत्रकारतः। जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतः क्रमात्" इति तत्त्व-टीकोद्धृततत्त्वरत्नाकरवचनविरुद्धम्, किन्तु—

"देवताविचारपरो महर्षिणा काशकृत्स्नेन प्रणीतः" इत्येकशास्त्र्य-मीमांसावाक्येनापि विरुद्धम्। एतेन—"तत्र च पूर्वकाण्डं विवरीतुं प्रवृत्तेन महर्षिणा जैमिनिना कर्म-देवताकाण्डद्वयघटितं पूर्वमीमांसाख्यं प्रणीतमि"ति भूमिकावाक्यस्य "देवताविचारपरो महर्षिणा काशकृत्स्नेन प्रणीतः" इत्यैकशास्त्र्यमीमांसाद्वितीयवाक्यस्य च परस्परविरोधोऽप्य-परः सूच्यते।

वस्तुतस्तु न केवलं भूमिकावाक्येनैव, किन्तु "ततश्च जैमिनिना संकर्षान्ते सूत्रैकदेशावृत्तिं कुर्वता" "एनां प्रक्रियां मनसि कलयता जैमिनिना संकर्षान्ते कृतो विशिष्टवाक्यैकदेशाभ्यासः" "जैमिनिः कां प्रक्रियामवलम्ब्य संकर्षान्ते सूत्रैकदेशाभ्यासमकरोत्" इत्यादिस्ववाक्यैरपीति नेदं कस्यापि तिरोहितम्। ततश्च बोधाय-नाचार्याणाम् येषां "जैमिनीयेन षोडशलक्षणेनेति" व्यपदेश ऐक-शास्त्र्यमीमांसा-तत्त्वटीकाद्यनुसारेण प्रामादिक एवेति प्रतिवादि-भयङ्करैरपि वक्तव्यम्, तेषामुपदेशमात्रं न तत्त्वनिर्णयाय पर्याप्तं प्रमाणम्, इति कोवाऽयं बोधायन इति न वयं जानीमः॥

ऐकशास्त्र्यं नामैकार्थगोचरशास्त्रत्वम्। तत्र कर्म-ब्रह्मभागयोः स्वतः स्वार्थबोधनसमाप्तयोरेकशास्त्रत्वं पदैकवाक्यतानिबन्धनम-

सम्भवदुक्तिकम् । वाक्यैकवाक्यत्वं तु सर्वेषां वेदवाक्यानामद्वितीये ब्रह्मणि पर्यवसानस्याद्वैतिभिरपि स्वीकारात् तस्यैकविद्यास्थानत्व-प्रयोजकत्वेऽपि कर्मविचारे ब्रह्मविचारपूर्ववृत्ततानियामकमुख्यैक-शास्त्रत्वानियामकत्वान्नाद्वैतिनामप्यनिष्टम् । "एकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वम्, किन्त्वेकप्रबन्धत्वमपीत्यभिप्रायेण संहित-त्वोक्तिः" इति वदन्तस्तत्त्वटीकाकारा अपि नैकविद्यास्थानत्वमात्र-मेकशास्त्रत्वमिति स्पष्टमेव निरूपयन्ति । अतो यावद् ब्रह्मविचा-रस्य कर्मविचारानन्तरत्वं न साध्यते, तावदेकशास्त्रत्वं न क्षोदक्षमं भवति ॥

एतेन—"वेदे स्वर-वर्ण-पाद-गीतिविभागानुपूर्व्यादीनामुपदेशगम्यत्वं सर्वसंप्रतिपन्नम्, तथात्राप्युपदेशगम्यत्वं वक्तृसंकल्पस्य नापनेयमि" त्यादि—परास्तम् ॥

नहि कर्मविचार-ब्रह्मविचारयोः साध्य-साधनभावादिकं याग-स्वर्गादिसाध्य-साधनभावादिकमिवोपदेशमात्रगम्यम्, अन्वय-व्यतिरेकप्रमाणगम्यं तदिति खलु भवतां मतम् । यथाच विनापि कर्मविचारं ब्रह्मविचारः, नतु नियतानुपूर्वीरूपेणैव विचारः कर्तव्य इति च नियमः, तथा ज्वर-चिकित्सादिविचारनिदर्शनेन परिमला-नुसारेण पूर्वमेव विवेचितम् ।

एतेन—"द्वादशलक्षण्यभ्यासेन कर्मणामल्पास्थिरफलत्वं निश्चिनवता तत एव तज्जातीयाल्पास्थिरफलकर्मसु विरज्यमानस्य विचारितकर्मा-पेक्षया विलक्षणफलककर्मविचारस्य भावित्वेन सूचनं तत्रावश्यकमिति "अथातो ब्रह्मजिज्ञासा" इति शास्त्रारम्भः" इति समुल्लेखोऽपि—परास्तः; बाधितत्वात् ॥

नहि द्वादशलक्षण्यां कुत्रापि कर्मफलास्थिरत्वं व्यवस्थापितम्, येन तदभ्यासेन कर्मणामल्पास्थिरफलत्वनिर्णयः, तन्निबन्धनो वा विरागः स्यात् । ब्रह्ममीमांसातृतीयाध्यायेन खल्वधीतेन विराग-

समुत्पत्तिः, नतु द्वादशलक्षण्यभ्यासेन। इदमेव खलु श्रीभाष्यकाराणामपि मतम्। तदुक्तम्—"तत्र कर्मविधिस्वरूपे निरूपिते" इति श्रीभाष्यव्याख्यावसरे श्रुतप्रकाशिकायाम्—"तत्र केवलं कर्म विधिस्वरूपं विचारितम्,अल्पास्थिरफलत्वज्ञानमावृत्तिविधानादिना फलितम्" इति। तथाच ब्रह्ममीमांसातृतीयाध्यायाध्ययनं विना द्वादशलक्षण्यभ्यासमात्रेण कर्मणामल्पास्थिरफलत्वनिर्णयासंभवाद् द्वादशलक्षण्याख्यकर्मविचारनियमस्य ब्रह्मविचारपूर्ववृत्तता बाधितैव॥

एतेन—"अथातो ब्रह्मजिज्ञासा" इत्यथशब्दस्वारस्यादपि पूर्वोत्तरमीमांसयोरैकग्रन्थ्यं सिद्ध्यति। तथाहि—अथशब्दस्य स्वपूर्ववाक्यस्थधातुतात्पर्यविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नक्रियानन्तर्ये शक्तिरिति सर्वसम्प्रतिपन्नम्। प्रकृते च कर्ममीमांसारूपवाक्यघटककर्तव्येतिधातुतात्पर्यविषयधर्मविचाररूपक्रियानन्तर्यं ब्रह्ममीमांसायां बोध्यते"

इत्युक्तिरपि—परास्ता॥

सूत्रघटकस्याथशब्दस्यानन्तर्यार्थकस्य स्वविषयवाक्योपात्तप्रयोजकानन्तर्यबोधकत्वं हि "अथातो धर्मजिज्ञासा" इति सूत्रे क्लृप्तम्। अत्र हि विचारप्रयोजकत्वं वेदाध्ययनस्य विचारविधिगम्यस्यैव, इति तस्यैवानन्तर्यप्रतियोगित्वमुभयसम्प्रतिपन्नम्। सन्दिग्धवाक्यनिर्णयार्थेषु सूत्रेष्वेतादृशशैल्यादरणमेव हि साम्प्रतम्, इति ब्रह्मजिज्ञासाविधिपरेषु गुणोपसंहारन्यायेन सर्वेषु "आत्मा वा अरे द्रष्टव्यः" इत्यादिषु वाक्यशेषाम्नातसाधनचतुष्टयसम्पत्त्यानन्तर्यमेवाथशब्दार्थ इति युक्तम्, नतु कर्मविचारानन्तर्यम्॥

नहि "अथातो धर्मजिज्ञासे"त्यादिद्वादशलक्षण्यादिप्रणयनानन्तरमेव बादरायणेन ब्रह्ममीमांसा प्रणीता, नतु ततः पूर्वमिति श्रीभाष्यानुसारिणो वर्णयितुमर्हन्ति, येन "अथातो धर्मजिज्ञासा" इति प्रथमप्रतिज्ञा स्यात्। अस्मिन् प्रसङ्गे—

"ननु यद्यैकशास्त्र्यं कर्म-ब्रह्मविचारयोः, तर्हि उपक्रमे साधारणोऽर्थः प्रतिज्ञायेत—"अथातो वेदार्थजिज्ञासा" इति; नचैवं प्रतिज्ञातम्, किन्तु

पूर्वभागासाधारण एव प्रतिज्ञातः—"अथातो धर्मजिज्ञासा" इति; अत्र ब्रूमः—"ब्रह्ममीमांसेत्येवाभयभागसाधारणार्थप्रतिज्ञा, कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन सङ्गतः। ब्रह्मविचारान्तर्भावेऽपि पृथक्करणमुपपद्यते, यथा निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः" इत्यादिश्रुतप्रकाशिकावाक्यान्यपि नानुल्लेखयोग्यानि ॥

एतैर्हि वाक्यैरिदं स्पष्टमवगम्यते—यत् "अथातो धर्मजिज्ञासा" इति न प्रथमप्रतिज्ञा, न वा धर्मपदं धर्म-ब्रह्मोभयसाधारणम्, किन्तु "अथातो ब्रह्मजिज्ञासा" इत्येव प्रथमप्रतिज्ञा, तथा द्वादशलक्षण्याः षोडशलक्षण्या वा ब्रह्ममीमांसाचतुर्थपादशेषत्वेनैवैकशास्त्र्यवाद इति ॥

तथाच यावद् द्वादशलक्षण्याः षोडशलक्षण्या वा तृतीयाध्यायचतुर्थपादशेषत्वे नोपक्षिप्यते किमपि प्रमाणम्, तावदैकशास्त्र्यप्रतिज्ञा प्रतिज्ञैव केवलम्, न स्वार्थसाधिका। इदमेवात्र विवक्षितम् —यदथशब्दस्वारस्याद् न कर्म-ब्रह्मविचारयोरेकप्रबन्धत्वमिति। इदमेवाभिप्रेत्योक्तमस्माभिरस्मदीयशास्त्रदीपिकाभूमिकायाम्—"अथातो धर्मजिज्ञासे"ति धर्मविचारप्रतिज्ञानमपि ब्रह्माविषयकं पूर्वोत्तरयोस्तन्त्रयोर्भेदमवगमयति" इति। अन्यथा हि "जन्माद्यस्य यतः" इति पृथग् ब्रह्मलक्षणं वितथमेव स्यात्। न केवलमियदेव, किन्तु शास्त्रयोनित्वाधिकरणापशूद्राधिकरणादिकं बहु पुनरुक्तं भवति ॥

तदयं निष्कर्षः—यद् न शाङ्करमतानुसारेण मीमांसकमतानुसारेण श्रीभाष्यमतानुसारेण वा जैमिनीयकर्मविचारानन्तर्यम् "अथातो ब्रह्मजिज्ञासा"इति सूत्रेऽथशब्दस्यार्थः। न हि श्रीभाष्यसिद्धान्ते देवतानामपि जैमिनीयकर्मविचारानन्तरमेव ब्रह्मविचार इति कल्पना सम्भवति। यथाच देवनानां न स्वाध्यायाध्ययनाधिकारिता, ब्राह्मणत्वाद्यभावात्; तथाऽन्यत्र व्यक्तम् ॥

ततश्चाधिकारिभेदाद् विषयभेदात् प्रयोजनभेदाच्च भिन्नशास्त्रत्वमेव तयोर्नैकशास्त्रत्वमिति सिद्धम्। सत्यप्येवं कुत्र कुत्रचन मीमांसात्वेन विद्यास्थानत्वेन वा पुराणत्वेन शैव-वैष्णवपुराणादीनामिवौपाधिक एकत्वव्यपदेशस्तु नास्माभिरपि वार्यते। प्रतिपाद्यैकत्वनिबन्धनः खल्वेकत्वव्यपदेशोऽस्माभिर्वार्यते। इदमेवाभिप्रेत्य शङ्करभगवत्पादाः सर्ववेदान्तसिद्धान्तसंग्रहे संगृह्णन्ति—

"चतुर्दशसु विद्यासु मीमांसैका गरीयसी।
विंशत्यध्याययुक्ता, सा प्रतिपाद्यार्थतो द्विधा॥" इति।

अत्र हि स्पष्टं प्रतिपाद्यवैलक्षण्येनैव मीमांसयोर्वैलक्षण्यं सत्यपि मीमांसात्वेनैकत्व इति विवेचितम्। सति चैवं यदैकशास्त्र्यमीमांसायाम्—

"भगवान् शङ्कराचार्यश्च सर्ववेदान्तसिद्धान्तसंग्रहे—
"चतुर्दशसु विद्यासु मीमांसैका गरीयसी।
विंशत्यध्याययुक्ता, सा प्रतिपाद्यार्थतो द्विधा॥"
इति विंशत्यध्याययुक्ताया मीमांसाया एकत्वं कथयंस्तन्मतावलम्बिनां मुखानि मुद्रयती" त्युक्तम्, तदिदम् "प्रतिपाद्यार्थतो द्विधा" इत्यत्र दृष्टिपातनिवारणेन धूलिक्षेपणमेव, नतु वस्तुस्थितिकथनम्॥

अत्र प्रतिपादितः प्रतिपाद्यभेदो नावान्तरविषयभेदः, किन्तु स्वरूपतः प्रमाणप्रवृत्तिप्रकारतश्चात्यन्तविलक्षणविषयभेद इति भगवत्पादभाष्यदर्शिनां न परोक्षम्। तदुक्तं भाष्ये—"भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, इह तु भूतं ब्रह्म जिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम्। चोदनाप्रवृत्तिभेदाच्च; या हि चोदना धर्मस्य लक्षणम्, सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति, ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलम्" इत्यादि। तदिदं सिद्धम्—यदथशब्दस्वारस्यं शास्त्रभेद एव न तदैक्य इति॥

यथा 'तदुक्तमि'त्यादिनिर्देशः समान एव तन्त्रे न्यायविशेषाणां शास्त्रभेद एवोपपन्नः, यथाच न पूर्वोत्तरयोस्तन्त्रयोर्नोपजी-

क्योपजीवकभावः, यथा वा पूर्वमीमांसायामेव पूर्णोपदेशः, तथा सर्वमिदमैकशास्त्र्यमीमांसादिगतानां सर्वासामापत्त्यादीनां समालोचनपूर्वकं व्यक्तमस्मदीयशास्त्रभेदमीमांसायां विशदीकृतं विस्तरभयात्तु नात्र सर्वमनूद्यते ॥

यत्तु—"सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" इति सूत्रम्, अत्र श्रीभाष्यकाराः श्रवण-मननाभ्यामर्थान्तरभूतं मौनं नामोपासनावलम्बस्य पुनः पुनः संशीलनं विद्याङ्गतया विधीयते। बाल्यं तु स्वभावानाविष्काररूपम्—"अनाविष्कुर्वन्नन्वयात्" इत्यनेन बोध्यते। पाण्डित्यं नाम श्रवण-मननाभ्यां ब्रह्मस्वरूपावगम इति—विवृण्वते। अद्वैतभाष्यकारा अपि नात्र विपरीताशयाः ॥

तदिदं सिद्धम्—यत् सर्वापेक्षाद्यधिकरणानां शम-दमादिनियतपूर्ववृत्तत्वनिरूपण एव तात्पर्यम्, नतु कर्म-तद्विचारपूर्ववृत्तत्वनिरूपण इत्येव सूत्राशयोऽवगन्तव्यः—इति। नहि श्रीभाष्यमतेऽपि कर्मणां वाक्यार्थज्ञान उपयोगः, किन्तु ततोऽन्यत्रैव ध्रुवानुस्मृतौ" इति वाक्यार्थविचाररूपब्रह्मविचारपूर्वतनत्वं कर्मविचारस्य, तत्रापि जैमिनीयकर्मविचारस्य न लेशतोऽपि वर्तते, इति "अथातो ब्रह्मजिज्ञासे" त्यत्राथशब्दविवरणम्—"ननु कर्मावबोधानन्तर्यं तु विशेषः, न; धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरि"त्याद्याकारं शंकरभगवत्पादानामेव तृतीयाध्यायचतुर्थपादाद्यनुगुणं वर्तते ॥

अत्र ननु—"कर्मावबोधानन्तर्यम्" इति "यज्ञेन दानेने"ति वाक्यानुसारेण "सर्वापेक्षा चे"ति सूत्रानुसारेण च पूर्वपक्षः। सिद्धान्तस्तु—"अग्नीन्धनाद्यनपेक्षे"ति सूत्राद्यनुसारेण कर्मणां न सर्वाधिकारिसाधारण्येनोपयोग इति सूत्रकाराशयानुसारेणेति सुष्ठु लगति। श्रीभाष्यविवरणं तु न केवलं सूत्राशयाननुगुणम्, किन्तु पूर्वोक्तरीत्या जैमिनीयकर्मविचारस्यापि श्रुतप्रकाशिकोक्तरीत्या

ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादशेषत्वादिबहुकल्पनाभूयिष्ठमपि वर्तते ॥

यत्तु नित्यानित्यवस्तुविवेकादेर्विचारानन्तरस्य विचारपूर्वतनत्वायोग इत्याक्षेपः, सोऽद्वैत्यभिमतस्य तत्पदार्थस्य सामान्यतो नित्यमस्तीतिज्ञानसहकृतस्य विशेषतोऽनित्यमिदमिति निश्चयाभ्यासरूपस्य विज्ञाने सम्यक् संपादिते निरवसरो भविष्यतीति दृढोऽयमस्माकं विश्वासः। स्पष्टं चास्माभिरद्वैतदीपिकायामिदं विवेचितम्। एतावता विवक्षितः सारांशोऽयमेव—यत् अथशब्दविवरणमप्यद्वैतिनामेव सूत्रकारहृदयस्पृक्, न तु श्रीभाष्यकाराणाम्, इति तन्मत एव कर्मविचारस्य तृतीयाध्यायतुरीयपादशेषत्वादन्योन्याश्रयः, यदि तृतीयाध्यायचतुर्थपादाध्ययनं विना न वैराग्यादिकमिति स्यात्। वयं तु पश्यामः—प्रत्यक्षानुमानाभ्यामेव धर्मार्थकामानामनित्यत्वावगमात् तत्सिद्धार्थानुवादमात्रत्वात् साधनाध्यायगतकर्मफलानित्यत्वादिविचारस्य ब्रह्मनित्यत्वनिर्णयस्यावश्यकत्वेऽपि तन्निर्विशेषत्वविवेकस्यानपेक्षणाच्च नान्योन्याश्रयशङ्काऽद्वैतमते—इति ॥

अथ महापूर्वपक्षग्रन्थेन संगृहीता अद्वैतसिद्धान्ता इम एव—(१) निर्विशेषब्रह्ममात्रसत्यत्वम्, (२) प्रपञ्चमिथ्यात्वम्, (३) उभयत्र प्रमाणानि श्रुति-ब्रह्मसूत्र-विष्णुपुराणादिवचनानि, (४) मिथ्यात्वलक्षणम्, प्रपञ्चस्य शुद्धब्रह्मणि निर्विशेषे दोषकल्पितत्वोपपादनम्, (५) आवरण विक्षेपशक्तिमदविद्याया दोषत्वेन निरूपणम्, (६) अविद्यायां श्रुतिप्रमाणनिर्देशः, (७) ब्रह्मण एव निर्विशेषस्याविद्यया तिरोहितस्वरूपस्य भ्रान्तत्वोपपादनम्, (८) तत्र विष्णुपुराणादिप्रमाणनिर्देशः, (९) अविद्याया निर्विशेषब्रह्मज्ञाननिवर्त्यत्वम्, (१०) तत्र प्रमाणनिर्देशः, (११) आगमस्य प्रत्यक्षविरोधेनाप्रामाण्यशङ्का-तत्परिहारौ,(१२) सगुणवाक्याद् निर्गुणवाक्यप्राबल्योपपादनम्, (१३) सत्यज्ञानादिसामानाधिकरण्यस्याद्वैताभिमतनिर्विशेषात्मवाद एव स्वारस्योपपादनम्,

(१४) वेपदलाक्षणिकत्वसमर्थनम्, (१५) शास्त्र-प्रत्यक्षयोः प्रपञ्च-मिथ्यात्वेऽप्यविरोधसमर्थनम्, (१६) सर्वस्य भेदव्यवहारस्य भ्रान्ति-मूलत्वव्यवस्थापनम्, (१७) ब्रह्मसत्यत्व-प्रपञ्चमिथ्यात्वानुमानद्वय-निर्देशः, (१८) सदनुभूतित्वसमर्थनम्, (१९) अनुभूतिस्वप्रकाशत्व-समर्थनम्, (२०) अनुभूतिनित्यत्वसमर्थनम्, (२१) अनुभूतिनानात्व-निरासः, (२२) अनुभूत्यात्मत्वसमर्थनम्, (२३) ज्ञातुरनात्मत्वसम-र्थनम्, (२४) अहमर्थानात्मत्वव्यवस्थापनं च ॥

तत्र प्रथमं श्रीभाष्यकाराः—निर्विशेषब्रह्मणोऽप्रामाणिकत्वं व्यवस्थापयितुं महासिद्धान्तोपक्रमे प्रमाणानां सविशेषवस्तुविषयकत्वं नियतं व्यवस्थापयन्ति ॥

अयमेतेषामाशयः – प्रमाणानि हि वस्तुविषयाण्येवेति मत-द्वयसंप्रतिपन्नम्। वस्तु तु प्रामाणिकविशेषविशिष्टत्व एव सिद्ध्यति, नान्यथा। अत एव वस्तुमात्राभ्युपगमे सत्यपि विधाभेददर्शनमुप-पद्यते; "सत्यं ज्ञानमनन्तं ब्रह्मे"ति सत्यत्वादिविशेषप्रतिपत्तेः। नहि कदापि निर्विशेषवस्त्वनुभवः प्रामाणिकः, स्वाप-मूर्च्छादिष्वपि सविशेष एवात्मा ज्ञाताऽवभासते, इत्यहमर्थात्मत्वसमर्थनावसरेऽधिक-मुपपादयिष्यते। न केवलमियता; किन्तु परमात्मनो जीवात्मनो वा स्वप्रकाशत्वानुपपत्तिरपि सविशेषविषयत्वमेव सर्वेषामनुभवाना-मिति ख्यापयति। ज्ञातुर्विषयप्रकाशकत्वं हि धियः स्वप्रकाशत्वम् —अनुभवदशायां ज्ञातुः सविशेषस्य विषयस्य भानं विना नोप-पद्यते। निर्विशेषत्वं हि सर्वविशेषराहित्येन वा? कतिपयविशेषरा-हित्ये न वा? आद्ये तु बाधः; सत्यत्वादिविशेषाङ्गीकारात्, द्वितीये तु न निर्विशेषत्वम्; कतिपयविशेषवत्त्वेनैव सविशेषत्वोपपत्तेः। नहि सर्वविशेषवत्त्वं नाम सविशेषत्वं कुत्राप्यनुभवविषये सम्भ-वति। इदमहमदर्शमिति हि सर्वेषां सविशेषविषय एवानुभवः, अतः सर्वेषां प्रमाणानां सविशेषविषयत्वं नियतम् ॥

शब्दप्रमाणस्य पदार्थद्वयसंसर्गावगाहिनः सविशेषविषयत्वं न कथमपि दुरपह्नवम्; यतः प्रकृति-प्रत्यययोगेन पदत्वं पदसङ्घातरूपत्वेन वाक्यत्वं चार्थयोर्विशिष्टयोः प्रतिपादनमन्तरा न सम्भवति, इति पदस्य वाक्यस्य वा निर्विशेषवस्तुप्रतिपादनसामर्थ्यासम्भवाद् न निर्विशेषे वस्तुनि शब्दः प्रमाणतामर्हति ॥

प्रत्यक्षं तु द्विविधमपि सविकल्पक-निर्विकल्पकभेदेन विभिन्नं सविकल्पकस्य सविशेषविषयकत्वध्रौव्यात्, निर्विकल्पस्यापि प्रथमपिण्डग्रहणरूपस्य सर्वविशेषविरहितविषयकत्वासम्भवेन कथंचन सविशेषविषयत्व एव पर्यवसानाद् न निर्विशेषे वस्तुनि प्रमाणम् ॥

अयमाशयः—विशेषस्य पिण्डानुवृत्ततया प्रतीत्या सविशेषविषयत्वम्, नतु विशेषविषयीकरणमात्रेण, येन निर्विकल्पासिद्धिः स्यात्। तथाच गोत्वाद्यनुवृत्तौ प्रतीयमानायां द्वितीयगोपिण्डग्रहणं सास्नादिमद्गोस्वरूपज्ञानं सविकल्पकम्, तस्यामप्रतीयमानायां सास्नादिमद्गोव्यक्तिज्ञानं निर्विकल्पकमिति निर्विकल्पकज्ञानेऽपि विशेषप्रतिभानस्याविशेषाद् निर्विशेषं कथं निर्विकल्पकप्रत्यक्षेणावसेयम्? संस्थान-संस्थानिनोरेकेन्द्रियग्राह्यत्वाविशेषे संस्थानेन विना संस्थानिमात्रग्रहणस्यासम्भवदुक्तिकत्वात्—इति ॥

इदमत्राद्वैतिनो मन्यन्ते—यत्र संस्थान-संस्थानिनोरेकप्रमाणविषयत्वम्, तत्र तत्तत्प्रमायाः सविशेषविषयकत्वमास्ताम्, यत्र तु संस्थान-संस्थानिनोर्भिन्नप्रमाणविषयत्वम्, तत्र संस्थानिविषयकेण प्रमाणेन संस्थानज्ञानमपि जन्यत इति नेदं सम्भवति। तथाच शाब्दापरोक्षवादिनामस्माकं तात्पर्यवृत्त्या स्वरूपमात्रपराणां वाक्यानां विशिष्य चास्थूलादिवाक्यानां विशेषसामान्यनिषेधपराणां कथं न निर्विशेषप्रत्यक्षजनकत्वम्? तथाच प्रत्यक्षस्य शाब्दस्य निर्विशेषवस्तुनि प्रामाण्यं न शक्यापह्नवम्। ऐन्द्रियकत्वमेव प्रत्यक्षस्येति मतेऽपि संस्थानि-

सन्निकर्षदशायां संस्थानसन्निकर्षोऽपि न नियत इति स्वीकर्तुं शक्यते; अन्यथा 'रूपी घटः' इति रूपप्रत्यक्षतादशायां तत्परिमाणादेरपि प्रत्यक्षत्वमापद्येत ? तथाचैकेन्द्रियग्राह्यत्वाविशेषेऽपि यथा रूपप्रत्यक्षतादशायां न परिमाणप्रत्यक्षनियमः, एवं संस्थानिप्रत्यक्षतादशायां न संस्थानप्रत्यक्षनियमः, इति न प्रत्यक्षस्य सविशेषवस्तुविषयत्वनियमः। घटमात्रं भासताम् , न घटत्वादिकम्, ज्ञात्रादिकं वेतीच्छायां सत्यां घटमात्रानुभवो हि प्रमाणासिद्धो न कथमपि बाधमर्हति। तथाच तत्त्वमस्यादिवाक्यानि यदि तात्पर्यानुपपत्त्या स्वरूपचैतन्यमात्रं लक्षणया बोधयन्ति, तर्हि कथं नाम तेषां न निर्विशेषवस्तुविषयकत्वम् ? वस्तुतस्तु—प्रकारता-विशेष्यताद्यनवगाहित्वेनैव ज्ञानानां निर्विकल्पकत्वम् , इति हि सर्वदर्शनसिद्धान्तः, नतु धर्मानुवृत्त्यभावमात्रेण प्रथमपिण्डग्रहणेन। अयं हि श्रीभाष्यकाराणां स्वसिद्धान्तानुगुण्यार्थं कल्पनाविशेषः। तथाचोक्तविधनिर्विकल्पवादोऽयं नाद्वैतदर्शनमात्रविरुद्धः, किन्तु सर्वदर्शनविरुद्धः। बाल-मुग्धादिविज्ञानमपि प्रकारताविशेष्यताद्यनवगाहनेनैव निर्विकल्पकम्। तथाचानुमानादिजन्यानुभवानामद्वैत्यभिमतनिर्विकल्पकत्वाभावेऽपि शाब्दानुभवस्य प्रत्यक्षस्य च न निर्विशेषवस्तुनि न प्रामाण्यम्। सन्ति हि सजातीय-विजातीय-स्वगतभेदरहितनिर्विशेषबोधकानि बहूनि प्रमाणानि। नहि कतिपयविशेषाभावपरतया तेषां नयनं सम्भवद्युक्तिकम्। यथाच—निर्गुणवाक्यानां "विशोको विजरो विमृत्युरि" त्यादिविशेषनिषेधवाक्यैर्नोपसंहारः, "न हिंस्यात् सर्वा भूतानि" इत्यादिवाक्यानां "न ब्राह्मणं हन्यात्" नात्रेयं हन्यादि" त्यादिवाक्यैरिव, तथा स्वावसरे विशदमुपपादयिष्यामः। तथाच प्रामाणिकविशेषविशिष्टमेव वस्त्विति नेदं वस्तुलक्षणम् , किन्तु प्रामाणिकत्वम्, अबाधितस्वरूपत्वं वा वस्तुत्वम्; अन्यथा विशेषाणामपि विशेषान्तर-

कल्पनाप्रसङ्गेनानवस्थाप्रसङ्गः। यथाच "सत्यं ज्ञानमि"त्यादिवाक्यानि स्वरूपमात्रपराणि; असत्यादिव्यावृत्तेरेव सत्यादिशब्दार्थत्वात्, कल्पितेन वा सत्यत्वादिना सत्यादिपदप्रवृत्तेः, तथाऽन्यत्र व्यक्तम्। कल्पतेन विशेषेण सविशेषत्वमपि कल्पितमेव, इति न पारमार्थिकनिर्विशेषब्रह्मवादस्य सत्यादिवाक्यं विरुद्धम्। नहि निर्विशेषवस्त्वनुभवः कदापि नास्ति; स्वाप-मूर्च्छादिषु तत्सत्त्वात्। यथा चैतत्, तथोत्तरत्र स्पष्टीभविष्यति। वस्तुतस्तु स्वप्रकाशत्वादात्मरूपस्य ज्ञानस्य नात्मज्ञानं प्रमाणजन्यम्। अविद्यानिवर्तकवृत्तिजननमात्रेण प्रमाणव्यापारस्योपक्षीणत्वेन चैतन्यप्रकाशस्य घटादिप्रकाशस्येव प्रमाणव्यापारानधीनत्वेन स्वप्रकाशचैतन्यं निर्विशेषं स्वत एव सिद्धम्, इति कथं निर्विशेषस्वरूपचैतन्यासिद्धिः? स्वप्रकाशत्वं हि स्वव्यवहारे स्वेतरचिदनपेक्षत्वमेव, नतु स्वस्मै विषयप्रकाशत्वमित्यपि स्वप्रकाशताप्रस्तावे व्यक्तं भविष्यति। नहि कतिपयगुणशून्यत्वेन कतिपयविशेषराहित्येन वा निर्गुणादिपदं प्रवर्तते, सर्वस्य निर्गुणादिपदबोध्यत्वापत्त्या निर्गुणपदस्याव्यावर्तकत्वापत्तेः। सति चैवं विशेषसामान्याभावेनैव निर्विशेषत्वम्, नतु कतिपयविशेषाभावेन, इति न पूर्वोक्तनिर्विशेषत्वविकल्पाद्यवसरः, इति निर्विशेषमेव वेदान्तप्रमाणगम्यम्, नतु सविशेषम्; तस्योपास्यतया विवक्षितस्य पारमार्थिकत्वनैयत्याभावात, "एकमेवाद्वितीयमि" त्यादिना सविशेषब्रह्मणोऽपि जीवेश्वरादिवद् बाध्यत्वावगमात्। निर्विशेषं तु ब्रह्म सर्वाधिष्ठानभूतं न केनापि ज्ञानेन बाध्यतया कुतोऽपि वाक्यतोऽवगम्यते, इति तदेव पारमार्थिकम्, तदन्यत्तु सर्वं मिथ्येत्यद्वैतसिद्धान्त एव स्वरसः, निर्विकल्पस्वरूपविशेषादिस्वकपोलकल्पितकल्पनाविशेषाणामभावात्॥

इदमित्येव हि निर्विकल्पज्ञानाकारः, नत्विदमित्थमिति प्रकारविशेषविषयतापि। नहि सर्वं ज्ञानं "प्रथमं सकलेतरव्यावृत्तमेव

गोचरयतीति नियमः। नियमेऽपि व्यावृत्तेरप्यनुयोगिस्वरूपत्वेन गात्वादिसंस्थानविशेषस्यैव व्यावृत्तित्वमित्यनङ्गीकारात् सकलेतरव्यावृत्तवस्तुविषयकं किमपि निर्विकल्पकज्ञानं न सविशेषविषयकम्। अस्तु वा गोत्वादिसंस्थानविशेष एव व्यावृत्तिः, एवमपि तस्योपलक्षणतयापि व्यवर्तकत्वसम्भवात्—सर्वत्र विशेषण-विशेष्यभावनिबन्धनाया एव भेदप्रतीतेरनावश्यकत्वात् सकलेतरव्यावृत्तविषयकमपि निर्विकल्पकज्ञानं न सविशेषविषयमित्यूरीकर्तव्यम्। यथाच—"नैकस्मिन्नसंभवात्" इत्यस्य सूत्रस्येदमित्थमित्येव प्रतीत्याकारसमपर्कत्वं न सम्भवति, तथाऽन्यत्र व्यक्तम्। तथाच कल्पितानां विशेषाणामूरीकरणेऽपि इत्थमित्येव प्रतीत्याकारस्वीकारेऽपि च—"नेति ने"त्यादिवाक्याद् निर्विशेषसिद्ध्यां तु न कोऽपि विरोधो व्याहतिर्वा ॥

एतावता प्रपञ्चेन निर्विशेषस्यापि प्रामाणिकत्वं व्यवस्थापितम्, सांप्रतं निर्विशेषस्यैव प्रत्यक्षानुभवविषयत्वमिति व्यवस्थाप्यते॥

अयमाशयः—सन्मात्रग्राह्येव प्रत्यक्षम्, न भेदविषयं विशेषविषयं वा; यतो विशेषो भेदो वा दुर्निरूपत्वादनिर्वचनीयत्वेन मिथ्यात्वाद् अधिष्ठानसम्बन्धितयैव प्रतीयते, इति सर्वं सविशेषप्रत्यक्षमधिष्ठानांशे स्वतः प्रमात्वेऽपीदं रजतमित्यादिज्ञानवद् विशेषांशे भ्रमरूपमेव, इति प्रत्यक्षप्रमाया निर्विशेषचैतन्यमात्रमेव विषयः, न विशेषः। सत्तादात्म्यमेव घटादीनां घटत्वादिजातिर्नाम, इति जातिविशिष्टस्यैव प्रत्यक्षविषयत्वेऽपि न जात्याद्यंशे प्रत्यक्षस्य प्रामाण्यसंभवः। तदुक्तम्—सम्बन्धभेदात् सत्तैव भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः। सा जातिः सा परा सत्ता तामाहुस्त्वतलादयः।" इति ॥

एतेन—जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाद् जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाद् न केवलं

भिन्नविषयत्वम्, किन्तु निर्विशेषवस्तुविषयकत्वाभावोऽपीति—परास्तम् ॥

अनेन हि घट-पटादीनां कल्पितानां विभिन्नानां भेदव्यवहारहेतुरेव व्यवस्थाप्यते, नतु सद्रूपेप्येकरूपे; तत्र भेदव्यवहारस्यैवाभावात्। घट-पटादिकं तु पूर्वोक्तप्रकारेण कल्पितत्वाद् भ्रमज्ञानस्यैव विषयः; नतु प्रमाज्ञानस्य, इति प्रत्यक्षप्रमायाः सन्मात्रविषयत्वं जात्यादिविशिष्टनया घटादिभेदव्यवहारोपपादनेऽपि कथं विरुद्धं भवति ?

अयमाशयः—कार्य-कारणयोरनन्यत्ववादिनो ह्यद्वैतिनः कारणात्मनैव कार्याणामभेदं मन्यन्ते, नतु कार्यात्मनाऽपि। तदुक्तम्—"हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा" इति। तथाच सद्रूपेणाभेदेऽपि सर्वेषां प्रपञ्चानां तत्तत्कार्यरूपेण भेदस्यापि विद्यमानत्वाद् 'घटोऽस्ति' 'पटोऽस्तीति विशिष्टविषयाऽपि प्रतीतिर्न विरुद्ध्यते—'इदं रजतम्' 'अयं सर्पः' इति प्रतीतिरिव। इदंत्वं हि सामान्यं शुक्ति-रज्ज्वनुगतमेकमेव, सर्प-रजते एव भिन्ने, इदंत्वेन रजत-सर्पयोरभेदे सत्यपि तु यथा—'इदं रजतमस्ति' 'अयं सर्पोऽस्ती'ति भेदव्यवहारोऽपि न विरुद्ध्यते, एवमत्राप्यनुसन्धेयम् ॥

एतेन—सन्मात्रविषयकत्वे प्रत्यक्षस्य 'घटोऽस्ति' 'पटोऽस्ती'ति विशिष्टविषया प्रतीतिर्विरुद्ध्येतेति परस्तम्। एतेन—सन्मात्रग्राहित्वेऽपि प्रत्यक्षस्य, अश्वार्थिनो महिषादिदर्शने निवृत्तिरपि—व्याख्याता; भ्रान्तिगृहीताश्व-महिषादिभेदस्याद्वैतिभिरपि स्वीकारेण सर्वदोषपरिहारात् ॥

यथाच सन्मात्रस्य नीरूपस्य प्रतिनियतेन्द्रियाग्राह्यस्य सर्वेन्द्रियग्राह्यस्य सर्वप्रमाणविषयस्य वा चाक्षुषप्रत्यक्षविषयत्वम्, यथावा प्रत्यक्षगम्यत्वेऽपि सद्रूपस्याखण्डस्वरूपचैतन्यस्य सच्चिदानन्दरूपेणावृतस्यासत्त्वाभानानानन्दापादकावरणशक्तित्रयनाशद्वाराऽज्ञातार्थबोधकत्वेन वेदान्तानां प्रामाण्योपपत्तिः, तथाऽन्यत्र व्यक्तम्। तदुक्तं ब्रह्मसिद्धौ—"सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यव-

स्थिते। प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते। प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः। मानान्तरस्येति मतमाम्नायैकनिबन्धनम्।" इति। ततश्च सन्मात्रस्य प्रत्यक्षावगाह्यत्वेऽपि न श्रीभाष्योक्तरीत्या वेदान्तानामनुवादकत्वम्। अधिकं च न्यायरत्नावलीतोऽधिगन्तव्यम्—यत्र सत्यादिवाक्यतोऽनन्तरप्रवृत्तत्वेऽपि तत्त्वमस्यादिवाक्यानां स्वरूपचैतन्यमात्रपर-तदाद्यनेकपदघटितानां नानुवादकत्वम्, किन्त्वनधिगतार्थबोधकत्वमिति विशदीकृतम्॥

सन्मात्रं च ब्रह्म वृत्तिव्याप्यमेव मन्यतेऽद्वैतिभिः, नतु फलव्याप्यम्, इति न घटादिवद् ब्रह्मणः प्रमेयत्वं जडत्वादिकं वा श्रीभाष्यापादितमत्रावसरति। तदेवं सन्मात्रावगाह्येव प्रत्यक्षम्, तच्चानुगतत्वात् सर्वप्रत्ययवेद्यत्वाद्वा परमार्थम्। सन्, परमार्थः, अनुवर्तमानत्वात्, इति व्यवस्थापितम्, सांप्रतं तदतिरिक्तप्रपञ्चमिथ्यात्वमुपपादयामः॥

अत्र श्रीभाष्यकाराः—घटादीनां व्यावर्तमानत्वेन मिथ्यात्वसाधनमिदं न संभवदुक्तिकम्। व्यावर्तमानत्वं हि न केवलमभावप्रतियोगित्वम्; अभावप्रतियोगित्वस्य सत्यत्वाविरोधित्वेनाप्रयोजकत्वात्, किन्तु प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्; तस्यैव सत्यत्वविरोधित्वात्। नहि घटादीनामुक्तविधमभावप्रतियोगित्वमुक्तानुमानतः पूर्वं ज्ञातमस्ति, येन हेत्वसिद्धिर्वारयितुं शक्येत। रज्जुसर्पादिस्थले तु सर्पस्य व्यवहारदशायामेव रज्जावेव त्रैकालिकनिषेधप्रतियोगित्वस्यावगमाद् युक्तमपरमार्थत्वमिति—मन्यन्ते॥

इदमत्राद्वैतिनो मन्यन्ते—यद् व्यावर्तमानत्वं हि सदनुविद्धसर्वप्रतीत्यविषयत्वमेव। उक्तरूपमेव हि व्यावर्तमानत्वं "नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः"—इति श्लोकव्याख्यावसरे गीताभाष्ये विशदीकृतम्। तथाच रज्ज्वनुविद्धसर्वप्रतीत्यविषयः सर्पो रज्जुत इव सदनुविद्धसर्वप्रतीत्यविषयः सर्वोऽपि प्रपञ्चस्सद्भिन्नः, इति व्यावर्त-

मानत्वस्योक्तरूपस्योक्तानुमानतः पूर्वमपि ज्ञायमानत्वाद् न हेत्वसिद्धिः, न वा साध्य-हेत्वोरैक्यम्, इति न विरोधः। नहि 'सन् घटः' इत्यत्रेव 'सन् पटः' इत्यत्रापि घटः प्रतीयते। तथाच प्रथमं सर्वं वस्तु सकलेतरव्यावृत्ततयैव प्रतीयत इति मन्वानानां श्रीभाष्यकाराणां दृष्ट्या 'सन् पटः' इति ज्ञाने पटाभेद इव घटभेदोऽपि भासित इत्यङ्गीकारस्यावश्यकत्वाद् 'नायं सर्पः' इति ज्ञानं सर्पमिव 'सन् पटः' इति ज्ञानं घटं बाधत इत्यवश्यमेव स्वीकर्तव्यम्। तथाच बाध्य-बाधकभावज्ञानाधीन एवानुवर्तमान-व्यावर्तमानत्वनिर्णय इति स्वीकारेऽपि 'सन् पटः' इत्यादीनामेव सति घटाभावविषयकाणां तस्मिन् देशे तस्मिन् काले तदभावाख्यमिथ्यात्वबोधकत्वस्यापि प्रकृतानुमानात् पूर्वं संभवाद् न दोषलेशोऽपि। सन्मात्रं तु सर्वप्रतीतिविषयत्वाद् अनुवर्तमानत्वेन न मिथ्याभूतमिति निष्कर्षः॥

सन्मात्रमपि नानुभूतिस्वरूपम्, अनुभाव्यत्वात्, इत्यनुभूतिप्रतीतौ व्यावर्तमानत्वाद् मिथ्याभूतमेव स्यात्, इति शङ्कावारणार्थं ह्यद्वैतिनः सन्मात्रस्य शुद्धचैतन्यरूपानुभूतिरूपत्वमपि स्वीकुर्वन्ति।

तत्तु न युक्तम्; यदि सद्रूपं नानुभाव्यम्, तर्हि सर्वप्रत्ययवेद्यत्वासिद्धिः, यदि त्वनुभाव्यम्, तर्हि अनुभूतिभेदोऽत्रर्जनीयः, इति पूर्वोक्तविधया व्यावर्तमानत्वापत्तिरिति तु श्रीभाष्यकाराः॥

अद्वैतिनस्तु मन्यन्ते—अनुभूतिः सती; सत्ताऽनुभूतिपदेन शुद्धचैतन्यस्वरूपमेव विवक्ष्यते, नतु वृत्तिः, तथाच वृत्तिविषयत्वेन सर्वप्रत्ययवेद्यत्वेऽपि सद्रूपस्य घटादेरिव न तत्प्रतिफलितचैतन्यविषयत्वं वर्तते, इति वृत्तिविषयत्वेन वृत्तितो भेदसिद्धावपि चैतन्यतो भेदासिद्ध्या न सद्रूपस्य चैतन्यव्यावृत्तत्वं कथमपि संभवति। नहि सन्मात्रस्य शुद्धचैतन्यस्वरूपत्वेन स्वयंप्रकाशस्य प्रकाशार्थं चिदन्तरमपेक्ष्यते, येन चैतन्यव्याप्यत्वेन सद्रूपस्यापि जडत्वास्व-

प्रकाशत्वादिकं कल्प्येत। तथाचानुभूतिपदस्याद्वैत्यनभिमतस्वाभिमतार्थविशेषावलम्बनेनाद्वैतमतदूषणमिदमनुक्तोपालम्भनमेव ॥

एतेन—वर्तमानतादशायां स्वस्मै प्रकाशमानत्वं हि स्वप्रकाशत्वमात्मनो यथा भवति, न तथानुभूतेः; परानुभवस्य हानोपादानादिङ्गिकानुमानज्ञानेन भानाद् न स्वप्रकाशत्वम्। स्वानुभवस्यापि वर्तमानतादशायां ज्ञातुरात्मनोऽनुभवान्तरानपेक्षायामप्यतीतादिदशायां स्मृत्यादिज्ञानापेक्षयैव प्रकाशनाद् न स्वयंप्रकाशत्वम्। अतोऽनुभूतिश्चेत्, स्वप्रकाशेति वक्तुं न शक्यत इति श्रीभाष्यकारोक्तिरपि—व्याख्याता ॥

चैतन्यस्वप्रकाशतावादिनामद्वैतिनां वृत्त्यवच्छिन्नचैतन्यरूपानुभूतेरनुमानादिज्ञानविषयत्वाद्युपपादनेनास्वप्रकाशत्वोपपादनेनाविरोधात्। नहि वृत्तिर्वृत्त्यवच्छिन्नं वा चैतन्यं सर्वेषां सर्वदा प्रकाशत इत्यद्वैतिनो मन्यन्ते, किन्तु शुद्धं चैतन्यम्, तत्तु सर्वदा सर्वेषां प्रत्यक्षमेव; "यत्साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः, इति शुद्धचैतन्यरूपज्ञानस्य स्वप्रकाशत्ववादः परानुभवस्य परकीयवृत्त्यवच्छिन्नचैतन्यस्यानुमेयत्वादियुक्त्या कथं निरस्तो भवति? तथाचानुभूतिस्वप्रकाशत्वनिरासोऽप्यनुक्तोपालम्भनमेव; यतो नाद्वैतिनः शुद्धचैतन्यरूपामनुभूतिमनुभाव्यां मन्यन्ते; अननुभूतित्वापत्तेः। अनुभूतित्वं ह्यद्वैताभिमतम्—स्वेतरचिदनपेक्षप्रकाशरूपत्वमेव, नतु वर्तमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्, येनानुभावान्तरानुभाव्यत्वेऽपि स्वप्रकाशत्वं न विरुद्धम्, शब्दार्थग्रहणोपयोगिपरानुभवादयो हि न स्वयंप्रकाशचैतन्यस्वरूपा इति पूर्वमेव तत्र वृत्त्यवच्छिन्नचैतन्यस्यैव परानुभवादिपदार्थत्वोपपादनपूर्वकं प्रतिपादितम्, इति नानुक्तोपालम्भनमिदं पुनरपि चर्व्यते; अन्यथा ह्यनुभाव्यत्वे घटादेरिवाननुभूतित्वप्रसङ्गः ॥

अत्र श्रीभाष्यकाराः—अननुभूतित्वं नानुभाव्यत्वप्रयुक्तम्; किन्तु वर्तमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वरूपानुभूतिस्वरूपाभावप्रयुक्तमेव। अननुभाव्यत्वप्रयुक्तत्वे त्वनुभूतित्वस्य गगनकुसुमादेरन-

भाव्यस्याप्यननुभूतित्वेन गगनकुसुमवदननुभाव्यत्वेनाननुभूतित्व-प्रसङ्गः। यदि गगनकुसुमादेरननुभूतित्वं नाननुभाव्यत्वनिबन्धनम्, तर्हि घटादेरननुभूतित्वमपि नानुभाव्यत्वनिबन्धनम्, किन्त्वज्ञानाविरोधित्वनिबन्धनमेव। सति चैवं घट-गगनकुसुमयोरुभयोरप्यज्ञानाविरोधित्वादननुभूतित्वमुपपद्यते, अनुभूतेस्त्वज्ञानविरोधित्वाद् नाननुभूतित्वमिति सिद्ध्यति, इति नानुभूतेरनुभाव्यत्वेऽप्यननुभूतित्वप्रसङ्गः, इति अनुभूतिश्चेत्, नानुभाव्येति रिक्तमिदं वचनम्। अनुभाव्यमिवाननुभाव्यं गगनकुसुमादिकमप्यज्ञानाविरोधि, इति अनुभाव्यत्वेनेवाननुभाव्यत्वेनाप्यज्ञानाविरोधित्वकल्पनाप्रसङ्गाद् अज्ञानाविरोधित्वमनुभूति-भिन्नस्यैव, नानुभूतेरिति स्वीकरणीयत्वाद् नानुभूतेरनुभाव्यत्वेऽप्यननुभूतित्वापत्तिः, अज्ञानविरोधित्वात्। अतोऽनुभाव्यत्वेऽननुभूतित्वमित्युपहास्यमिति—वदन्ति॥

अद्वैतिनस्तु—स्वाभिमताया अनुभूतेः शुद्धचैतन्यस्वरूपाया अज्ञानाविरोधित्वस्य वक्ष्यमाणप्रकारेण मन्वाना अज्ञानाविरोधित्वं यद्यननुभूतित्वप्रयोजकम्, तर्हि अनुभूतेरप्यननुभूतित्वप्रसङ्गो घटादिवदापद्येत, इति नाज्ञानाविरोधित्वमननुभूतित्वप्रयोजकम्, किन्त्वनुभाव्यत्वासत्त्वान्यतरवत्त्वमेव। इदं चानुभाव्यघटस्येवाननुभाव्यगगनकुसुमादेरप्यननुभूतित्वप्रयोजकम्। अतोऽनुभूतावनुभाव्यत्वाङ्गीकारेऽनुभूतेरप्यननुभूतित्वप्रसङ्गो दुर्वारः। अतोऽनुभूत्यनुभाव्यत्वायोगाद् अनुभूतिस्वप्रकाशत्ववादस्य स्वेतरचिदनपेक्षस्वप्रकाशस्वरूपस्यैव विवक्षणात् सन्मात्रानुभूतिभेदो न विकल्पसह इति—मन्यन्ते। तथाचानुभूत्यननुभूतित्वप्रसङ्गपरिहारोऽद्वैतप्रक्रियाया अन्यथाग्रहनिबन्धन एव॥

एतेनानुभूतिनित्यत्वमपि व्याख्यातम्; स्वयंसिद्धायास्तस्याः प्रागभावाद्यभावादुत्पत्त्यनुपपत्तेः। नहि संविद्प्रागभावग्राहकं प्रमाणं किमपि वर्तते। अनुभूत्यैव तत्प्रागभावग्रहणमिति तु न युक्तम्; प्रागभाव-प्रतियोगिनोस्समकालिकत्वायोगेन संविदा

स्वप्रागभावग्रहणासंभवात्, अतीतानागतयोस्तु वृत्त्यवच्छिन्नचैतन्येनैव प्रमाणजन्येन ग्रहणं संभवति, नतु केवलचैतन्येन; तस्य वर्तमानमात्रग्राहकत्वात्। अतो यदि चैतन्यभास्यत्वं चैतन्यप्रागभावस्य स्वीकर्तव्यम्, तर्हि चैतन्य-तत्प्रागभावयोः समकालनियमः स्वीकर्तव्यः; प्रमाणाजन्यनित्यचैतन्येन तत्समकालाविद्यादिमात्रस्यैव भासकत्वस्य दर्शनात्। तथाचातीतस्य प्रागभावस्य ग्रहणासंभवात् समकालिकस्य च तस्योभयासम्मतत्वात् चैतन्यप्रागभावाभावसिद्ध्यां न चैतन्योत्पत्तिसिद्धिः॥

एतेन—स्मरणानुमानागम-योगिप्रत्यक्षादिषु कालान्तरवर्तिनोऽपि ग्रहणं दृश्यते। प्रमाणस्य प्रमेयाविनाभाव एव हि नियतः, नतु स्वसमानकालवर्तिप्रमेयाविनाभावः, इति प्रमाणजन्यानुभूत्या तत्प्रागभावस्यातीतस्य साधनमपि श्रीभाष्यकाराणम्—व्याख्यातम्; प्रमाणजन्यानुभूतिप्रागभावसाधने सिद्धसाधनात्, स्वप्रकाशशुद्धचैतन्यप्रागभावस्यैवाद्वैतिभिर्निरसनेनाविरोधाच्च। एतेन—संवित्प्रागभावे प्रमाणाभावात् तदभावसाधने संविदः स्वयंप्रकाशत्वं परित्यक्तप्रायम्, इति संवित्प्रागभावेऽनुपलब्धिः प्रमाणं मन्यतामिति शङ्कापि—परास्ता; संविदः स्वयंप्रकाशायाः तत्प्रागभावग्रहणासंभवस्यासकृदवेदितत्वात्॥

घटादिज्ञानं हि वृत्त्यवच्छिन्नमेव कालावच्छिन्नं घटादिकमवभासयति, नतु तदधिष्ठानचैतन्यमपि। तथाच वृत्त्यवच्छिन्नस्य चैतन्यस्य कालावच्छिन्नतया प्रतीत्या शुद्धचैतन्यकालावच्छेदप्रतीतिरपि न सेत्स्यति। घटाद्यनित्यत्वे हि तन्नाशदर्शनादिकमेव प्रमाणम्, इति कालानवच्छिन्नसंवेदनविषयत्वेऽपि न तन्नित्यत्वापत्तिः। शुद्धचैतन्यनित्यत्वं हि न केवलं तदनित्यत्वताग्राहकप्रमाणाभावादेव मन्यते, किंतु तन्नित्यत्वज्ञानेन। अस्ति च तन्नित्यत्वग्राहकम्—"आकाशवत् सर्वगतश्च नित्यः" "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादिवाक्यजातं स्वतः सिद्धं नित्यं च संवेदनं बोधयत्। तथाच निर्विषयाया एव संविदो नित्यत्वस्य विवक्षणात् सविषय-

वृत्त्यवच्छिन्नचैतन्यप्रागभावसाधकयुक्तिभिः शुद्धचैतन्यप्रागभाव-साधनमसम्भवद्युक्तिकमेव। सविषयत्वस्वाभाव्ये हि चैतन्यस्य सत्यत्वानन्तत्वादिकमनुपपन्नं स्यात्। स्वयंप्रकाशत्वात्तु तस्य तदनुपलब्धिरपि बाधितैव। स्वयंप्रकाशत्वं चाद्वैतिनामभिमतं निर्विषयत्वेऽपि चैतन्यस्याबाधितमेव, इति विषयाप्रकाशेऽपि संवित्प्रकाशत्वाव्याघातः। एतेन—संविदस्तुच्छत्वापत्तिरनुभवान्तराननुभाव्यत्व इति शङ्कापि—परास्ता; न ह्यननुभाव्यत्वप्रयुक्ता तुच्छता, किन्त्वसत्त्वप्रयुक्तैव; अन्यथानुभाव्यत्वेन जडत्वमप्यनुभूतेरपरिहरणीयं स्यात्॥

अस्ति हि स्वाप-मूर्च्छादिषु सर्वविषयशून्या केवलैव संवित् परिस्फुरन्ती। 'सुखमहमस्वाप्समि'ति हि प्रबोधसमये प्रत्यवमर्शः चैतन्यांशमात्रस्यैव पूर्वतनमनुभवं विषयीकरोति, नत्वहमंशेऽपि; सुषुप्तौ जाग्रदादिष्विवाहमनुभवाभावात्। केवलचैतन्यस्यापि तदानीमप्रकाशे तु अनभिज्ञातार्थविषयकत्वात् 'सुखमहमिति' परामर्श एवानुपपन्नः स्यात्। तथाच चैतन्यांश एव स्मरणत्वमुक्तावगमस्य, अहङ्कारांशे त्वनुभवत्वमेव; सुषुप्तावहङ्कारविलयात् तदनुभावासम्भवेन तदंशे स्मरणायोगात्। उक्तं च—"न सुषुप्तिगविज्ञानं नाज्ञासिषमिति स्मृतिरि"ति। प्रत्यवमर्शे चैतन्यमात्रतादात्म्यात्तु स्वविषयाहमर्थेऽपि स्मरणविभ्रम एवाद्वैतिभिः स्वीक्रियते। एतेन—अनुभूयमानाहमर्थतादात्म्यात् चैतन्यस्याप्यनुभूयमानत्वभ्रमेणास्मरणाभिमानात् केषाञ्चन प्रबोधसमये शुद्धनिर्विषयचैतन्याप्रतिसन्धानभ्रमोऽपि—व्याख्यातः॥

अत एव—"तास्वपि दशास्वनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्, नतु तदस्तीति श्रीभाष्योक्तिरपि—व्याख्याता॥

अस्तुवाऽस्मरणमेव निर्विषयायाः संविदः प्रबोधसमये, नच तावता तदप्रकाशः साधयितुं शक्यते। जन्यानुभवस्य हि

संस्कारद्वारा स्मृत्याधायकत्वम्, नतु नित्यस्वयंप्रकाशसंविदोऽपि। तथाच यदि सुषुप्तौ न संविदाकारा वृत्तिरिति वार्तिकसिद्धान्त आलोच्यते, तर्हि संविदप्रतिसन्धानं न कथमपि विरुद्धम्॥

वस्तुतस्तु—अनुभूतस्य पदार्थस्य स्मरणनियमो नास्ति; अनुभूतानां बहूनामस्मरणदर्शनात्। तथाच निर्विषयसंविदोऽस्मरणं कथं तदनुभवाभावं साधयेत्?

भवतु वाऽनुभूतस्य स्मरणानियमः, अस्मरणनियमे तु कारणं किमपि वक्तव्यम्। तत्तु निखिलसंस्कारतिरस्कृतिक्षमदेहविगमादिरेवान्यत्र दृश्यते, इत्यसत्यपि देहविगमादावस्मरणनियमोऽनुभवाभावं साधयतीति वक्तव्यमिति श्रीभाष्यकाराः—मन्यन्ते॥

वयं तु पश्यामः—अहङ्कारासम्बन्ध एव शुद्धचैतन्यास्मरणकारणम्, इति प्रबोधसमये नियमेन तदभावाद् शुद्धचैतन्यविषयास्मरणनियम उपपद्यत इति।

सत्यपि सुषुप्तौ केवलचैतन्यानुभवे सुप्तोत्थितस्य "न किञ्चिदहमज्ञासिषमि"ति प्रत्यवमर्शाद् ज्ञायते—यत् सुषुप्तौ नाहंपदार्थो नवा शुद्धचैतन्यातिरिक्तं किमपि प्रकाशमानमासीत्, इति प्रत्यवमर्शोऽयमपि चैतन्यमात्रप्रकाशमेव वृत्तिस्वीकारपक्षे सुषुप्तौ साधयति॥

एतेन—न केवलमस्मरणनियमादनुभवाभावः, किन्तु सुप्तोत्थितस्य—"इयन्तं कालं न किञ्चिदहमज्ञासिषम्" इति प्रत्यवमर्शेनैव सिद्धेरित्यपि—प्रत्युक्तम्; अहंपदार्थोल्लेखपूर्वकचैतन्यानुभवनिषेधपरत्वादुक्तप्रत्यवमर्शस्य

तथाच सुषुप्तौ विषयावच्छेदराहित्यमहङ्कारविगमश्च वर्तते, इति तत्कालीनो निर्विशेषचैतन्यप्रकाशः कथं विषयावच्छेदेनाहङ्कारसम्बन्धेन च स्मर्तुं शक्यते, इत्यहङ्कारविगमकालिकशुद्धचैतन्यरूपस्यैवात्मनो नियमेन जागरकलेऽभावेनास्मरणनियम उपपन्नः। उपलब्धृ-स्मर्त्रोरेकत्वे हि स्मरणम्, नचात्र प्रकाशातिरिक्त उपलब्धा सुषुप्तौ वर्तते, नवा प्रकाशरूप एव स्मर्ता जागरकाले प्रतीयते॥

एतेन—अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरण-हेतुत्वाभाव इति श्रीभाष्यमपि—व्याख्यातम् ॥

स्वीकृतं हि देहविगमेन नियमेनास्मरणं श्रीभाष्यकारैरपि; इति जन्मान्तरीयदेहाभाव इवात्रापि सुषुप्त्यवस्थापन्नकेवलात्मस्वरूपा-प्रतिपत्तिरहङ्कारादितादात्म्यनियमश्च प्रबोधेऽस्मरणनियमं गमयतीति युक्तम् ॥

परमार्थतस्तु—सुषुप्तौ न सर्वात्मनाऽनुभवाभावः श्रीभाष्य-काराणामपि सम्मतः; आत्मानुभवस्य तदानीं तैरप्यङ्गीकारात् । इयान् विशेषः—यत् सुषुप्तौ निर्विशेषचैतन्यस्वरूप एवात्मा प्रकाशत इत्यद्वैतमतम्, ज्ञानाश्रय आत्मा प्रतीयत इति श्रीभाष्यमतम् । यथाच न ज्ञाताऽत्मा, किन्त्वहमर्थः, सोऽनात्मैव, तथोत्तरत्र स्पष्टी-भविष्यति, इति निर्विशेषचैतन्यमात्रानुभवः सुषुप्तौ न कथमपि वारयितुं शक्यते ॥

तदेवमनुभूतिः स्वयं सती स्वप्रागभावं न साधयति, अननु-भाव्यत्वादेव स्वयंप्रकाशेति, नित्येति च सिद्धम्, यतोऽनुत्पत्त्या विकारान्तरस्यापि ध्वंसादेस्तत्रासंभवः । न ह्यनुत्पन्नं किमपि वस्तु नश्यति । प्रागभावस्तु नाद्वैतिभिः स्वीक्रियते, स्वीक्रियमणत्वेऽप्यनु-त्पन्नस्य भावस्यैवाविनाशविवक्षणाद् न प्रागभावे व्यभिचारः । अद्वैतिनामविद्या तु भावाभावविलक्षणा तृतीयप्रकारैवेत्यद्वैतसिद्धौ विवेचितम् । अत एव हि भावाभावयोरुभयोरप्यविद्यामूलत्वमुप-पद्यते । अतस्तत्रापि न व्यभिचारः ॥

एतेन—यदप्यस्या अनुभूतेरनुत्पत्त्या विकारान्तरनिरसनम्, तदप्यनुपप-न्नम्; प्रागभावे व्यभिचारात्, भावेष्विति विशेषणे तु तर्ककुशलताऽऽवि-ष्कृता भवति । तथाच भवदभिमताऽविद्याऽनुत्पन्नैव विविधविकारास्पदा, तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यमिति—परास्तम् ॥

न ह्यविद्यायां भावत्वमूरीक्रियते। अविद्यानुमाने तु प्रागभावव्यतिरिक्तत्वमेव साध्यते, न भावत्वम्। तत्र तत्राविद्यालक्षणे भावत्वविशेषणस्यापि तत्रैव हि तात्पर्यम्। तथाचानुभूतिः, अनन्ता, अनुत्पद्यमानत्वात्, इत्यनुमानं न दुष्टम्॥

वस्तुतस्तु—अनुभूतिः, अनन्ता, इत्यनुमाने कल्पितान्तवत्त्वाभावमादाय सिद्धसाधनताऽऽपद्येत। सति चैवम्—अनुभूतिः, परमार्थविकाररहिता, अजत्वात्, इत्यनुमाने पराभ्युपगतात्मस्वरूपम्, व्यतिरेके तु घटादिकं वा दृष्टान्त इति वर्णनसंभवाद् न दृष्टान्ते साध्याव्याप्यता श्रुतप्रकाशिकारीत्या, इति पारमार्थिकविकारान्तरशून्यत्वमेव साधनीयम्। पारमार्थिकत्वं च विकारे यद्यपि न सिद्धम्, तथापि त्रिकालाबाध्यत्वरूपस्य तस्य ब्रह्मणि प्रसिद्धिमात्रेण विशिष्टाप्रसिद्धावपि पारमार्थिकविकारशून्यत्वानुमानं न विरुद्धम्। परत्र प्रसिद्धिमात्रेण तु पारमार्थिकत्वविशेषणमुपपद्यते। तथाच पारमार्थिकत्वविशेषणस्य सिद्धसाधनार्थान्तरवारणेन चारितार्थ्याद् न व्यर्थविशेषणता। सति चैवमविद्याभावत्वपक्षेऽपि तस्यां साध्य-हेत्वोरुभयोरपि सत्त्वाद् न व्यभिचारः॥

एतेन—अविद्याविकाराः सर्वे मिथ्याभूता इति चेत्, किं भवतः परमार्थभूतोऽप्यस्ति विकारः? येनैतद्विशेषणमर्थवद् भवति। न ह्यसावभ्युपगम्यत इति श्रीभाष्योक्तिरपि—व्याख्याता॥

परानुद्दिश्य प्रयुज्यमाने ह्यनुमाने परप्रसिद्धिरेवापेक्षिता, न स्वप्रसिद्धिरिति तु बहुशो दृष्टम्। अत एवाजत्वहेतुनाऽनुभूतिनानात्वनिरासोऽपि नानुपपन्नः। अत्र स्वसजातीयप्रतियोगिकभेद एव निरस्यते, नतु विजातीयप्रतियोगिकभेदोऽपि। तथाचाजस्यैवात्मनो देहेन्द्रियादिभ्यो विभागेऽपि, अविद्याया अनादेरात्मभेदेऽपि वा स्वीक्रियमाणेऽपि न व्यभिचारः; पराभ्युपगतायाः प्रकृतेर्ब्रह्मणो वा दृष्टान्तत्वसंभवात्। अस्तु वा भेदसामान्यनिरासानुमानमेवात्र

विवक्षितमिति, तथापि पूर्वोक्तविधया पारमार्थिकभेदसामान्यनिरासस्यैवात्र विवक्षाणाद् अनुभूतेश्च चैतन्यस्वरूपाया एवात्मत्वाद् देहेन्द्रियाविद्यादीनां सर्वेषां तत्र कल्पितत्वेन पारमार्थिकभेदाभावस्य साध्यस्य हेतोश्च विद्यमानत्वेन व्यभिचाराप्रसङ्गः। यथाच परमार्थतो भेदाभावस्तद्व्यतिरेकेण तदभावमादायैव, तथाऽन्यत्र व्यक्तम्। एतेन—अविद्याया आत्मनो विभागाभावे वस्तुतो ह्यविद्यैव स्यादात्मेत्यादि—परास्तम्॥

एतेन—अनुभूतिनिर्विशेषत्वमपि-व्याख्यातम्; विशेषाणामनुभूतिव्यतिरिक्तानामनुभाव्यत्वेनानुभूतिधर्मत्वायोगात्। अत्रापि पारपार्थिकधर्मत्वनिषेधस्यैव विवक्षणाद् न दोषः, नित्यत्व-स्वयंप्रकाशत्वादिकं तु कल्पितो धर्मः, अथवा—दृशिस्वरूपमेव; अधिष्ठानव्यतिरेकेणारोपितानामभावात्। यद्वा—परप्रकाश्यत्वाभावः स्वप्रकाशत्वम्, अनित्यत्वाभावो नित्यत्वम्, भेदाभाव एकत्वम्, इति सर्वेषां दृशिधर्माणां विरुद्धाभावरूपत्वात् स्वरूपैक्यमबाधितम्। अभावानां चाधिकरणात्मत्वाद् न पृथग् धर्मतया व्यपदेशः, इति न धर्म-धर्मिभावव्यवहारः॥

एतेन—संवित्सिद्धिरपि—व्याख्याता; सिद्ध्यमानत्वं हि प्रकाशाव्यतिरेक एव, न भावरूपो धर्मः, इति न सधर्मता, नवा तुच्छता गगनकुसुमादिवत्। अथवा—सिद्धिरेव संविदिति न दोषः॥

एतेन—सिद्धिरेव संविदिति चेत्, कस्य कं प्रतीति वक्तव्यम्, यदि न कस्य चित् कंचित्प्रति, सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित् कंचित् प्रति भवति। आत्मन इति चेत्, कोऽयमात्मा? ननु संविदेवेत्युक्तम्, सत्यमुक्तम्; दुरुक्तं तु तत्। अनुभूतिर्हि सकर्मिकाऽनुभवितुरात्मनो धर्मविशेषो यथा न कर्मस्वरूपा, एवं न कर्तृस्वरूपाऽपि। अत एवानुभूत्युत्पत्ति-नाशप्रतीतिरुपपद्यते। कर्ता त्वात्मा नित्य इति संप्रतिपन्नमिदम्। तथाच क्षणभङ्गिन्यास्संविद आत्मत्वाभ्युपगमे 'य एवाहं बाल्ये

पितरावन्वभूवं स एव वार्धके प्रणप्तृननुभावमी’ति प्रत्यभिज्ञानमनुपपन्नं स्यात्, इति श्रीभाष्योक्तिरपि—व्याख्याता ॥

क्रियारूपं गुणरूपं वा ज्ञानं सत्यं ज्ञातारं पुत्रत्वमिव पितरमपेक्षेत, चैतन्यरूपं तु नान्यं ज्ञातारमपेक्षते। कस्यायं कस्यायमिति हि धर्माणामेवापेक्षा, नच संवित् कस्यापि धर्मः। न ह्यादित्यं चन्द्रमसं वा दृष्ट्वा कस्यायमित्यपेक्षते। तथाच सद्रूपमिव चिद्रूपमपि नान्यमपेक्षते, इति संविदेव सिद्धिरिति स्वीकारेऽपि न दोषः। नचेयं संविद् ज्ञाधात्वर्थः क्रियारूपा, येन सकर्मकत्वात् कर्मत्वमिव कर्तृत्वमपि तस्या न स्यादिति शङ्का सम्भवदुक्तिका। वस्तुतस्तु ज्ञातृत्वमपि संविदः कल्पितमेव स्वीक्रियते, न पारमार्थिकमद्वैतिभिः, इति संविदात्मत्वेऽपि तज्ज्ञातृत्वस्यास्वीकाराद् न विरोधः। न ह्यात्मा ज्ञाता, किन्त्वहमर्थ एवानात्मशबलितः। यथाच वृत्तेर्वृत्त्यवच्छिन्नचैतन्यस्यैव वोत्पत्ति-विनाशादिविकारः; वृत्तेरुत्पत्त्यादिविकारयोगात्, नतु संविदः, तथाऽन्यत्र व्यक्तम्। तथाच ज्ञानमुत्पन्नं नष्टमिति व्यपदेशो वृत्तिमेव गोचरयति, तदुपाधिकत्वाद् वृत्त्यवच्छिन्नं चैतन्यं वा, नतु ज्ञानमात्रम्। अभ्युपगतं चैतत् श्रीभाष्यकारैरपि ज्ञानोत्पत्ति-विनाशादिविकारव्यपदेशाः—न स्वरूपभूतं तदीयं धर्मभूतं ज्ञानं वा विषयीकुर्वन्तीति। इयान् विशेषः—यत् तन्मते ज्ञानसंकोचविकासपरा उत्पत्त्यादिव्यपदेशा ज्ञानेऽपि गौण्या वृत्त्या व्यपदिश्यन्ते, अद्वैतमते तु विकसितान्तःकरणपरिणामरूपवृत्तिगोचरास्ते चैतन्येऽपि तदवच्छेददुपचर्यन्ते, इति न क्षणभङ्गित्वं संविदोऽद्वैतिनो मन्यन्ते, येन “योऽहं बाल्ये” इत्यादिप्रत्यभिज्ञानायोगः संविद एवात्मत्वे ॥

‘अहं जानामी’त्यादिप्रत्यये योऽयमनिदमंशः प्रकाशैकरसश्चित्पदार्थः, स एव खल्वात्मा नाम, नाहमर्थः; अनात्मत्वादहमर्थस्य। ‘अहं जानामी’ति प्रत्यक्षं तु चैतन्यान्तःकरणयोस्तद्धर्मयोश्च

परस्परतादात्म्याध्यासनिबन्धनमेव; अन्यथा सुषुप्तावप्यहमनुभव आपद्येत। अत एवाहंकारात् पृथक् "अथात आत्मादेशः" इत्यात्मोपदेश उपपद्यते ॥

"अहमर्थो नचेदात्मा प्रत्यक्त्वं नात्मनो भवेत्। अहंबुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते ॥ निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वयम् भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते ॥ अहमर्थविनाशश्चेद् मोक्ष इत्यध्यवस्याति। अपसर्पेदयं मोक्षकथाप्रस्तावगन्धतः ॥ मयि नष्टेऽपि मत्तोऽन्या काचिद् ज्ञप्तिरवस्थिता। इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥ स्वसम्बन्धितया ह्यस्याः संवित् विज्ञप्तितादि च। स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति ॥ छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्। अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥ 'विज्ञातारमरे केन जानामी' त्येव च श्रुतिः। 'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञः' इति च स्मृतिः ॥ "नात्मा श्रुतेरि"त्यारभ्य सूत्रकारोऽपि वक्ष्यति। "ज्ञोऽत एवे" त्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥ इति श्रीभाष्यकारा अहमर्थात्मतावादम् —उपक्षिपन्ति ॥

इदमनेन ज्ञायते—यद् अहमर्थानात्मतासिद्धान्ते चैतन्यमात्रात्मतावादो न दोषाय, तदात्मतावादे तु स न संभवतीति। तथाचाहमर्थानात्मवादस्यैवाद्वैत्यभिमतत्वाद् अद्वैतमतदृष्ट्या ज्ञानस्वप्रकाशता-तदात्मतादिवादास्सर्व एव न विरुद्धाः, अहमर्थ एवात्मेति श्रीभाष्यसिद्धान्तदृष्ट्या तु संविदात्मतादिवादा न संभवद्युक्तिका इति। अतोऽत्रेदमेव प्रथमत आलोचनीनम्—अहमर्थानात्मतावादः किं श्रुति-स्मृति सूत्र-युक्त्यादिसम्मतः? उत तदात्मतावादः? वयं तु पश्यामः—अहमर्थानात्मतावाद एव प्रामाणिकः। आत्मनः प्रत्यक्त्वं हि स्वप्रकाशत्वेनैव, नाहंप्रत्ययविषयत्वेन; अन्यथा शरीरादेरपि प्रत्यक्त्वमापद्येत। तथाचाहमर्थः, आत्मा, अहंप्रत्ययविषयत्वादित्यनुमानविवक्षायां शरीरे व्यभिचारः। न केवलं व्यभिचारः, किन्तु—अहमर्थः, अनात्मा, अहंप्रत्ययविषयत्वात्, शरीरव-

दिति विरोधोऽपि। स्वतोऽन्यतो वा स्वस्मै प्रकाशमानत्वं न प्रत्यक्त्वम्, किन्तु स्वतः प्रकाशमानत्वमेव; लाघवात्। तादृशं च प्रत्यक्त्वं नाहंप्रत्ययविषयत्वप्रयुक्तम्, किन्तु स्वस्वरूपप्रयुक्तमेव। मुक्तिदशायां शुद्धचैतन्यमात्रप्रकाशेऽहंप्रत्ययाभावादपि नात्मनोऽहंप्रत्ययविषयत्वम्। कदाचिदहंप्रत्ययविषयत्वं तु 'अयो दहती' त्यादौ कदाचिद् वह्नेरयःप्रत्ययविषयत्वं वह्नेरयस्त्वमिव नात्मनोऽहंपदार्थत्वं गमयितुमर्हति। तथाच नियमेनाहंप्रत्ययविषयत्वस्याहंकारसत्तायामेव जाग्रत्स्वप्नयोर्दर्शनात् स्वाप-मूर्च्छा-मुक्त्यादिष्वहंकारनाशेऽहङ्कारप्रतीत्यभावाद् आवापोद्वापाभ्यामहङ्कार एव मुख्योऽहर्थः, नत्वात्माऽपि, इति नाहंप्रत्ययविषयत्वमात्मत्वसाधनम्, इत्यप्रयोजनकत्वमपि ॥

एतेन—"तस्मिन् :अहमुत्क्रान्त उत्क्रान्तो भविष्यामी"त्यादिश्रुतिरपि—व्याख्याता; लक्षणया तत्र निष्कृष्टाहंकारचैतन्यमात्रपरत्वेऽप्यदोषात्।

अहंकारमात्रमिदंपदमुख्यार्थः, चैतन्यमात्रमधिष्ठानं प्रत्यगर्थस्तदात्मादिपदमुख्यार्थः प्रत्यक्त्वं तु नियमेनाहंप्रत्ययार्थ इति तु निष्कर्षः। तथाच शरीरावच्छिन्नमिवाहंकारावच्छिन्नमपि न मुख्यात्मस्वरूपम्, इति—"अथातोऽहंकारादेशः "अथात आत्मादेशः" इति पृथगहंकारात्मनोरुपदेशोऽप्युपपद्यते ॥

फलेच्छावस्थायां प्रतीयमानाः सर्वेऽप्याकाराः फलानुभवावस्थायामपि प्रतीयन्त इति नायं नियमः; 'ब्राह्मणोऽहं स्वर्गी स्यामि'ति स्वर्गेच्छाया अवसरे प्रतीयमानं हि ब्राह्मण्यं न स्वर्गानुभवावसरेऽप्यनुवर्तते, इति मुक्त्यवस्थायामहंकाराननुवृत्तावपि न—'अहं मुक्तः स्यामिती'च्छया मोक्षार्थिनां प्रवृत्तिरनुपपन्ना। अहंकार-ममकारादय एव हि बन्धो नाम, इति कथं नाम मोक्षेऽप्यहंकारानुवृत्तौ तत्र प्रवृत्तिरुपपद्येत ? ततश्चाहमर्थविनाशो मोक्ष इत्यध्यवसानमेव मोक्षप्रवृत्तौ मुख्यं निदानम्, इति कथमिदम्—"अहमर्थविनाश-

इचेत् मोक्ष इत्यध्यवस्यति। अपसर्पेदयं मोक्षकथाप्रस्तावगन्धतः''॥ इति विकल्पसहम् ? तथाच मोक्षार्थप्रवृत्त्यनुपपत्तिरप्यहमर्थानात्मतावादमेव पोषयति, नतु तदात्मतावादम्। बद्धस्वरूपविनाशेन स्वस्वरूपभाव एव हि मोक्षो नाम। तथाच बद्धे मयि नष्टेऽपि मत्तोऽन्या मत्स्वरूपरूपा या चित्, तद्भावो मम भवत्विति कथं सर्वस्य यत्नो न भविष्यति ?

सच्चिदानन्दरूपस्य ब्रह्मणः कल्पितबन्धराहित्यमेव हि मोक्षः। स च बन्धराहित्यमेवापेक्षते, नतु स्वसम्बन्धम्; तस्य सच्चिदानन्दरूपतायाः स्वतः सिद्धत्वात्। तथाच नात्र कर्तृ-कर्मक्रियादिसम्बन्धः; "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति श्रुतेः, इति न सङ्गतमिदम्—"स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिद्ध्यति। छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत्''॥ इति वर्णनम्। नित्यप्राप्तस्याप्राप्तत्वभ्रमनिवर्तनार्थं खलु ब्रह्मविद्या, नत्वप्राप्तप्राप्तिव्यवस्थापनार्थम्; "तत्त्वमसी" त्यादिश्रुतेः। तथाच नात्र प्राप्ता, प्राप्तिः, प्राप्तव्यं च वस्तुत्रयं परमार्थतोऽस्ति, किन्त्वेकमेव प्राप्ता प्राप्यं चेति चित्स्वरूपमेवात्मा, नतु ज्ञाता; अहमर्थस्यैव ज्ञातृत्वात्, इति 'अहं जानामी' त्यादिप्रत्ययाः न पारमार्थिकात्मस्वरूपगोचराः॥

"विज्ञातारमरे केन विजानीयादित्युक्तानुशासना सा मैत्रेयी" इति वाक्यं हि—"स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जते''इति वाक्यशेषतया श्रूयमाणमात्माने विज्ञातृतया प्रतीयमानस्यापि नाहमादिपदेन निर्देशः संभवति, किन्त्वाहंकारादिनिषेधमुखेनैवेति बोधयत् "आत्मा वा अरे द्रष्टव्यः, इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञापूर्वकं प्रक्रान्त आत्मा नाहमर्थः, नवा विज्ञातेत्येव बोधयति, नतु विज्ञातृत्वमप्यात्मनः। एक-

विज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिर्हि "तत् केन कं पश्येदि" त्यत्र कर्तृनिषेधमपि विना नोपपद्यते, इति विज्ञातृनिषेधस्याप्युपलक्षणम्। तथाचात्मनो विज्ञातृत्वनिषेधोऽप्यत्र विवक्षणीयः। अत एव—"यत्र त्वस्य सर्वमात्मैवाभूदि"ति विज्ञातुरात्मनः सर्वतादात्म्यं मुक्तौ प्रतिपादितमुपपद्यते। नहि विज्ञातुरात्मनः सर्वतादात्म्यं तस्य ब्रह्मभावं विनोपपद्यते। अत्रा"त्मा वाअरे द्रष्टव्यः" इति द्रष्टव्यतयोपक्षिप्तः प्रत्यगर्थ एवेति श्रीभाष्यकारैरपि वक्तव्यम्। अन्यथाऽहमर्थज्ञातृतायां "विज्ञातारमरे" इत्यस्य प्रमाणतयोपन्यासो न सङ्गतः स्यात्। सति चैवं प्रत्यगर्थः केवलचैतन्यमेव ब्रह्मस्वरूपाभेदयोग्यमत्र विवक्षितमित्यकामेनापि स्वीकर्तव्यम्, इत्यहमर्थप्रत्यगात्मतायां सर्वमिदं प्रकरणं प्रतिकूलमेव श्रीभाष्यकाराणाम्।

एतेन—"प्रज्ञानघनः" "विज्ञानघनः" इत्यादिपदैरात्मनो निर्देशोऽपि श्रुतिगतो—व्याख्यातः; आत्मनो ज्ञानात्मताबोधन एव तस्य तात्पर्यात्। अत्र विज्ञानघन एवेत्येवकाराद् जडाहंकारादिसंबन्धो व्यावर्त्यते, इति नात्मनोऽहमर्थत्वमित्यत्रैवेयं श्रुतिः प्रमाणम्, नतु तस्य विज्ञातृत्वाहमर्थत्वादिबोधने; विज्ञातृत्व-विनाशित्वादीनामात्मन औपाधिकत्वस्यात्रैव प्रतिपादनात्॥

"अत्रायं पुरुषः स्वयंज्योतिरि"ति वाक्यं स्वाप्नावस्थस्य जीवस्वरूपस्यादित्य-चन्द्रमोऽग्नि-वाङ्निरपेक्षं स्वतः प्रकाशनबोधनात् स्वप्नावस्थायामात्मनो ज्ञातृत्वस्योभयसम्मतत्वात् तस्य च कल्पितत्वेनाप्युपपत्तेः स्वाप-मूर्च्छादिषु विज्ञातृत्वबोधने न पर्याप्तं प्रमाणम्॥

"न विज्ञातुर्विज्ञातेरि"ति वाक्यं सौषुप्तमावस्थमेवात्मानमधिकृत्य प्रवृत्तं सुषुप्त्यवस्थायां विज्ञातुर्विज्ञानरूपत्वमेवेत्येव बोधयति; सामानाधिकरण्येनान्वये संभवति वैयधिकरण्येनान्वयस्यायोगात्, विज्ञातेःपदवैयर्थ्यापाताच्च, नतु विज्ञातुर्विज्ञानस्य नित्य-

त्वम् , तथाच सुषुप्त्यवस्थायामपि जीवस्य विज्ञातृत्वे नेयं श्रुतिः प्रमाणम् ॥

"अथ यो वेदं जिघ्राणीति स आत्मा गन्धाय घ्राणिति" इति वाक्यं तु मुक्तावस्थमात्मानं बोधयद् आत्मनो द्रष्टृत्व-घ्रातृत्व-श्रोतृत्वादिकं स्वकल्पितचक्षुरादितादात्म्याधीनम्, नतु वस्तुगत्येति बोधयच्च, अशरीरस्य तस्य घ्रातृत्वादिकमिवाहंत्व-विज्ञातृत्वादिकमपि कल्पितमित्येव गमयति, नतु मुक्त्यवस्थायां जीवस्वरूपं पृथक् तस्य विज्ञातृत्वादिकं वा; यतः—"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाविर्भवति" इति ब्रह्मभावप्राप्त्यनन्तरमेव स्वरूपाविर्भावः प्रतिपाद्यमानो ब्रह्मभाव एव मोक्ष इति सूचयति। अथवाऽनेकजीववादे यावत्सर्वमुक्ति ईश्वरभावस्योरीकाराद् ईश्वरभावापेक्षया चक्षुरादिसृष्ट्याम्नानम्, ज्ञातृत्वं च तत्तत्तादात्म्यापन्नचैतन्यरूपत्वेन वा, मायापरिणामात्मकवृत्त्या वेति मायापरिणामाहमाकारवृत्त्या कल्पितमीश्वरसर्वज्ञत्वादिकमेवेदं वाक्यं गमयति, नतु जीवस्वरूपपार्थक्य-तदहमर्थत्व-तद्विज्ञातृत्वादिकमपि ॥

यथाच—"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति"रिति वाक्यं स्वाप्नावस्थजीवमधिकृत्य प्रवृत्तत्वाद् न प्रकृतोपयुक्तम्, तथा पूर्वमेव सूचितम् ॥

"कस्मिन्नु सर्वे प्रतिष्ठिता भवन्ती"ति प्रश्नोत्तरत्वेन पृथिव्यादिपञ्चभूत-तन्मात्र-चक्षुराद्यधिष्ठानमात्मरूपं प्रतिपाद्य प्रवृत्तम्—"एष हि द्रष्टा स्प्रष्टे"ति वाक्यं तु चक्षुराद्यधिष्ठानं द्रष्टृत्वादिना प्रतिपादयत्—"अहङ्कारश्चाहङ्कर्तव्यं चे"त्यहङ्काराहंकर्तव्ययोरपि परमात्मनो ज्योतिःस्वरूपस्य प्रतिपादनाद् न केवलं द्रष्टृत्वाद्यौपाधिकत्वे, किन्त्वहंपदार्थानात्मतायामपि गमकम्, इत्यद्वैतमतमेव पोषयति, न मतान्तरम्। एतेन—"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखितमि"ति वाक्यमपि—व्याख्यातम्; इदं हि वाक्यम्—

"स एवाधस्तादि"त्युपक्षिप्तमात्मस्वरूपम्— "अथातोऽहङ्कारादेश एव । अहमेवाधस्तादहमुपरिष्टादि"त्यादिनाऽहमर्थस्य सर्वतादात्म्यं वर्णयित्वा—"अथात आत्मादेशः" इत्यहमर्थाद् भिन्नमेवात्मानं सर्वतादात्म्ययोग्यं प्रतिपाद्य तदात्मतया ज्ञानिन आत्मत एव प्राणादयो भवन्तीति प्रतिपादनानन्तरं च प्रवृत्तमहमर्थव्यतिरिक्तमात्मानं प्रतिपादयति, इत्यहमर्थात्मतावादस्यात्यन्तं प्रतिकूलम्, सर्वद्रष्टृत्ववचनं तु कल्पिताहङ्कारसम्बन्धनिबन्धनं द्रष्टृत्वाद्यनुवादपरम्, न पारमार्थिकविज्ञातृत्वादिनिरूपणपरम् ॥

"स उत्तमः पुरुषः" इति ब्रह्मभावापत्तिनिबन्धनमेवोत्तमत्वं बोधयति, नतु विज्ञातृत्वादिनेति न प्रकृतोपयुक्तं वाक्यम्। अयमाशयः—सत्यमभेदपराण्यपि कानिचन वाक्यानि जीवात्मानमहमादिपदेन विज्ञात्रादिपदेन च व्यपदिशन्ति, परन्तु तानि व्यावहारिकावस्थायां व्यवहारार्थमेव तथा व्यपदिशन्ति । विवक्षितार्थस्तु सर्वत्र लक्षणया चैतन्यस्वरूपमेव, नाहमाद्यर्थः, इति तत्र तत्र मुक्तिप्रकरणादौ द्रष्टृ-विज्ञात्रादिपदप्रयोगमत्रं वाच्यविधयाऽहमर्थादिपरमपि तात्पर्यगत्या निष्कासिताहमर्थचैतन्यस्वरूपमात्रपरमेव, इति न तदद्वैतवादस्य विरुद्धम् ॥

एतेन—"तस्माद्वा एतस्माद् मनोमयाद् । अन्योऽन्तर आत्मा विज्ञानमय इति वाक्यमपि—व्याख्यातम्; तस्यापि स्वाप्नावस्थजीवपरत्वात्। अयं भावः—अन्नमयवाक्यं जागरणावस्थं जीवम्, प्राणमय-मनोमय-विज्ञानमयवाक्यानि स्वाप्नावस्थं जीवम्, आनन्दमयवाक्यं सुषुप्त्यवस्थापन्नं जीवं "ब्रह्म पुच्छं-प्रतिष्ठे"ति वाक्यं तुरीयचैतन्यं प्रतिपादयतीमिति माण्डूक्यश्रुत्येकवाक्यतयाऽवगम्यते, इति सुषुप्ति-मुक्त्याद्यवस्थासु जीवस्य विज्ञातृत्वे नेदं वाक्यं प्रमाणम्। अधिकं वेदान्तसारादौ व्यक्तम् ॥

इदमत्रालोचनीयम्—यद् विज्ञातृत्वमात्मनः स्वीकुर्वन्तः श्रीभाष्यकाराः कीदृशं तद् विज्ञानम्! यस्याश्रयः, कर्ता वा विज्ञाताऽऽत्मेति मन्यन्ते—इति। यद्यात्मनः संयोगज आत्मधर्मो नैयायिकानामिव, तर्हि तन्मत इव प्रलयादावात्मनोऽचेतनत्वापत्तिः। यदि मीमांसकमत इवात्मपरिणामो ज्ञानम्, तर्हि परिणामिनित्यत्वायोगेनात्मनोऽनित्यत्वापत्तिः; यदि सांख्य-पातञ्जल-मतवदन्तःकरणपरिणामो वृत्तिविशेषो ज्ञानम्, तर्हि नात्मनो विज्ञातृत्वम्; अन्तःकरणस्यैव तदाश्रयत्वात्, अद्वैतमतप्रवेशापत्तेश्च। अतः किमिदं विज्ञानमिति?

अत्र श्रीभाष्यकारा मन्यन्ते—अहमर्थ एव ज्ञाता। तस्य चैतन्यस्वभावत्वात् स्वयंप्रकाशोऽपि सः। यद्यप्यात्माऽपि ज्ञानेनैव प्रकाश्यते, तावतापि स्वप्रभाभास्योऽपि दीपो यथा नास्वप्रकाशः, एवमात्माऽपि नास्वप्रकाशः। तथाच यथा प्रदीपः प्रकाशस्वभावोऽपि स्वप्रभयाऽन्यानपि प्रकाशयति, एवमात्माऽपि स्वप्रकाशः स्वाभिन्नप्रभास्थानीयनित्यधर्मभूतज्ञानेन यावदात्मस्वरूपं स्थायिनाऽन्यानपि प्रकाशयति। तत्र यथा प्रभाया दीप-धर्मत्वेऽपि न शौक्ल्यादिवद् गुणत्वम्, किन्तु धर्मभूतत्वेनैव प्रदीपगुणत्वेन व्यवहारमात्रम्; वस्तुतस्तु तेजोद्रव्यमेव, एवं धर्मभूतं ज्ञानमपि स्वाश्रयादन्यत्राविद्यमानत्वात्, सर्वदाऽन्यशेषतयैव प्रकाशमानत्वाच्च गुणत्वव्यवहारास्पदमप्यात्मस्वरूपमेव। तत्र प्रभा, धर्मभूतं ज्ञानं वा प्रदीपस्यात्मनो वा विशीर्णा अवयवा इति वक्तुं न शक्यते, मणि-द्युमणि-प्रभृतीनां विनाशप्रसङ्गात्, आत्मनोऽणुपरिमाणत्वेन निरवयवत्वेनावयव-विशरणकल्पनाऽनुपपत्तेश्च। इयान् विशेषः—प्रदीपाः सप्रभाका उत्पद्यन्ते, सप्रभाका विनश्यन्ति। आत्मा नु धर्मभूतज्ञानेन सहैव स्वरूपभूतेन सर्वदा वर्तते; आत्मन उत्पत्ति-विनाशादिविकाराभावात्। ज्ञानमुत्पन्नं नष्टमित्युत्पत्ति-विनाशप्रत्ययस्तु धर्मभूतज्ञानसङ्कोच-विकासोत्पत्तिविनाशाभिप्राय एव। तथाच—"विज्ञानघनः" इति ज्ञानात्मत्ववर्णनं विज्ञातृत्ववर्णनमुभयमुपपद्यते—इति॥

अत्रेदमालोचनीयम्— विकसितप्रदीपावयवविशेषः एव किं प्रभा, उत प्रदीपव्यतिरिक्तं प्रभाख्यं तेजोद्रव्यं संकोच-

विकासशालि तत्र स्वीक्रियत इति । तत्र 'निबिडावयवं तेजोद्रव्यं प्रदीपः, प्रविरलावयवं तेजोद्रव्यं प्रभे''ति श्रीभाष्यात् प्रभायाः प्रदीपकार्यद्रव्यान्तरत्वमित्येव स्वीकर्तुं युक्तम्, नहि प्रदीप एव प्रभा । तथाच स्वकार्यद्रव्यान्तरद्वारा प्रदीपस्यान्यप्रकाशकत्वेऽपि धर्मभूतस्य स्वरूपस्य नित्यस्य च द्वारेणात्मनो ज्ञातृत्वं नोपपादयितुं शक्यम् । धर्मभूतज्ञानमपि यदि प्रभावद् द्रव्यान्तरमेव, तर्हि ब्रह्म-प्रकृति-सूक्ष्मचित्-धर्मभूतज्ञानानां चतुर्णां पदार्थानामङ्गीकारापत्त्या पदार्थत्रयवादायोगः । नहि द्रव्यं किमपि द्रव्यान्तराश्रयमेव कुत्रापि दृष्टम्, येन नित्यं जीवाश्रितं च धर्मभूतं ज्ञानं स्यात् । "गुणाद्वाऽऽलोकवत्" इति चैतन्यगुणद्वाराऽणोरपि जीवस्य सर्वशरीरावयवव्याप्तिवर्णनस्य धर्मभूतज्ञानस्य संकोच-विकासादिसाधनेऽपि न तात्पर्यम् । प्रविरलावयवप्रभाख्यतेजोद्रव्यस्य संकोच-विकासशालिन एकस्यैव स्वीकारे प्रमाणाभावात्, भिन्नभिन्नानि हि तेजोद्रव्याणि प्रभारूपाणि प्रभान्यूनत्वाधिक्यादावुत्पद्यन्ते स्वतन्त्राणि । तथाच वर्तिसङ्ख्यानुगुणं तेजोद्रव्याणि प्रदीपाश्च भिन्नभिन्ना एवोत्पद्यन्ते । अत एव 'सेयं दीपज्वाले'ति सादृश्यनिबन्धनमेव प्रत्यभिज्ञानम्, नत्वैक्यदर्शनमिति सर्वदर्शनसिद्धान्तः । अतश्चाणोरपि स्वदेशवर्तिनो देशान्तरवर्तिवस्तुज्ञानमिन्द्रियसंप्रयोगादिजन्यं भवितुमर्हति, इति ज्ञानजनकेन्द्रियसम्बद्ध-त्वगादिसम्बन्धेन परम्परया सर्वशरीरव्यासिवर्णन एव तात्पर्यम्, नतु ज्ञानसंकोच-विकासादिकल्पनायाम् । अत एव—अविरोधश्चन्दनवत्'' इति शरीरैकदेशसम्बन्धेन सकलदेहव्यापित्वोपपादनमुपपद्यते । नहि हरिचन्दनबिन्दुः स्वगुणद्वारा संकोच-विकासशालिगुणद्वारा वा सर्वशरीरव्यापी ॥

एतेन—"अविरोधश्चन्दनवत्" इति मतान्तरमिति—प्रत्युक्तम्; मतान्तरत्वसाधकप्रमाणभावात् । यदि "गुणाद्वाऽऽलोकवत्" इति दृष्टान्तान्तरनिर्देशात् पूर्वत्रानास्थेति मन्यते, तर्हि—

अनास्थाकारणं वक्तव्यम्। प्रदीपस्यापि स्वीयप्रभाद्वारा सम्बन्ध-वर्णनेन संकोच-विकासशालित्वं कथं वाऽवगम्यते ? प्रभासंकोच-विकासयोरप्रामाणिकत्वात् ॥

"प्रदीपवदावेशस्तथाहि दर्शयती"ति सूत्रं हि प्रदीपस्यैकस्यैव प्रदीपान्तरेषु स्वोत्पादितेष्वावेशेनानेकभावः, एवं विद्वुष एकस्यैवा-नेकभाव इत्येव बोधयति, नतु प्रभाद्वारकदेशान्तरसम्बन्धादिकमत्र विवक्षणीयम्। अन्यथा "तु गुणाद्वाऽऽलोकवत्" इत्यनेनैव सिद्ध-त्वाद् व्यर्थमिदं सूत्रमापद्येत। अनेन तु ज्ञायते—"गुणाद्वाऽऽलो-कवत्" इति पूर्वपक्ष एव, न सिद्धान्तः, इति जीवाणुत्ववादसिद्धा-न्तपारमार्थिकतायां न सूत्रकाराणां तात्पर्यम्। तथाच स्वसंकल्प-वशात् समनस्कानेकशरीरोत्पत्तिवर्णन एव तात्पर्यम् , नतु प्रेतकल्प-शरीरान्तरमात्रव्याप्तिकल्पनायाम्। किंच प्रदीपकार्यतेजोद्रव्यान्तरं प्रभा हि प्रदीपस्यैव परिणामविशेषः, इति धर्मभूतज्ञानस्यापि तद्वदेवात्मपरिणामत्वमेव स्वीकर्तव्यम्। अत एव—धर्मभूतज्ञानस्य श्रीभाष्यमतरीत्याऽऽत्माभेदोऽपि "व्यतिरेको गन्धवत्" इति सूत्रेण प्रतिपादित उपपद्यते, इति प्रदीपप्रभादृष्टान्तेन धर्मभूतं ज्ञानं साधयद्भिरगत्या शरीरपरिमाण आत्मेति जैनमतमेव स्वीकर्तव्यं स्यात् ॥

तच्च—"एवं चात्माकात्स्न्र्यमि"ति सूत्रानुसारेण श्रीभा-ष्यकारा अपि निरस्यन्ति। तथाचात्मनोऽर्थान्तरस्य धर्मभूत-ज्ञानस्यापि संकुचित-विकसितावस्थाविशेषापन्नात्मस्वरूपत्वं यदि स्वीक्रियेत, तर्हि दिगम्बरमतप्रवेशापत्तिः श्रीभाष्यकाराणाम् , यदि तु धर्मभूतं ज्ञानमात्मस्वरूपमेव संकोच-विकासशालि, नात्मनः संकोच-विकासौ, इति नात्मानित्यता, न वा धर्मभूतज्ञानानित्यता; धर्मिनाशस्यैव नित्यतदाश्रयधर्मनाशं प्रति कारणत्वेन संकोच-विका-सशालित्वेऽपि तदनित्यत्वाप्रसरादिति मन्यते, तर्हि स्वतन्त्रेय-

मदृष्टान्तसिद्धा केनाप्यपरेण दार्शनिकेनानालोचिताऽस्वीकृता च कल्पना न प्रमाणपदवीमधिरोहति। संकोच-विकासशालित्वेऽपि नित्यत्वे "एवं चात्माकात्स्न्र्यम्" इति सौत्रन्यायविरोधोऽप्यत्र मतेऽपरिहरणीय एव; अतो दर्शनान्तरसिद्धात्मपरिणामतादिवादो वा धर्मभूतज्ञानस्य स्वयमुत्पत्त्यादिविकाराङ्गीकारेण स्वीकर्तव्यः, अन्तः-करणपरिणामवादो वा, येन ज्ञानमुत्पन्नं विनष्टमिति व्यपदेशस्य संकोच-विकासोत्पत्त्यादिपरतयाऽन्यथानयनक्लेशोऽपि न समा-पतति। तत्र च सर्व एव वेदान्तदर्शनभाष्यकाराः श्रीभाष्यकारान् विहाय विज्ञातृत्वं जन्यज्ञानमादायैव, नतु नित्यज्ञानमादायेति स्वी-कुर्वन्ति। तत्र केचन नैयायिकमतं स्वीकुर्वन्ति, केचन मीमांसकम-तम्; केचन साख्य-पातञ्जलमतमिति त्वन्यदेतत्। ज्ञानरूपत्वमात्मनस्तु सर्व एव स्वीकुर्वन्ति। तथाच परिणामवादस्यानित्यत्वापत्त्या श्रीभाष्यकारैरपि निरसनात्, आरम्भवादस्य तु वेदान्तदर्शनेषु बहुशो निरासाद् गत्यन्तराभावात् साङ्ख्य-पातञ्जलप्रक्रियामादायैव ज्ञातृत्वमात्मनः समर्थनीयम्। तथाचान्तःकरण-चैतन्ययोः परस्पर-तादात्म्याध्यासेनाहमर्थस्यैव ज्ञातृत्वम्, नतु स्वरूपचैतन्यस्य, इति स्वरूपतो ज्ञानरूपत्वम्, औपाधिकं ज्ञानाश्रयत्वमित्यङ्गीकारे नित्य-ज्ञानरूपत्वमनित्यज्ञानाश्रयत्वं चोपाध्यसम्बन्ध-सम्बन्धाधीनं निरूढं भवति। तथाचात्मन उपाधिसम्बन्धाधीनमनित्यत्वं स्वरूपतो नित्यत्वं चेव ज्ञानाश्रयत्व-ज्ञानत्वव्यपदेशावुभावप्युपपन्नौ॥

एतेन—"ज्ञोऽत एवे"ति सूत्रमपि—व्याख्यातम्; नित्यधर्म-भूतज्ञानाश्रयत्वप्रतिपादनासंभवात्। इदमत्रालोचनीयम्—यद् ब्रह्मणि श्रुतिविरोधपरिहारपरे द्वितीयाध्यायद्वितीयपादे जीव-नित्यत्व-तदणुत्व-तत्परापेक्षकर्तृत्व-तदंशत्वादिविचारस्य को वा प्रसङ्गः? यदि जीवस्य ब्रह्मशरीरत्वप्रतिपादनार्थम्, तर्हि व्यर्थमिदम्; अनित्यत्वेऽपि जीवस्य भगवच्छरीरत्वोपपत्तेः, पृथिव्यादिवत्,

आकाशाद्यनित्यत्वप्रतिपादनस्य वैयर्थ्याच्च। यदि कारणवाक्यानां सूक्ष्मचिदचिच्छरीरकपरमात्मपरत्वात् कारणावस्थायां चिच्छरीरकत्वमपि वर्तत इति निरूपणार्थं तन्नित्यत्वसमर्थनम्, तर्हि प्रकृतिसत्यत्वासमर्थनाद् न्यूनता। अनित्यत्वशङ्का ह्युभयत्र समाना। अस्तु वा कथंचन तन्नित्यत्वसमर्थनस्य ब्रह्मस्वरूपप्रतिपत्तावुपयोगः, तज्ज्ञानाश्रयत्व-ज्ञानरूपत्व-तदणुत्वादेश्च विचारः कथमुपयुज्यते? नहि ज्ञानरूपत्वमात्रं शरीरत्वविरोधि, नवाऽणुत्वम्; प्रकृतेर्व्यापिकाया अपि शरीरत्वस्वीकारात्, अतो ज्ञानाश्रयत्वादिसमर्थनं श्रीभाष्यमते जीवस्य निष्प्रयोजनम्, अद्वैतमते तु ब्रह्मव्यतिरेकेणाकाशाद्यभावनिरूपणार्थमाकाशाद्यनित्यत्वव्यवस्थापनम्, तथा ब्रह्मव्यतिरेकेण ज्ञानाश्रयज्ञानस्वरूपं नास्तीति बोधनेन जीवस्यैव ब्रह्मत्वमिति निर्णयाद् ब्रह्मविचार एवायं "ज्ञोऽत एवे" त्यादिविचारः। तथाच जीवस्य शरीरसम्बन्धवियोगाद्यभिप्रायेणैवोत्पत्ति-मरणादिव्यपदेशः, नतु स्वरूपत इति मतद्वयेऽपि समानमेतत्। स्वरूप एव परं विप्रतिपत्तिः। तत्र यदि ज्ञानाश्रयादिरूपः; ज्ञाज्ञावित्यादिश्रुत्यनुसारात्, तर्हि जीवविचारोऽयं न ब्रह्मविचारः, यदितु ज्ञानरूप एव जीव इति व्यवस्थाप्यते, तर्हि तु ब्रह्मविचारः। तथाच जीवः, ज्ञः=ज्ञानरूप एव; अत एव=श्रुतिभ्य एव "तत्त्वमसी" त्यादिवाक्येन सत्य-ज्ञानादिरूप-ब्रह्मस्वरूपत्वावगमादित्येवात्र सूत्रार्थः। ज्ञानाश्रयत्वं जीवस्य प्रत्यक्षैकगम्यमिति नात्र श्रुतिप्रमाणापेक्षा। श्रीभाष्यकारा अपि ज्ञानाश्रयत्वं ज्ञानरूपत्वमुभयं चात्र साध्यं मन्यन्ते, इति ज्ञपदस्य भावार्थ-कप्रत्ययान्तत्वेन ज्ञानपरत्वं तेषामपि सम्मतमेव। ततश्च "ज्ञश्चात एव" इति चशब्दाश्रवणाद् नात्रोभयविवक्षायां तात्पर्यं संभवति। सति चैवमुत्क्रान्ति-गत्यादिसूत्रमपि पृथगधिकरणान्तरारम्भपरं सद् जीवाणुतानिरासपरं सुसङ्गतं भवति। तथासति ह्यौपाधिकाणुत्वसमर्थनपूर्वकं स्वरूपतो विभुत्ववादस्य समर्थनाद् जीव-ब्रह्मैक्यमप्युपपादितप्रायम्। ततश्च "ज्ञोऽत एवे" ति

सूत्रमपि संविदात्मतापक्षस्यैवानुकूलम् , नतु ज्ञात्रात्मतापक्षस्य। 'संविदनुभूति-ज्ञानादिशब्दाः सम्बन्धिशब्दा इति तु जन्यज्ञानं वृत्त्यवच्छिन्नचैतन्यमादायोपपद्यते। नहि वयं जानात्यादिपदगम्यं नित्यां संविदं वदामः, किन्तु केवलचिदादिपदगम्यम्। श्रीभाष्यकारा अप्यात्मनश्चिद्रूपतां स्वीकुर्वन्तश्चिदादिपदबोध्यमात्मस्वरूपं न सकर्तृकं सकर्मकं वा मन्यन्ते, इति चिदादिपदेन केवलात्मावबोधो न दुष्टः। स्वप्रकाशत्वं हि संविद आत्मनश्च श्रीभाष्यकारा मन्यन्ते, परं तु भिन्नरूपं तत् संविद्यात्मनि च स्वीकुर्वन्ति। अद्वैतिनस्तु एकरूपमुभयोः स्वप्रकाशत्वमिति न स्वरूपभेदं मन्यन्ते ॥

तच्च स्वप्रकाशत्वमद्वैत्यभिमतम्—स्वेतरचिदनपेक्षप्रकाशत्वमेव, नतु स्वसत्ताप्रयुक्तप्रकाशत्वम् , येन दीपेऽनैकान्त्यं स्यात्। दीपो हि स्वप्रकाशार्थं दीपान्तरमनपेक्षमाणोऽपि चिदपेक्षणाद् न संविदिव स्वप्रकाशो विवक्ष्यते, किन्तु प्रकाशान्तरानपेक्षप्रकाशरूपत्वेनैव, इति नासिद्धिर्विरोधो वा; नवाऽव्यभिचरितप्रकाशसत्ताकत्वम् , येन सुखादिषु व्यभिचारः। तथाच—संवित् , आत्मा, स्वप्रकाशत्वात् , यन्नैवं तन्नैवमित्यनुमानात् संविदात्मत्वहेतुकं तद् दीपे सुखे वा न व्यभिचरति; इत्यनुक्तोपालम्भनमेवेदं स्वप्रकाशत्वहेतुनिरसनम् ; सुखादीनां स्वव्यतिरिक्तचिदपेक्षप्रकाशकत्वेनाव्यभिचारात्। संवित्तु संविदात्मभेदस्येदानीं सन्दिग्धत्वाद् न स्वातिरिक्तचिदपेक्षा, इति न हेत्वसिद्धिः ॥

एतेन—ज्ञानमपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, 'अहं सुखी'ति वदहं जानामीति। अतः स्वस्मै प्रकाशमानत्वरूपं स्वप्रकाशत्वं संविद्यसिद्धम्। तस्मात् स्वात्मानं प्रति सत्तयैव सिद्ध्यन्नजडोऽहमर्थ एवात्मेति—परास्तम् ; अनुक्तोपालम्भनात् ॥

नहि स्वस्मै प्रकाशमानत्वं स्वप्रकाशत्वमित्यद्वैतिनो मन्यन्ते। स्वात्मानं प्रति स्वसत्तयैव प्रकाशमानत्वं तु न स्वप्रकाशत्वं सं-

विदात्मसाधारणं श्रीभाष्यप्रक्रियायां स्वीक्रियमाणायां संभवति; स्वाश्रयं प्रत्येव संविदः स्वसत्तया प्रकाशमानत्वात्, आत्मनश्च स्वात्मानं प्रति स्वसत्तयाऽप्रकाशमानत्वात्, इत्यनुगतं स्वप्रकाशत्वमेव श्रीभाष्यमते निर्वक्तुमशक्यम्, अतोऽद्वैताभिमतं स्वप्रकाशत्वं सांप्रतम्। तच्च संविदतिरिक्तात्मसाधनं न भवत्येव; संविदः स्वाश्रयानपेक्षणात्। तथाच—संवित्, नात्मा, तत्सम्बन्धितया प्रकाशमानत्वरूपस्वप्रकाशत्वात्, इति विरोधस्यापि नावसरः॥

तथाच—"ज्ञानस्यापि प्रकाशता तत्सम्बन्धायत्ता, तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वमितरं प्रत्यप्रकटत्वं च; अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवेति श्रीभाष्योक्तिरपि न सावसरा। सुखादिसाधारणस्य विद्यमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वरूपस्य स्वप्रकाशत्वस्य धर्मभूतज्ञानालक्षणत्वात्, नहि सुखमप्यात्मनो धर्मभूतं ज्ञानमेव; सुखं जानामीति प्रत्यक्षानुपपत्तेः। एतेन—स्वसत्तया स्वाश्रयं प्रति प्रकाश एवानुभूतिरित्याद्यपि—परास्तम्; सुखानुभूत्योरविशेषापत्तेः॥

तदिदं सिद्धम्—यत् संविदेवात्मा, तत्र ज्ञातताप्रत्ययस्त्वन्तःकरणतादात्म्याध्यासनिबन्धन एव, नाहमर्थ आत्मा। अयमत्र प्रयोगः—अहमर्थो नात्मा, स्वप्रकाशत्वात, धर्मभूतज्ञानवत्, सुखवच्च। अङ्गीकृतं हि श्रीभाष्यकारैरहमर्थ-तदतिरिक्तधर्मभूतज्ञान-सुखानां स्वप्रकाशत्वमिति न हेत्वसिद्धिः, दृष्टान्तासिद्धिर्वा॥

यत्तु—संविद एव भ्रान्त्या ज्ञातृतयाऽवभासेऽनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेत—अनुभूतिरहमिति। अत्र तु पृथगवभासमानैवानुभूतिरर्थान्तरमहमर्थं विशिनष्टि दण्ड इव देवदत्तम्, तथाह्यनुभवाम्यहमिति प्रतीतिरिति—श्रीभाष्यकारा वदन्ति॥

तदिदमहमर्थस्यानध्यस्तस्याधिष्ठानरूपस्याद्वैतिभिरनङ्गीकाराद्

अन्तःकरणचैतन्यतादात्म्याध्यासनिष्पन्नस्याहमर्थस्य तदेकदेशान्तःकरणधर्मधृत्तेश्च चैतन्येऽध्यासेनायो दहतीतिवद् जानामीति प्रतीतिविशेष्यत्वे बाधकाभावाद् दण्ड-देवदत्तयोरिव चैतन्यानुभवयोः पृथगवभासाभावाच्च नाद्वैतमतदूषणायालम्। तथाच नात्र 'दण्डी देवदत्तः,' इति ज्ञानतौल्यं समापतति, किन्तु दग्धृत्वाश्रयवह्नितादात्म्याध्यासाद् 'अयो दहती'ति व्यवहारतौल्यमेवेति न विरोधः। तथाचाहमर्थ इव तस्य ज्ञातृत्वमपि मिथ्यैव; देहात्माभिमानवत एव ज्ञातृत्वप्रत्ययात्, संवित्तु विनापि देहात्माभिमानं स्वाप-मूर्च्छाऽसंप्रज्ञातसमाधि-मुक्त्यादौ भासमानत्वाद् अबाधाच्च न मिथ्या; अहं प्रत्यये त्वहङ्कारोपहितत्वेनैव भानात् तेन रूपेण मिथ्यात्वमद्वैतिनोऽपि मन्यन्ते। स्वरूपेण ज्ञातृत्वं तु चैतन्यस्यैकमेवेत्यादिश्रुत्या बाधितत्वाद् मिथ्यैव; मिथ्याभूताहमर्थधर्मत्वात्, विक्रियात्मकमिथ्याभूतजडान्तःकरणधर्मत्वाद्वा। अत्र प्रथममतेऽहमर्थस्य विशिष्टस्य चेतनत्वाद् ज्ञातृत्वस्य चेतनासाधारणधर्मत्वेऽपि न विरोधः। द्वितीयमते तु ज्ञानक्रियाश्रयत्वरूपकर्तृत्वस्य क्रियोपादानान्तःकरणधर्मत्वमेव युक्तम्। अत एव—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे''ति श्रुतिरुपपद्यते। देहादेस्तु ज्ञानात्मनाऽपरिणामित्वाद् दृश्यत्वादिनाऽन्तःकरणादिसाम्येऽपि न द्रष्टृत्वादिकं भवितुमर्हति। नियमेनाहंप्रतीतिविषयत्वमेव यदि प्रत्यक्त्वम्, तर्हि देहादेस्तदभावाद् न प्रत्यक्त्वप्रसङ्गः। एतेन—देहवत् दृश्यत्व-पराक्त्वादिभिर्हेतुभिरन्तःकरणरूपाहङ्कारोऽपि द्रष्टृत्व-प्रत्यक्त्वादिभिर्विविच्यत इति—परास्तम्। अतो विरोधलेशस्याप्यभावाद् नाहङ्कारस्याज्ञातृत्वम्। नहि ज्ञातृत्वं दृशिधर्मः, किन्तु दृश्यधर्म एव, दृशित्वं वा ज्ञानधर्मः, यतोऽहङ्कारस्य दृशित्वमिव ज्ञातृत्वमपि नास्तीति कल्पनाया अवकाशः स्यात्॥

एतेन—यथा द्रष्टृत्वं तत्कर्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यमिति—परास्तम्; देवदत्त आत्मानं जानाती-त्यादावेकस्यैव ज्ञान-क्रिया-कर्तृ-कर्मभावदर्शनेन तथाऽनभ्युपगमात् ॥

किंच कीदृशं ज्ञातृत्वमहङ्कारस्य वार्यते ? यदि ज्ञानगुणाश्रयत्वम्, तर्हि नैयायिकाभिमतगुणत्वे ज्ञानस्य ज्ञातृ-ज्ञेयादिविभागायोगः, जानातेर्धातुलक्षणासम्भवेन जानात्यादिपदासाधुत्वापत्तिः, अथ ज्ञानक्रियाकर्तृत्वम्, तर्हि न तन्निष्क्रियस्यात्मनः सम्भवति, किन्त्वहङ्कारस्यैव सम्भवति ॥

एतेन—न ज्ञातृत्वं विक्रियात्मकम्, ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम्, ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यमित्यादि – परास्तम्। "ज्ञोऽत एवे"ति सूत्रं तु ज्ञानस्वरूपत्वमेवात्मनो गमयति, नतु स्वाभाविकज्ञानाश्रयत्वमिति हि पूर्वमेव विवेचितम् । नहि ज्ञानस्वरूपस्यैव नित्यधर्मभूतज्ञानाश्रयत्व उक्तं सूत्रं गमकम्। सत्यम्—"नात्मा श्रुतेः" इत्यनेन सूत्रेणात्मनो ज्ञानरूपस्य नित्यत्वं साधितम्, धर्मभूतं ज्ञानं विज्ञात्रादिशब्दान्यथानुपपत्तिगम्यं धात्वर्थतया कर्तृजन्यतया वाऽनित्यतयैव प्रतीयमानं कथं नाम निष्प्रमाणम् कर्तुं शक्यते? श्रुति-सूत्रादीनां केषामपि प्रमाणानामत्राप्रदर्शनात्। तथाचात्मनो जन्यज्ञानाश्रयत्वं वा नैयायिकादिवदङ्गीकर्तव्यम्, अथवा ज्ञानरूपत्वमेव न ज्ञातृत्वमिति वा स्वीकर्तव्यम्, नतु नित्यधर्मभूतज्ञानाश्रयत्वमप्रामाणिकम् ॥

प्रदीपप्रभादृष्टान्तेन हि नित्यं सङ्कोचविकासशलि च ज्ञानं श्रीभाष्यकारा मन्यन्ते ।

इदमेवात्रालोचनीयम्—यद् अणोरात्मनः सावयवं धर्मभूतं च ज्ञानं द्रव्यस्वरूपं कथं वा धर्मः स्यात्? नहि निरवयवस्य स्वाभाविको धर्मस्तदकार्यः सावयवः कुत्रापि दृश्यते। धर्मभूतज्ञानस्यापि निरवयवत्वे तु सङ्कोच-विकासायोगः, इति कथं वा नित्यस्यात्मनो

नित्यं धर्मभूतं ज्ञानं स्वाभाविको धर्मः स्यात्? सङ्कोच-विकास-शालि सावयवं च धर्मभूतं ज्ञानं नित्यमिति कथं न व्याहृतिः? अन्यथा किं दिगम्बरैरेवापराद्धम्?

किञ्च धर्मभूतं ज्ञानमिदं किमपरिच्छिन्नं कर्मतारतम्यात् संकुचितमिति मन्यते, उत परिच्छिन्नं स्वकर्मसङ्कल्पादिवशादपरिच्छिन्नं भवतीति। अन्त्येऽपरिच्छेदस्य कर्मसाध्यत्वे तदनित्यत्वापत्त्या मुक्तानां पुनर्बन्धापत्तिः, आद्ये तु प्रभादृष्टान्तायोगः। नहि प्रभाऽपरिच्छिन्ना सङ्कोचमात्रं सामग्रीवशात् प्राप्नोति, किन्तु विकासमपि। यथाचात्र मते कर्मवशेनैव सङ्कोचव्यवस्थायामिन्द्रियसृष्टिवैयर्थ्यम्, विनाऽपीन्द्रियं धर्मभूतज्ञानस्य कर्मणा सङ्कोचतारतम्येनैव विषयप्रकाशाप्रकाशव्यवस्थासिद्धेः, तथाऽन्यत्र व्यक्तम्। स्वतन्त्रेच्छो भगवानेव तत्र प्रमाणमिति हि श्रीभाष्यानुयायिनां समाधानम्, इदं तु नामान्तरेणासमाधेयत्वमेव सूचयति॥

स्यादेतत्--ज्ञानोत्पत्ति-नाशव्यपदेशः कथमुपपद्यते श्रीभाष्यकाराणां मते? यदि ज्ञानसङ्कोचोत्पत्तौ तदुत्पत्तिः, तन्नाशे च तन्नाशो व्यपदिश्यते, तर्हि जानात्यादिपदार्थः ज्ञानसङ्कोचकर्तेति वक्तव्यम्। तत्र चेश्वरस्य सर्वदाऽपरिच्छिन्नधर्मभूतज्ञानस्य कर्माधीनस्येन्द्रियद्वारकस्य च सङ्कोचस्यानङ्गीकारात् "तदैक्षते"त्यादावीश्वरे जानातिपदार्थसम्बन्धः कथं सङ्गच्छते? इति ब्रह्मसर्वज्ञत्वमपि दुरुपपादम्, तदेवं कृत्वाचिन्तयाऽहङ्कारस्यैव स्वाभाविकं ज्ञातृत्वम्, नतु चेतनस्येति व्यवस्थापितम्॥

वस्तुतस्तु—अहङ्कारस्यापि ज्ञातृत्वं चिच्छायापत्त्या, चित्संपर्कतः, चिदभिव्यञ्जकत्वेन वा गौणमेव, न मुख्यम्। ज्ञातृत्वं हि ज्ञानाश्रयत्वम्। तच्चाहङ्कारे चैतन्यप्रतिफलनेन—विनैवायासं सिद्ध्यति। तथाच प्रतिबिम्बितचित्कत्वं ज्ञातृत्वमहङ्कारस्य दुरपह्नवम्। इयमेव चिच्छायापत्तिर्नाम—यत् चैतन्यप्रतिबिम्ब-

वत्त्वम्, इदं चाहंकारस्य चित्प्रतिबिम्बात् पूर्वं न स्वीक्रियते, नवा चिद्गतस्य ज्ञातृत्वस्याहंकारे समारोपः, इति नाहंकारे चिद्धर्मो- ध्यासेन चित्यहंकारधर्माध्यासेन वा ज्ञातृत्वमिति विकल्प-तत्परि- हारादिकं निरालम्बमेव । यथा चाचाक्षुषस्याचाक्षुषे प्रतिबिम्बो न विरुद्धः, जल आकाशप्रतिबिम्बदर्शनात्, वर्णेषु ह्रस्वत्व-दीर्घ- त्वादिध्वनिधर्मप्रतिबिम्बदर्शनाच्च, तथा सिद्धान्तलेशसंग्रहादौ व्यक्तम्। एतेन—चित्सम्पर्काद् अहंकारज्ञातृत्वमपि—व्याख्या- तम्; अध्यस्तचैतन्यतादात्म्यस्यैव ज्ञातृत्वरूपत्वात्। अयं च पक्षो नीरूपप्रतिबिम्बायोगपक्षेण । अत्रापि—न ज्ञातृत्वमन्यधर्मोऽन्य- त्राध्यस्यते, इति धर्माध्यासो न विवक्ष्यते, येन "संविदि वास्तव- ज्ञातृत्वानभ्युपगमादेव न तत्सम्पर्कादहंकारे ज्ञातृत्वम्, वह्निगतस्ये- वौष्ण्यादेरयसि वह्निसम्पर्कात् प्रतीतिः, अहंकारस्य त्वचेतनस्य ज्ञातृत्वासम्भवादेव सुतरां न तत्सम्पर्कादिह ज्ञातृत्वमित्यादिश्री- भाष्योक्तीनामुक्तपक्षनिरासपराणामवसरः स्यात्। एतेन—चिद- भिव्यञ्जकत्वेनाहंकारस्य ज्ञातृत्वमिति पक्षोऽपि—व्याख्यातः। चिदभिव्यञ्जकत्वं हि स्वान्तःस्थतया चिद्भासकत्वम्; तच्च सत्यं चैतन्यस्याहंकारे प्रतिबिम्बेनैव भवतीति प्रथमपक्षादविशेषः प्रति- भाति, तथापि बिम्ब-प्रतिबिम्बयोर्भेद इति पक्षेण प्रथमः पक्षः, तयोरभेद इति पक्षेणायं पक्ष इति विशेषोऽनुसन्धेयः। प्रतिबिम्बो- पाधित्वं चाहंकारस्यादर्शादिवदतिस्वच्छत्वाद् उपपद्यते। स्वच्छत्वं हि प्रतिबिम्बग्रहप्रयोजकम्, नाजडत्वम्। अन्यथाऽऽदर्शादेरपि जडत्वात् प्रतिबिम्बकथैवोच्छिद्येत। यद्यपि स्वयंप्रकाशा चित्; तथाप्यावृतत्वाद् अज्ञानेनाज्ञाननिरासार्थमहंकारसम्बन्धमपेक्षते। यथा च स्वयंप्रकाशस्याप्यावरणाभिभवार्थमन्तःकरण-तद्वृत्तिसम्बन्धो नियतः, तथोपपादयिष्यते। इयान् विशेषः—घटादिभानस्थले कादाचित्को वृत्तिसम्बन्धः, कादाचित्कश्चावरणाभिभवः; ब्रह्मणस्तु

कादाचित्केन वृत्तिसम्बन्धेन मूलाविद्यानिवृत्त्या सार्वदिकावरणाभिभवः। जीवचैतन्यस्य तु साक्षिरूपस्य यावद्ब्रह्मसाक्षात्कारं स्थूलरूपेण सूक्ष्मरूपेण वाहंकारोपहितत्वात् तत्प्रतिफलनाद्वा सार्वदिक आवरणाभिभव इति। यद्यप्यहंकारसंविदोर्जडत्व-स्वप्रकाशत्वादिना स्वभावविरोधो वर्तते, तथापि नायं बिम्ब-प्रतिबिम्बभावं विरुणद्धि; जलेऽपि सूर्यप्रतिबिम्बदर्शनात्। नहि जल-सूर्ययोः स्वभावैक्यम् ॥

एतेन—शान्तोऽङ्गार इवादित्यमहंकारो जडात्मकः। स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत्॥ व्यक्तृ-व्यङ्ग्यत्वमन्योन्यं न च स्यात् प्रातिकूल्यतः। व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद् यथा घटे ॥ इति—प्रत्युक्तम्; रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्यत्वदर्शनेन परस्पराभिव्यङ्ग्यत्वाविरोधात् ॥

व्यक्तं चाधिकं सिद्धान्तलेशसंग्रहे। आदित्याभिव्यङ्ग्यजलाशय एवादित्यप्रतिबिम्बदर्शनेन प्रकाशप्रतिबिम्बस्थले सर्वैस्तदभ्युपगमात्।

एतेन—करतलसन्निहिता आदित्यरश्मयो बहुलाः स्वयमेव स्फुटतरमुपलभ्यन्ते, इति करतलस्य तद्बाहुल्यमात्रहेतुत्वम्, नाभिव्यञ्जकत्वमिति—परास्तम्; वृक्षादिप्रतिहतादित्यरश्मीनां बाहुल्येऽपि स्फुटतरमनुपलम्भेन करतलाद्यवच्छेदेनैवादित्यरश्मीनां स्फुटतरोपलम्भेन च करतलादीनामेवाभिव्यञ्जकत्वमित्यवश्यं स्वीकरणीयत्वात्। यद्यपि—भाष्योक्तरीत्या नाहंकारेण संवित् संवित्प्रकाशो वोत्पाद्यते; तदनुभवसाधनानुग्राहकत्वं तु वर्तत एव। सोऽप्यत्र यद्यपि नेन्द्रियसम्बन्धहेतुत्वेन, तथापि कल्मषापनयनेनाविरुद्धः। कल्मषं चात्रावस्थाऽज्ञानमेव। अन्तःकरण-तत्परिणामान्यतरापोह्यं ह्यज्ञानं नाम, नतु केवलचैतन्यरूपज्ञाननिवर्त्यम्, येन संविदाश्रयत्वमज्ञानस्य विरुद्धम्। संभवति ह्यन्तःकरण-ज्ञानान्यतराज्ञानयोः चैतन्याश्रय-विषययोः समानाश्रयविषयकत्वम्; उभयोरपि

स्वोपहितान्याविषयकत्वे सति स्वोपहितविषयत्वस्य तदनाश्रयत्वे सति तदाश्रयत्वस्य च सत्त्वात् ॥

एतेन—संविदाश्रयत्वं नाज्ञानस्य संभवति; ज्ञानसमानाश्रयत्वात्, तत्समानविषयत्वाच्च। ज्ञातृभाव-ज्ञेयभावरहिते ह्यज्ञानम्। अतः. साक्षिणि नाज्ञानं भवितुमर्हति। यथाहि ज्ञानाश्रयत्वशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वम्, तथा ज्ञानेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वम्। संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽप्यात्मतयाऽभ्युपगतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ। तथाच न केनचित् कदाचित् संविदाश्रयमज्ञानमुच्छिद्यते इत्यादि—परास्तम् ॥

इयं ह्यत्राद्वैतिनां प्रक्रिया—अन्तःकरणं तत्परिणामवृत्तिविशेषो वाऽज्ञानविरोधि, नतु शुद्धं चैतन्यमज्ञानविरोधि। तथाचान्तःकरणवृत्तेरन्तःकरणस्य वाऽज्ञानसमानाश्रयविषयकत्वमस्ति नवेत्येतद्दृष्ट्याऽऽलोचनीयम्। तत्तु पूर्वोक्तप्रकारेण स्वोपहितान्याविषयकत्वे सति स्वोपहितविषयकत्वं समानविषयकत्वम्, विषयपद आश्रयपदप्रक्षेपेणोक्तमेव रूपं समानाश्रयत्वम्। यदा चैतन्याकारा वृत्तिरुदेति चैतन्यदेशस्था च, तदा चैतन्यदेशस्थं चैतन्यविषयं चाज्ञानं निवर्त्यते, यदा तु न वृत्तिः, तदाऽज्ञानं चैतन्याश्रयविषयं वर्तते। अत्र सर्वत्र प्रत्यक्षस्थले विषयचैतन्य-प्रमातृचैतन्ययोर्वृत्तेरन्तःकरणस्य वा बहिर्निर्गमद्वारैकलोलीभावेनान्तःकरण-विषय-तद्वृत्तीनां समानाश्रयविषयत्वं तु सम्यगेमेव संभवति। तथाचान्तःकरणवृत्तिद्वारा ज्ञातृभावयोग्य एव चैतन्ये शुद्धेऽज्ञानं संभवति, घटादेस्तु चैतन्यावच्छेदकत्वाद् न ज्ञातृत्वं वर्तत इति न दोषः। वस्तुतस्तु ज्ञानाज्ञानयोः समानविषयत्वमेवापेक्षितम्, नतु समानाश्रयत्वमपि। अन्यथा घटादेर्ज्ञातृत्ववत् अज्ञातत्वमपि न स्यात्। साक्षिचैतन्यं त्वन्तःकरणोपहितमेव, नतु शुद्धमिति सिद्धान्ते तस्याज्ञातत्वं नाद्वैतिनोऽपि स्वीकुर्वन्ति। एतेन—संविदोऽज्ञानाश्रयत्वेनाभ्युपग-

ताया ज्ञानविषयत्वाभावेन न तद्गताज्ञाननिवृत्तिरिति—निरस्तम्; न ह्यद्वैतिनः संविद्रूपस्यात्मनो वृत्तिविषयत्वमपि न स्वीकुर्वन्ति, किन्तु संविद्विषयत्वम्। तदुक्तम्—"ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यते" ॥ इति ॥ रज्ज्वादिस्थलेऽपि रज्ज्वाद्याकारा वृत्तिरेवाज्ञानविरोधिनी, नतु केवलं चैतन्यम्; तत्तादात्म्यस्य यावद्रज्जु सत्त्वेन सर्पभ्रमस्यैवाभावप्रसङ्गात्। तथाच सर्वत्र वृत्तेस्तदवच्छिन्नचैतन्यस्यैव वाऽज्ञाननिवर्तकत्वात् चैतन्यरूपज्ञानस्याज्ञानाविरोधित्वाद् ज्ञानजन्यत्व-ज्ञातृत्व-ज्ञेयत्वादिव्यवहाराणां वृत्तितदवच्छिन्नचैतन्यान्यतरविषयत्वेनैव निर्वाहात् संविदः संविद्विषयत्वाभावेन संविदाश्रयत्वाभावेन वाऽज्ञानाश्रयत्व-विषयत्वायोगव्यवस्थापनमद्वैत्यभिमतवृत्तिपदार्थापरामर्शनिबन्धनं नाद्वैतमतनिरासायालम् ॥

श्रीभाष्यकाराभिमतरीत्यैव यद्यद्वैतमतनिरासः, तर्हि नमस्तेभ्यः; विदुषां नोत्तरं वाच्यमिति। यथाचाज्ञानं सदसद्भ्यामनिर्वचनीयं ज्ञानप्रागभावव्यतिरिक्तं भावरूपमेव किञ्चित् चैतन्याश्रय-विषयकम्, तथा—"आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥" इति संक्षेपशारीरकोक्त्यनुसारेण स्थापयिष्यते ॥

एतेन—ज्ञानप्रागभावरूपस्याज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभाव इत्यादि—परास्तम्। तदिदं सिद्धं यदहंकाराभिव्यङ्ग्यत्वं न संविदो विरुद्धम्; स्वात्मस्थतया तद्ग्राहकत्वात्। उपाधेः प्रतिबिम्बाभिव्यञ्जकत्वं स्वात्मस्थतया प्रतिबिम्बग्राहकत्वेन, अन्यत्र तु न स्वात्मस्थतया। यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्यं हि ज्ञानतत्साधनयोरनुग्राहकस्य। तथाच प्रदीपादिषु स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनाभावेऽपि नाहंकारस्य स्वात्मस्थतया संविदभिव्यञ्जकत्वं श्रीभाष्योक्तरीत्या विरुद्धम्। दर्पणादिषु तु न मुखादिव्यञ्जकत्वमा-

त्मस्थतया, स्वात्मनि प्रतिबिम्बमात्रग्राहित्वात् । अभिव्यञ्जकास्त्वालोकादय एवेति युक्तम्, अत्र त्वावरणनिवृत्तिमात्रेणैवाभिव्यञ्जकत्वव्यवहारात् स्वयंप्रकाशस्य चैतन्यस्य स्वत एवाभिव्यक्तेर्न दर्पणादिसाम्यमिति न विरोधः ॥

एतेन—नचेह तथाऽहंकारेण संविदि तादृशदोषापादनं स्वयंप्रकाशायां सम्भवतीति—निरस्तम्; दत्तोत्तरत्वात् ॥

अतोऽन्तःकरणभूताहंकारस्थतया संविदुपलब्धिस्संविदोऽन्तःकरणप्रतिबिम्बभावेनैवावरणनिवृत्तिद्वारा सम्भवतीति नाहमर्थज्ञातृत्वं कथमपि विरुद्धम् । इयमेव हि प्रणाली सांख्यैरपि मन्यते तत्त्वकौमुदीकारादिभिः, इति नेयमद्वैतिनामेवाद्वैतसमर्थनार्थमेव वा कल्पना । सति चैवमहमर्थः स्वत एव न ज्ञाता, किन्तु ज्ञप्तितादात्म्यादिनैवेति ज्ञप्तिमात्रं प्रत्यगात्मा, न तु स्वतोऽहमर्थ एवेति सिद्धम् । प्रत्यक्त्वं हि स्वयंप्रकाशत्वमहंकारसत्त्व इव तद्विगमेऽपि ज्ञप्तिमात्रस्य न विरुद्धम् । एतेन—अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वमित्युक्तमिति—परास्तम्; ज्ञप्तिप्रत्यक्त्वं प्रत्यहङ्कारस्याप्रयोजकत्वात् । आवृतं हि दीपादिकमन्यस्मा एव न प्रकाशते, नतु स्वस्मा अपि, इत्यहमर्थजीवदृष्ट्या प्रकाशार्थमेवावरणाभिभवापेक्षा ॥

जीवस्त्वविद्याप्रतिबिम्बो वाऽन्तःकरणप्रतिबिम्बो वेति यथायथं व्यवस्था । अस्ति हि सुषुप्त्याद्यवस्थायामहंभावाप्रतीतावपि ज्ञप्तिमात्रप्रकाशेन ज्ञप्तिमात्रप्रत्यक्त्वम् । इयान् विशेषः—यत् सुषुप्त्यवस्थायामहंभावमात्रविगमः, नतु कारणशरीराज्ञानविगमोऽपि, मुक्तौ तु कारणशरीरस्यापि विगम इति । सर्वथा तु ज्ञप्तिमात्रस्य प्रत्यक्त्वं नाद्वैतिनां विरुद्धम् ॥

अत एव—"यद्वैतन्न पश्यति पश्यन् वै तन्न पश्यति" "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इत्यादौ दृङ्मात्रसत्यतावचनमुपपद्यते । अत्र द्रष्टुर्विज्ञानं न विपरिलुप्यत

इति श्रीभाष्यकाराणां मते सुषुप्त्यवस्थायां द्रष्ट्रादिभावेनाप्यात्मा वर्तत इति कल्पनायां "न बाह्यं किञ्चन वेद नान्तरमि"त्यनुपपन्नं स्यात्। अतश्च विज्ञातापि तत्र नास्ति, किन्तु द्रष्ट्रादिष्वनुवर्तमानमेकरूपं चैतन्यमात्रं वर्तते, इति चैतन्यस्वरूपव्यतिरेकेण द्रष्ट्रादयो न वर्तन्त इत्येव स्वीकर्तव्यम्। तथाच "द्रष्टुर्दृष्टेरि"ति दृष्टिरूपद्रष्टुरिति सामानाधिकरण्येनैवान्वेति। तथाच सुषुप्तौ विज्ञातृरूपं नास्तीति स्पष्टमवगम्यते। अत एव "सलिलं एको द्रष्टे"ति वाक्यमप्यसङ्गचैतन्यमात्रमेव सुषुप्तौ वर्तत इति प्रतिपादयदुपपद्यते। श्रीभाष्यमते तु प्रकरणस्य प्रतीयमानार्थस्वारस्यभङ्गेनार्थान्तरं वक्तव्यम्। अस्तु वा कथंचनाहंकारोऽपि सूक्ष्मरूपेण तदा, नतु तदा तद्रूपेणात्मानुभवे प्रमाणमस्ति। 'सुखमहमस्वाप्सम्" इत्यादीनामुपपत्तिस्तु पूर्वमेव समालोचिता॥

एतेन—तमोगुणाभिभवात् परागर्थानुभवाभावात्वाहमर्थस्य विविक्तस्फुटतरप्रतिभासाभावेऽप्याप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात् सुषुप्तावपि नाहंभावविगम इति—परास्तम्; "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति सुषुप्तावहंकारस्वाप्यान्तरस्य भाननिषेधेनाहंकारस्य सुषुप्तावस्फुटावभासकल्पनाया उक्तश्रुतिविरुद्धत्वात्॥

सुप्तोत्थितो हि—"सुखमहमस्वाप्सम् देवदत्तः" इत्यहंपदेन स्थूलशरीरमपि परामृशतीति तस्यापि हि सुषुप्तौ प्रकाशकल्पनाप्रसङ्गः। तत्र यदि शरीरांशेऽनुभव एव, न स्मरणम्, तर्हि अहङ्कारांशेऽपि न स्मरणम्, किन्त्वनुभव एवेति सन्तुष्यताम्। सुप्तोत्थितो हि 'मामन्यं च नाज्ञासिषमि'त्यपि परामर्शादहंकारमपि सुषुप्तौ नानुभवतीत्यवश्यमूरीकर्तव्यम्। तथाचेदानीमहन्तया प्रतीयमानोऽहं सुषुप्तावहंभावविरहेऽपि प्रतीयत एव। तस्यैव तु सुखमस्वाप्समित्यहंपदेन ग्रहणमपि न विरुद्धम्। उत्तमपुरुषप्रयोगो हि अहङ्कारविशिष्टार्थविवक्षायामिव तदुपलक्षितार्थविवक्षायामपि सम्भवति—"अहं ब्रह्मास्मी" तिवत्॥

अङ्गीकृतं हि श्रीभाष्यकारैरपि—मामिति वर्णाश्रमविशिष्टाहमर्थप्रतिषेधो विवक्ष्यत इति। तथाच—प्रबोधावस्थायां प्रतीयमानोऽहमर्थः स्मर्ता सुषुप्तौ यदि नानुभूयते, तर्हि किमित्यहङ्कारसम्बन्धशून्यरूपेणैव सुषुप्तौ भासमान आसीत्, इदानीं तु स एवाहंरूपेण प्रतीयत इति कल्पनायामेव परमो विद्वेषः। प्रबोधकालीनप्रत्यवमर्शस्य मतद्वयसाधारण्येऽपि विनैव प्रमाणं सुषुप्तौ कथमहंभावप्रतीतिः कल्प्यते। उपपादितं हि पूर्वम्—अहङ्कारोऽपि चैतन्ये कल्पित एवेति "अहङ्कारादेशात् पृथगारब्धात्मोपदेशप्रकरणार्थसमालोचनेन। सुषुप्तौ चैतन्यमात्रव्यवस्थापका अद्वैतिनः सर्वथा नाज्ञातृत्वं चैतन्यस्य मन्यन्ते, अविद्यापरिणामवृत्त्याश्रयत्वेन ज्ञातृत्वं तु केचन मन्यन्त एव, केचन तु न मन्यन्ते। मतद्वयेऽपि नाहमर्थो ज्ञाता सुषुप्तौ भासत इति तु समानमेव। तथाच ज्ञानसाक्षित्वेनात्मा सुषुप्तावस्तीति स्वीकारेऽपि न विरोधः। तत्र प्रथममते ज्ञातृत्वं वर्तत एवाविद्यावृत्त्या, द्वितीयमते त्वविद्याभासकत्वेनैव साक्षित्वं न ज्ञातृत्वेन। "साक्षाद् द्रष्टरि संज्ञायाम्" इति प्रथममत उपपन्नमेव, द्वितीयमते तु द्रष्टृपदेन दृग्रूपमेव विवक्ष्यते; प्रकाशकत्वसामान्यात्। साक्षी चायं स्वयंप्रकाशमानो न 'जानामी'ति प्रतीयते, येनाहमर्थ एव साक्षी स्यात्। नह्यात्मनेऽवभासमानत्वं स्वप्रकाशत्वमिति पूर्वमेवोक्तम्। तथाचाहंभावोऽप्यात्मनोऽवस्थाविशेष एव, धर्ममात्रं वा, नात्मस्वरूपम्, इति तद्विगमेऽपि मुक्तावविद्याया अपि निवृत्तौ ज्ञानस्वरूपमात्रमात्माऽवतिष्ठते, नतु ज्ञाताऽहमर्थोऽपि मोक्षे। बन्धनिवृत्तिरेव हि मोक्षो नाम, तत्र च बद्धस्य बन्धनिवृत्तीच्छया प्रवृत्तिर्नानुपपन्ना। अहंकारोऽपि हि बन्ध एव, "भिद्यते हृदयग्रन्थिः" इत्यादिना तस्यापि निवृत्तिप्रतिपादनात्॥

तथाचाहं मुक्तः स्यामितीच्छया मोक्षार्थप्रवृत्तिरपि कथं

विरुद्धा ? मुक्तावप्यहंभावानुवृत्तौ तु मुक्तेः संसाराविशेषापत्तिः ; मुक्तः, अज्ञत्व-संसारित्वादिविशिष्टः, अहंप्रतीतिविषयत्वात्, जागरिकादिजीववत्, इत्यनुमानप्रसङ्गात्। मुक्तावप्यहंप्रतीतेः सत्त्वाद् अस्यानुमानस्य विरोधस्तु न सम्भवति। अहंप्रतीतिविषयत्वं ह्यज्ञत्वादौ यथा प्रयोजकम्, न तथा तदभावे, इत्यप्रयोजकत्वशङ्काकलङ्कितत्वाद्विरुद्धानुमानस्य। अज्ञत्वं हि स्वरूपाज्ञानम्, अन्यथाज्ञानं विपरीतज्ञानं वाऽहंप्रत्ययकाल एव जागरणे स्वप्ने च भवति, न सुषुप्तौ, इति स्वरूपाज्ञानं प्रत्यहंप्रत्ययो हेतुरेव। तथाच न प्रसञ्जकानुमानेऽप्रयोजकशङ्का समुन्मिषति। यथाच नाहंज्ञानमात्मरूपज्ञानम्, किन्तु ज्ञप्तिमात्रमेव प्रकाशमानम्, तथा पूर्वमेव निरूपितम्, येन तद्विरुद्धत्वाद् अहंप्रत्ययेऽप्यज्ञत्वाद्यभावस्समापद्येत॥

वामदेवादीनामहंभावानुवृत्तिस्तु जीवन्मुक्तत्वात् तेषामिन्द्रादीनामिव प्रारब्धशेषतयाऽनुवर्तमान एवाहंभावेऽहङ्कारोपहितचैतन्यस्य सर्वतादात्म्यमादायोपपद्यते, न त्वेतावताऽहमर्थ एवात्मेति सिद्ध्यति। नहि वामदेवात्मनोऽहमर्थस्य सर्वतादात्म्यं सम्भवदुक्तिकम्। कारणेन खलु कार्याणां तादात्म्यम्, इति सर्वोपादानशुद्धचैतन्यस्यैव निष्कृष्टाहङ्कारस्याहमिति भानम्; "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इति न्यायात्। तदुक्तम्—"अपि संराधने सूत्रे शास्त्रार्थज्ञानजा प्रमा। शास्त्रदृष्टिर्मता नूनं वेत्ति वाचस्पतिः स्वयम्।"—इति॥ श्रीभाष्यकाराणां मते हि शरीरवाचकानां पदानां शरीरिपर्यन्तत्वमिति सिद्धान्तानुसारेणाहंपदेनाहंपदार्थीवामदेवविशिष्टपरब्रह्मण एवाहंपदार्थत्वे 'मनुरभवम्' इत्युत्तमपुरुषप्रयोगो नोपपद्यते; क्रियाया अहमर्थासमानाधिकरण्यात्॥

वस्तुतस्तु—वामदेवेन मुक्तावस्थायां किमयं व्यवहारः कृतः, उत बद्धावस्थायाम्। मुक्तावस्थायां कर्मसम्बन्ध-तत्कृतशरीराभिमानादीनामभावाद् वामदेवात्मनो वामदेवपदेन ग्रहणा-

सम्भवः, एवं मुक्तानां परमात्मस्वरूपसाक्षात्कारस्योपासनारूपस्य पुरुषकृतिसाध्यत्वेन केवलं शास्त्रजन्यसाक्षात्कारस्य वामदेवीयस्य शास्त्रदृष्टित्वासम्भवः, इति पुरुषकृत्यनपेक्षनिदिध्यासनाद्यङ्गक-श्रवणमात्रजन्यं ब्रह्मात्मभानमेव वामदेवादेः शास्त्रजन्यः साक्षात्कार इति वर्णनीयम्। सति चैवं स्वरूपचैतन्यमात्रस्याहङ्कारोपलक्षितस्या-विद्योपलक्षितस्य वा साक्षात्कारमभिप्रेत्यैव "अहंमनुरभवम्" इत्यादिवाक्यं प्रवृत्तम्, इति वामदेवादीनां ब्रह्मभावं प्राप्तानामपि नाहम्भावसत्तायामियं श्रुतिः प्रमाणम्। बद्धावस्थायां तु न सार्वा-त्म्यज्ञानसम्भवः, नवा मुक्तावहम्भावानुवृत्तिसाधकता ॥

एतेन—"अहमेकः प्रथममासम्" इत्यादिवाक्यान्यपि—व्याख्यातानि ; शरीरविशेषणकतयाऽहंपदार्थप्रतीत्यामेव—अहं गच्छामीत्युत्तमपुरुषप्रयोगः, नतु मद्विशिष्टं गच्छामीत्यह-मर्थविशेषणतायामपि, इति न त्वमहमादिपदैरहमर्थविशिष्टपरमा-त्मनो बोधः संभवति ॥

नहिसर्वदाऽऽत्माऽहंप्रत्ययेनैवविषयीक्रियते, जीवात्मादितत्पद-सामानाधिकरण्ययोग्यैरपि प्रथमपुरुषान्तक्रियासमानाधिकर-णैर्व्यवहारदर्शनात्। तथाचाहमर्थस्यैव जीवत्वे तस्य सुषुप्त्यादा-वहंपदासंस्पर्शेनैवोपदेशोऽसङ्गतः स्यात्। ततश्चाहंपदार्थस्यैव जीवस्यात्मचैतन्यादिरूपमहंरूपमिति रूपद्वये संसारावस्था-यामहंरूपम्, तस्य सर्वैर्भेदप्रत्ययश्च, असंसारावस्थायां तु नाहं-रूपम्, सर्वतादात्म्यं च, इति वामदेवादीनां चैतन्यरूपेणैव सर्वता-दात्म्यम्, संसारावस्थायां चैतन्यांशमात्रमादायात्मशब्दवत्, इति असंसारावस्थायामहंपदेन चैतन्यांशमादाय व्यवहारो न विरुद्धः ॥

एतेन—"हन्ताहमिमाः" "बहु स्यां प्रजायेय" "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" "अहमात्मा गुडाकेश" "नत्वेवाहं जातु

नासम्'' "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।" "मत्तः सर्वं प्रवर्तते।" "तेषामहं समुद्धर्ता मृत्यु-संसारकारणात्।" "अहं बीजप्रदः पिता" "वेदाहं समतीतानि।" इत्यादौ ब्रह्मण्यहंशब्दप्रयोगस्तु "क्षेत्रज्ञं चापि मां विद्धि" इत्यादिवाक्यसिद्धजीवब्रह्माभेदप्रयोजकस्वरूपचैतन्यमात्रस्वरूपस्य स्वोपाधिसमष्टिमायाद्युपहितस्येवेश्वरस्य व्यष्टिमायाद्युपहितस्यापि स्वीकाराद् अद्वैतमतदृष्ट्या व्यष्टि-समष्ट्योर्व्यष्टि-समष्ट्युपहितयोश्चाभेदस्यापि विद्यमानत्वाद् न विरुद्धः॥

श्रीभाष्यमतेऽपि—चिदचिच्छरीरकत्वेनैव ब्रह्मणोऽहंपदेन ग्रहणम्, नतु स्वरूपतः; तस्यान्तर्यामिणः चिदचिच्छरीरकस्य स्वरूपतः पृथग् ग्रहणपरेषु वाक्येषु कुत्राप्यहंशब्देन व्यवहारादर्शनाद् यावदहमर्थसम्बन्धमेवाहंत्वेन व्यवहारः, इति न सर्वदाऽहंप्रत्ययविषयतयैवेश्वरप्रतीतिः। न केवलम्—"अथात आत्मादेशः" इति प्रकरणसमालोचनेनाहंकारस्यानात्मत्वम्, किन्तु "महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।" इति स्मृतावपि भगवता क्षेत्रमध्येऽहंकारस्योपदेशसमालोचनेनापि। अहंस्वरूपमेवाहंकारपदार्थः; न त्वहंस्वरूपातिरिक्तोऽहंकार इति हि—"अथातोऽहंकारादेशः" इति अहंकारशब्देनाहंकारोपदेशं प्रक्रम्य—"अहमेवाऽधस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमि" त्यहंशब्देनैवाहंकारोपदेशाद् अहंकारस्यैवाहंरूपम्, न त्वात्मन इति स्पष्टमवगम्यते। अत एवा"थात आत्मादेशः" इति प्रकम्य—आत्मैवाधस्तादात्मैवोपरिष्टादि''त्युत्तरत्राहमपरामर्शेनैवात्मशब्देनैवात्मोपदेश उपपद्यते॥

एतेन—स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात् तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम्, अव्यक्तपरिणामभेदस्याहंकारस्य क्षेत्रान्तर्भावो भगवतैवोपदिश्यते, स त्वनात्मनि देहेऽहंभावकरणहेतुत्वेनाहंकार इत्युच्यते। अस्य त्वहंकारस्याभूततद्भावे च्विप्रत्यय-

मुत्पाद्य व्युत्पत्तिर्द्रष्टव्या। अयमेवाहंकार उत्कृष्टजनावमानहेतुगर्वापरनामा हेयतया शास्त्रेषु प्रतिपाद्यत इत्यादि—परास्तम्; अहम एवाहंकारपदेनोपदेशस्योपपादनात्॥

तथाचानात्मन्यात्मबुद्धेरविद्यात्वोक्तिरप्यत्रैवानुकूला; अहंकारात्मनोः परस्पराध्यासेनात्मनोऽहमर्थत्वभ्रमस्यैवोक्तवाक्येनाविद्यात्वबोधनात्। एतेन—शरीराद्यध्यासोऽपि—व्याख्यातः; अहंकाराधारे चैतन्य एव शरीराध्यासेनैकचैतन्योपाधित्वेन शरीरेऽप्यहंप्रत्ययोपपत्तेः। एतेन तत्र ज्ञातृत्वाध्यासोऽपि व्याख्यातः। इति "ज्ञप्तिमात्रस्यात्मत्वे शरीरे ज्ञप्तिमात्रप्रतीतिः स्यादित्यपि—परास्तम्। तस्माद् ज्ञप्तिरात्मा, नाहमर्थो ज्ञाता॥

अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात्। अविद्यायोगतश्चात्मा ज्ञाताऽहमिति निर्णयः।" इति तु न विकल्पासहः; प्रत्यक्षादीनां सांसारिकजीवगोचरत्वेन मुख्यात्मपरत्वाभावात्॥

तदेवमहं जानामीतिप्रत्ययस्य भ्रमात्मकत्वाद् न तत्प्रत्ययबलेनाहमर्थात्मत्वं वक्तुं शक्यते, इति संविदेवात्मेति सिद्धम्॥

युक्तं चैतत्—यतो दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलम्बिप्रत्यक्षं शास्त्रबाध्यत्वाद् न प्रमाणम्। दोषश्चात्रानादिभेदवासनैव। यथा काच कामलादीनां बाधज्ञानान्यथानुपपत्त्या दोषत्वं निर्धार्यते, एवमत्रापि शास्त्रेण निर्विशेषब्रह्मप्रबोधनिश्चये तदनन्तरमननुवर्तमानत्वाद् दोषत्वं भेदवासनाया निश्चीयते। अत्र दोषाणां बाधज्ञानेनोत्पत्त्यनभ्युपगमाद् दोषजन्यत्वस्य निर्विशेषबोधनिश्चयेऽभावाच्च नोत्पत्तावन्योन्याश्रयः। एवं निर्विशेषवस्तुबोधनिश्चयं प्रति भेदवासनाया दोषत्वनिश्चयस्यानपेक्षणात् शास्त्रस्य निर्विशेषवस्तुबोधकत्वस्य स्वतः सिद्धत्वाच्च नान्योन्याश्रयः। शास्त्रस्यापि भेदवासनामूलत्वं भेदपरशास्त्रांश एव, न निर्विशेषशास्त्रांशेऽपि; निर्विशेषशास्त्रार्थस्याबाधितत्वेन तत्र स्वरूपतोऽविद्या-

मूलत्वेन मिथ्यात्वेऽपि विषयतोऽबाधितत्वेन भेदवासनामूलकत्वाभावात्। प्रामाण्याप्रामाण्ये हि विषयतोऽबाध-बाधावादायैव। बाधज्ञानेन हि दोषमूलकत्वावधारणम्, न तु दोषमूलकत्वेन बाधावधारणम्। व्यक्तं चैतत् शाबरे भाष्ये। अतो नान्योन्याश्रयगन्धोऽपि। तथाच ब्रह्मनिर्विशेषत्वस्य शास्त्रावगतस्य प्रमाणान्तरेणाबाधाद् न तदंशेऽप्रामाण्यम्। अत एव सविशेषवाक्यान्यपि व्याख्यातानि; प्रमाणान्तरप्राप्तविशेषांशानुवादेनोपक्रमाद्यवगततात्पर्यवन्निर्विशेष-वाक्यप्रामाण्यबाधे तेषामसामर्थ्यात्। तथाचाविद्यामूलमपि शास्त्रं भेदाविषयकं वस्तुगत्या भेदनिरासपरं वा भेदवासनामूलमिति कल्पनं न संभवति; भेदावलम्बिज्ञानस्यैव भेदवासनामूलत्वात्। सर्वेषां प्रमाणानां प्रमेयानां चाविद्यापरिणामत्वेन तन्निमित्तकत्वेन वाऽविद्यारूपदोषमूलत्वे समानेऽप्रामाण्यप्रयोजकं दोषत्वं भेदवासनाया एवेति स्वीकाराद् भेदवासनारूपदोषमूलं प्रत्यक्षं तदमूलकशास्त्रापेक्षया दुर्बलमित्येवापच्छेदन्यायेन स्वीकर्तव्यम्। तदयं निष्कर्षः—पुरुषदोषमूलकत्वेनाप्रामाण्यम्, भेदवासनैव तु पुरुषदोषः, नतु मूलाविद्येति। इदमेवाभिप्रेत्योक्तं भामत्यादौ—असंभावितपुरुषदोषं शास्त्रं प्रबलमिति ॥

एतेन—दोषमूलत्वज्ञाने सति परत्वमकिञ्चित्करम्; रज्जुसर्पादिज्ञाननिमित्तभये भ्रान्तोऽयमिति परिज्ञानेन केनचिद् नायं सर्पो मा भैषीः इत्युक्तेऽपि हि भयानिवृत्तिर्दृश्यते। किं कारणम्? तत्र दोषमूलत्वसंशयात्, शास्त्रं तु श्रवणवेलायामेव दोषमूलमिति ज्ञातम्, इति कथं तस्य बाधकत्वमिति—परास्तम् ॥

शास्त्रस्य निर्विशेषपरस्य भेदवासनामूलकत्वस्य श्रवणादिदशायां ज्ञानम्—किं श्रवणकाल एव सविशेषपरमिति ज्ञानाद् मन्यते? उताविद्यामूलकत्वावगमात्? आद्ये बाधः, द्वितीयेऽकिञ्चित्करता। संभाव्यमानदोषं प्रत्यक्षमिति प्रत्यक्षान्तरसाम्येनानुमीयते, असं-

भाव्यमानदोषं शास्त्रमित्यपि संभावनामूलपुरुषतन्त्रत्वाभावेन तदर्थस्य शास्त्रान्तरेण तत्समानयोगक्षेमप्रामाण्यकेन विषयाबाधाद् निर्णीयते, इति प्रत्यक्षे संभावितदोषत्वादिग्राहकाभावशङ्कापि श्रीभाष्यकाराणां नात्रावसरति॥

तदयं निष्कर्षः—प्रामाण्यं त्रिविधम्—प्रातिभासिकं व्यावहारिकं पारमार्थिकमिति। यावत्प्रतिभासमबाधितार्थविषयकत्वेन प्रथमम्, व्यवहारकालाबाधितार्थविषयकत्वेन द्वितीयम्, कालत्रयाबाधितार्थविषयकत्वेन तृतीयम्। आद्यं रज्जुसर्पादिज्ञानस्य, द्वितीयं घटादिज्ञानस्य, तृतीयं ब्रह्मज्ञानस्य। मिथ्यात्वेनानिश्चीयमानार्थविषयकज्ञानत्वं साधारणं लक्षणम्। तत्राद्य-द्वितीयौ वृत्त्यवच्छिन्नचैतन्यानाम्, तृतीयं त्वखण्डाकारवृत्तिमात्रस्य। व्यवहारकालो नाम ब्रह्मसाक्षात्कारपूर्वक्षणः। तथाच शुक्तिज्ञानपूर्वक्षणपर्यन्तं शुक्तिरजतज्ञानस्य, ब्रह्मसाक्षात्कारपूर्वक्षणपर्यन्तं घटादिज्ञानस्य, ब्रह्मसाक्षात्कारक्षणे ब्रह्माकारवृत्तेश्च प्रामाण्यम्। तत्र प्रत्यक्षादीनां सविशेषवाक्यानां शब्दरूपाणामपि व्यावहारिकं प्रामाण्यं नाद्वैतिनोऽपि वारयन्ति, यतस्तेषां दोषमूलत्वम्। ब्रह्मसाक्षात्कारस्य दोषमूलत्वं तु ब्रह्मबाधकप्रमाणान्तराभावाद् न निर्धार्यते, इति विषयतो ज्ञानस्य बाध्यत्वं नास्ति। निर्विशेषज्ञानं तु ब्रह्मसाक्षात्कारेण तस्यापि बाधाद् मिथ्यैव। यत्र तु निर्दुष्टपुरुषान्तरागोचरगुहासु वसतस्तैमिरिकजनस्याज्ञातस्वतिमिरदोषस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रादिज्ञानमविशिष्टम्, तत्र बाधकज्ञानं ब्रह्मज्ञानमेव स्यात्। यावत्तु तद् न भवति, तावद् जलौष्ण्यज्ञानवद् व्यावहारिकमेव तत्र प्रामाण्यम्, अवस्थाऽज्ञानानामपि मूलाविद्यापरतन्त्रत्वाद् मूलाविद्यानिवृत्तौ निवृत्तिर्न विरुद्धा। इयमेव नीतिर्ब्रह्मसाक्षात्कारपूर्वक्षणरज्जुसर्पादिज्ञानविषयेऽपि स्वीकर्तव्या। तथाच—ब्रह्मप्रमातिरिक्तप्रमाबाध्यत्वं प्रातिभासिकत्वम्, ब्रह्मप्रमामात्र-

बाधितत्वं व्यावहारिकत्वम्, उभयाबाध्यत्वं पारमार्थिकत्वं विषयस्येति तत्त्वम्। इदमत्रालोचनीयम्—यद् मिथ्याभूतेन शास्त्रेण सत्यस्य ब्रह्मणो बोधो भवति, नवेति ॥

तत्र श्रीभाष्यकारा अन्ये च द्वैतिनो मन्यन्ते—यद् मिथ्याभूतात् शास्त्राद् न ब्रह्मणः सत्यस्य बोधः संभवति। अनधिगताबाधितार्थविषयकं ज्ञानं खलु प्रमा। तत्र ज्ञानस्य भ्रमत्वं प्रमात्वं च बाधितविषयकत्वेनाबाधितविषयकत्वेन च भवति। बाधितविषयकत्वं च भ्रमस्य न केवलं विषयतः, किन्तु स्वरूपतोऽपि मिथ्यात्वेनैव भवति, अत एव रजताद्याकाराविद्यकवृत्तिस्वीकार उपपद्यते। तथाच ज्ञानस्य समानसत्ताकार्थविषयकत्वमपेक्षितम्, इति यथा घटस्य व्यावहारिकत्वे घटज्ञानस्य व्यावहारिकत्वम्, यथाच रजताकारवृत्तेराविद्यकत्वेन प्रातिभासिकत्वे रजतस्य प्रातिभासिकत्वम्, एवं ब्रह्मज्ञानस्यापि व्यावहारिकत्वे ब्रह्मणोऽपि व्यावहारिकत्वमेव स्वीकर्तुमुचितम्। सति चैवम्—प्रमाणजन्यं ज्ञानं प्रमैव, दोषजन्यं तु भ्रम एवेति नियमोऽपि सुरक्षितो भवति। व्यावहारिकेण शास्त्रेण पारमार्थिकब्रह्मज्ञाने स्वीक्रियमाणे ज्ञानं व्यावहारिकम्, प्रमेयं पारमार्थिकम्, इति पूर्वोक्तनियमभङ्गः समापतति ॥ तथाच प्रयोगः—ब्रह्म, मिथ्या, अविद्यावत्सम्बन्धिज्ञानविषयत्वात्, प्रपञ्चवत्; ब्रह्म, मिथ्या, ज्ञानविषयत्वात्, प्रपञ्चवत्; ब्रह्म, मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवदेवेति ॥

इदमत्र तत्त्वम्—नायं नियमः—यद् ज्ञान-तद्विषययोः समसत्ताकत्वमिति। शशशृङ्गाद्याकारवृत्तेर्विकल्परूपाया व्यावहारिकत्वेऽपि तद्विषयस्यासत्त्वेन समसत्ताकत्वाभावात्। यदि च विषयो द्विविधः—फलव्याप्यो वृत्तिव्याप्यश्च। तत्र फलव्याप्यस्यैव विषयस्य ज्ञानसमसत्ताकत्वम्, वृत्तिव्याप्यस्य तु नायं नियमः, इति शशशृङ्गादीनां केवलवृत्तिव्याप्यत्वाद् नोक्तनियमभङ्ग इति मन्यते, तर्हि ब्रह्मणोऽपि न फलव्याप्यत्वम्, किन्तु वृत्तिव्याप्यत्वमेव, इति केवलाखण्डाकारवृत्तेर्व्यावहारिकत्वेऽपि न ब्रह्मणोऽपि व्यावहारिकत्वमापद्येत। भ्रम-प्रमान्यतरविषयस्यैव तत्समसत्ताकत्वात् शश-

शृङ्गादिज्ञानस्य च भ्रम-प्रमाबहिर्भावाद् नोक्तनियमभङ्गः, ब्रह्मज्ञानं तु प्रमैव, अन्यथा ब्रह्मणोऽप्रामाणिकत्वापत्तेः, इति तत्समसत्ताकत्वं ब्रह्मणः स्वीकर्तव्यमिति चेत्, नहि वयम्—शुद्धस्य ब्रह्मणः प्रमेयत्वं स्वीकुर्मः ; उपहितस्यैव तद्विषयत्वात्, शुद्धं तु स्वप्रकशत्वात् स्वत एव सिद्धम्, इति वेदान्तजन्याया वृत्तेरिवोपहितस्यापि व्यावहारिकत्वस्यैव स्वीकारात् पारमार्थिकत्वस्यास्वीकारात् शुद्धब्रह्म-मिथ्यात्वानुमानप्रयोगास्सर्वं एवाप्रयोजकाः ॥

नहि शुद्धं ब्रह्माविद्यावदुत्पन्नज्ञानविषयः. अखण्डाकारवृत्ति-क्षण एवाविद्याया नष्टत्वेनाविद्यावदुत्पन्नज्ञानविषयत्वस्योपहितेऽप्यसंभवे का कथा शुद्धब्रह्मणोऽविद्यावदुत्पन्नज्ञानविषयत्वे ? तथाच प्रथमानुमाने हेत्वसिद्धिः, एवममिथ्याभूतशशशृङ्गादीनामविद्या-वदुत्पन्नज्ञानविषयत्वेन तत्र व्यभिचारः, यदि ज्ञानाज्ञानयोः समान-विषयकत्वनियमात् स्वविषयाविद्यावदुत्पन्नज्ञानविषयत्वमेव हेतु-तया विवक्ष्यते, शशशृङ्गादिविषयं त्वज्ञानमप्रसिद्धमिति न तत्र व्यभिचारप्रसक्तिरिति मन्यते, तर्हि—"आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवले" तिवचनानुसारेण प्रपञ्चस्याप्यज्ञानवि-षयत्वाभावेन स्वविषयाज्ञानवदुत्पन्नज्ञानविषयत्वं न दृष्टान्तसाधा-रणम्, इति दृष्टान्ते हेत्वसिद्धिः ॥

वस्तुतस्तु—प्रपञ्चमिथ्यात्वे बाध्यत्वमेव तन्त्रम्, न त्ववि-द्यावदुत्पन्नज्ञानविषयत्वमित्यप्रयोजकत्वशङ्कापि दुरपह्नवैव। किं च ज्ञानविषयत्वपदेन किं केवलवृत्तिविषयत्वं मन्यते ? उत वृत्त्यवच्छि-न्नचैतन्यविषयत्वम् ? अथवा चैतन्यमात्रविषयत्वम् ? तत्राद्ये तुच्छे व्यभिचारः, द्वितीय-तृतीययोः पक्षेऽसिद्धिः; चैतन्यस्य वृत्तिमात्र-विषयत्वात्, चैतन्यस्य चैतन्यविषयत्वाभावाच्च ॥

एतेन—द्वितीयोऽपि हेतुर्व्याख्यातः; ब्रह्मणो ज्ञानरूपत्वेन ज्ञान-विषयत्वानङ्गीकारेण प्रपञ्चस्याज्ञानाविषयस्य वृत्तिविषयत्वान्न

कारेण च पक्ष-दृष्टान्तयोर्हेत्वसिद्धेः, अप्रयोजकत्वात्, शश-शृङ्गादौ व्यभिचारात्, बाध्यत्वेन सोपाधिकत्वात्, ब्रह्म, न मिथ्या, अविद्यापरिणामत्वाभावादिति सत्प्रतिपक्षानुमानात्, "सत्यं ज्ञानमि" ति श्रुतिबाधितत्वाच्च ॥

अत्रोद्भाविता उपाधि-सत्प्रतिपक्ष-बाधा पूर्वत्रेवोत्तरत्रापि योजनीयाः। असत्यहेतुजन्यज्ञानविषयत्वं तु न विषयमिथ्यात्वप्रयोजकम्, धूलीपटले धूमभ्रमेण वह्निप्रमाया दर्शनेनोक्तप्रमाविषये वह्नौ व्यभिचारात्, प्रतिबिम्बेन ज्ञायमाने बिम्बे, आरोपितह्रस्व-दीर्घत्वादिविशिष्टवर्णज्ञानजन्यज्ञानविषयपारमार्थिकार्थे, स्वाप्नस्त्री-जन्यज्ञानविषयसमृद्ध्यादौ च व्यभिचारोऽनुसन्धेयः। सर्वेषु हेतुषु विषयत्वेनैव मिथ्यात्वनिर्वाहे व्यर्थविशेषणतापि, इति भामत्यनुयायिनः ॥

विवरणानुसारिणस्तु—शुद्धब्रह्मणोऽपि वृत्तिविषयत्वं वर्तत एव; तथापि केवलवृत्तिविषयत्वं पूर्वोक्तविधया तुच्छसाधारण्याद् न मिथ्यात्वप्रयोजकमित्यादि पूर्वोक्तमेवानुसन्धेयम्—इति ॥

इदमत्रालोचनीयम्—यत् कीदृशं मिथ्यात्वं प्रपञ्चदृष्टान्तेन साध्यते, ब्रह्मव्यतिरिक्तप्रपञ्चमिथ्यात्वमपि दृष्टान्तगतं केन वा हेतुना साध्यते चेति। यद्यद्वैतिनां दृश्यत्व-जडत्व-परिच्छिन्नांशित्वादिहेतु-भिरेव तन्मिथ्यात्वानुमानम्, तर्हि ब्रह्मव्यतिरिक्तप्रपञ्चमिथ्यात्वप्र-योजकत्वं तेषामेव; नोक्तानां हेतूनाम्। मिथ्यात्वं तु स्वसमानाधिक-रणात्यन्ताभावप्रतियोगित्वम्, अधिष्ठानज्ञाननिवर्त्यत्वम्, स्वात्य-न्ताभाववत्येव प्रतीयमानत्वं च ब्रह्माधिकरणाधिष्ठानयोर-प्रामाणिकत्वेनाप्रसिद्ध्या ब्रह्मणि बाधितम्; क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वमसत्त्वम्, तदभावः सत्त्वमिति हि सदसत्स्वरूपं सदसद्विलक्षणत्वघटकं निरुच्यतेऽद्वैतिभिः। तथाचोक्तविधसत्त्वा-भावासत्त्वाभावोभयरूपमिथ्यात्वसाधनं यदि ब्रह्मणि विवक्ष्यते, तर्हि

सद्रूपब्रह्मतादात्म्यमिव प्रपञ्चे ब्रह्मणि ब्रह्मतादात्म्यं साध्यत इति वक्तव्यम्। तत्रापि स्वस्यैव स्वाधिष्ठानत्वस्यासंभवाद् बाधः। सद्भिन्नत्वं तु प्रमाणसिद्धभिन्नत्वं शास्त्रप्रमाणसिद्धे तत्र बाधितमिति सर्वसंप्रतिपन्नम्। तथाच दोषमूलत्वेऽपि शास्त्रस्य तज्जन्यज्ञानविषयो ब्रह्म मिथ्येति साधनं न क्षोदक्षमम्॥

परमार्थतस्तु—दोषतया दोषजन्यज्ञानविषयत्वमेव सर्वत्र मिथ्यात्वप्रयोजकं दृष्टम्। स च दोषो यत्र तज्जन्यज्ञानस्य बाधितत्वम्, तत्रैव दोष इति मन्यते। नहि काच-कामलादिजन्यं काच-कामलादिज्ञानमपि भ्रमः। तथाच वेदान्तजन्याखण्डाकारवृत्तेरप्यविद्याजन्यत्वेऽपि तद्विषयब्रह्मणोऽबाधाद् नाविद्या तत्र शास्त्रे वा दोषत्वेन हेतुः, किन्तु केवलमुपादानत्वेनैव। यदपगमे यन्निमित्तं ज्ञानं बाध्यते, स एव दोषो नाम। ब्रह्मज्ञाननिमित्तापगमेऽपि नेदं ब्रह्मेति बाधकज्ञानाभावाद् नाविद्या ब्रह्मज्ञानं प्रति दोषविधयाऽपि हेतुः। तथाचाविद्याया उपादानत्वं दोषविधया निमित्तत्वं च विषयज्ञानयोरुभयोरपि बाधितत्व एव, अन्यथा तु केवलमुपादानत्वमात्रम्। तदुक्तं वेदान्तपरिभाषायाम्—"दोषसहकृताविद्या रजताकारेण तदाकारवृत्त्याकारेण च परिणमते" इति॥

विशेषग्रहप्रतिबन्धकत्वं हि दोषत्वं काचादीनाम्। अखण्डाकारवृत्तिदशायां तु निर्विशेषब्रह्मणो विशेषस्याप्रसिद्ध्या दोषविधया न तत्कारणत्वं सांप्रतम्॥

सति चैवम्—यथा दोषरहितपुरुषान्तरशून्यगुहासु वसतोऽज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण जायमानद्विचन्द्रादिज्ञानस्य बाधकप्रत्ययाभावेऽपि तद् ज्ञानं मिथ्यैव, दोषो ह्ययथार्थज्ञानहेतुः, तथा ब्रह्मज्ञानमप्यविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सहैव मिथ्येति—श्रीभाष्योक्तिरपि ब्रह्मज्ञानेऽप्यविद्याया दोषविधया कारणत्वमभिप्रयन्ती—निरस्ता; तिमिरादीनामिव द्विचन्द्रादिज्ञानदशायामखण्डाकारवृत्तिदशायाम-

विद्याया विशेषग्रहाप्रतिबन्धकत्वेन हि न दोषत्वम्। तिमिरापगमे तत्रे-बात्राविद्यापगमे न हि बाधकप्रत्ययो विद्यते, घटादिज्ञानेषु त्वविद्याया दोषविधयाऽपि कारणत्वाद् न स्वरूपत; किन्तु विषयतोऽपि मिथ्यात्व-मिति त्वन्यदेतत्। इदं तु विवरणमतेन ॥

**भामतीमते तु यत्राविद्याया व्यावहारिकादिप्रपञ्चज्ञानेऽपि निमित्ततयैव कारणत्वं विशेषग्रहप्रतिबन्धकत्वेन, तत्राखण्डाकारवृत्तेः केवलमन्तःकरणपरिणामत्वेनाविद्याया निमित्ततया तत्र कारणत्वेऽपि शुद्धचैतन्याविषयत्वादुपहितविषयत्वस्यैव स्वीकाराच्च अविद्यारूप-दोषमूलत्वेऽपि न विरोध इति पूर्वमेव विवेचितम्। विषयरूपेणापरिणम्य वृत्तिमात्ररूपेण परिणामोऽन्यत्र विकल्पाख्यवृत्तौ दृष्टः, इति नाविद्यापरिणामवृत्तिविषयत्वं विषयबाधं विना नोपपद्यत इति संभवति। तथाचासत्यशास्त्रजन्यज्ञानविषयत्वेऽपि ब्रह्मणो न मिथ्यात्वम्; शतशो व्यभिचारात् ॥**

एतेन—असत्यहेतुजन्यज्ञानविषयत्वस्य न कुत्रापि व्यभिचारः;सत्यस्य माया-विष-मन्त्रौषधिज्ञानस्यैव प्रीति-भयादिहेतुत्वात्,सत्यस्य रज्जुसर्पादि ज्ञानस्यैव भयादिहेतुत्वात्, शङ्काविषबुद्धेरेव सत्याया मरणनिमित्तत्वात्, सत्यस्य प्रतिबिम्बज्ञानस्य बिम्बमुखगतविशेषप्रतिपत्तिकारणत्वात्, रेखायां वर्णबुद्धेरेव सत्याया वर्णप्रतिपत्तिहेतुत्वात्, रेखागवयसादृश्यस्यैव च सत्यस्य गवयबुद्धिप्रयोजकत्वाच्च। नहि कुत्रापि मिथ्याभूतस्यार्थक्रियाकारित्वं दृष्टम्; हस्त्यादीनामभावेऽपि सत्या बुद्धयस्तु भवितुमर्हन्त्येव; बुद्धीनां सालम्बनत्वमात्रनियमात्। अर्थस्य प्रतिभासमानत्वमेव सालम्बनत्वेऽपेक्षितम्, स तु बाधितोऽसत्यवदवसीयते। अबाधिता हि बुद्धिः सत्यैवेत्यादिश्रीभाष्योक्तिः—परास्ता ॥

**बाधितेनाप्यर्थेन ज्ञानस्य सालम्बनत्वेऽपि ज्ञानत्वेनार्थक्रियाकारित्वे सर्वेषां प्रमाणां ज्ञानत्वाविशेषेण सर्पज्ञानाद् रजतार्थिप्रवृत्तेः, रजतज्ञानाद् भीत्यादेश्च फलस्योपपत्त्या तत्तद्विषयकत्वेन ज्ञानानां कारणत्वे वक्तव्ये विषयाणामपि कारणत्वावश्यकत्वेनासत्यस्याप्यर्थक्रियाकारित्वं नियतमूरीकर्तव्यम्। विषयाणां**

परिचायकत्वेनोपाधित्वमेव, नतु कारणत्वमिति स्वीकारेऽपि ज्ञानविषययोस्समसत्ताकत्वनियमः परित्यक्त एव श्रीभाष्यकारैरपि; यतो विषयबाधेऽपि ज्ञानसत्यता स्वीक्रियते। यदि त्वभ्युपगमवादेन विषयमिथ्यात्वम्, तर्हि कथमविशेषात् तद्विषयज्ञानस्यापि न मिथ्यात्वमभ्युपगम्यते; भ्रमस्थले हि विषय इव तदाकारावृत्तिरप्यविद्यापरिणामत्वाद् मिथ्यैवेति खल्वद्वैतिनां मतम्। विषयमात्रारोपवादिनोऽप्येकदेशिनो विषयस्यापि कारणत्वं तु मन्यन्त एवेति कथमभ्युपेत्यवादेऽप्यर्धजरतीयन्यायाश्रयणम्? तथाचासत्यहेतुजन्यज्ञानविषयत्वं कथं ब्रह्मणो मिथ्यात्वं साधयिष्यति? विषमसत्ताकेन सर्पादिना रज्जुसर्पज्ञानादेरिव पारमार्थिकेन विषमसत्ताकेन च ब्रह्मणा ब्रह्मज्ञानस्यापि सालम्बनत्वसिद्ध्या तद्विषयत्वस्य मिथ्यात्वप्रयोजकत्वाभावात्। यथाच—ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिरूपप्रतिकूलतर्कस्य सत्त्वादप्रयोजकत्वम्, तथाऽद्वैतसिद्धौ व्यक्तम्; निरधिष्ठानभ्रमायोगात्, "कथमसतः सज्जायेते"ति श्रुत्यैवासत्कारणवादनिरासपूर्वकं सत्कारणवादस्य छन्दोग्ये व्यवस्थापनाच्च॥

एतेन—ब्रह्म, शून्यम्, स्वयमविद्याऽपरिणामत्वे सति अविद्यापरिणामवृत्तिविषयत्वादिति—परास्तम्; शशशृङ्गादीमसत्त्वं हि नोक्तहेतुनिबन्धनम्, किन्तु निःस्वरूपत्वनिबन्धनमेवेत्यप्रयोजकत्वशङ्कापि दुरपह्नवा॥

> एतेन—ब्रह्मणः पाश्चात्यबाधदर्शनं चासिद्धम्; 'शून्यमेव तत्त्वमि'ति वाक्येन तस्यापि बाधदर्शनात्। तत्तु भ्रान्तिमूलमिति चेत्, एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम्, पाश्चात्यबाधादर्शनं च तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेनेति श्रीभाष्यकाराणां परिहासोक्तिरपि—व्याख्याता।

बाधदर्शनं नाम नेदं तत्, किन्तु अन्यदेवेति परीक्षितप्रमाणजन्यं प्रातिभासिकविषये व्यावहारिकाधिष्ठानज्ञानम्, व्यावहा-

रिकविषये पारमार्थिकाधिष्ठानज्ञानं प्रमाणमूर्धन्यवेदान्तवाक्यजन्यम्, नतु पुरुषबुद्धिप्रभव-संभावितदोषवाक्यजन्यज्ञानम्; तत्त्वाप्रतिष्ठानापत्तेः। श्रीभाष्याद्वैतभाष्यकारा हि वेदान्तप्रमाणबोध्यं वस्तु सविशेषम्, उत निर्विशेषमिति विचारार्थमेव प्रवृत्ता न वेदान्तवाक्यसमानयोगक्षेमं बौद्धादिवाक्यं प्रमाणतया मन्यन्ते। तथाच प्रपञ्चबाधकं वेदान्तजन्यमद्वितीयत्वादिज्ञानं यदि वेदान्त एव, सोऽप्येकं ब्रह्म नास्ति, किन्तु शून्यमेव तत्त्वमिति वाक्यविशेषजन्यज्ञानेन बाध्येत, तर्हि शून्यवाद एव वेदान्तार्थ इति स्यात्; अन्यथा तु नात्र शून्यवादस्यावसरलेशोऽपि। नहि निरधिष्ठानभ्रमस्संभवति, इति कथं शून्यमेव तत्त्वं भवेत्?

शून्यं तत्त्वमिति वदन्तोऽपि माध्यमिकाः प्रपञ्चमिथ्यात्वमेव प्रतिपादयन्ति, न त्वधिष्ठानमिथ्यात्वमपि। तन्मतरीत्या हि शून्यमेवाधिष्ठानं प्रपञ्चस्य। तद्धि न सत्, नासत्, न सदसत्; नानुभयम्, किन्तु सत्तासामान्यं सद्रूपमिति नवीनाः। शून्यशब्दव्यवहारयोग्यतापि तत्र नास्ति। तदुक्तम्—शून्यता सर्वबुद्धीनां प्रोक्ता निःसरणं बुधैः। येषां तु शून्यताबुद्धिस्तानसाध्यान् प्रचक्षते।" इति। तथाच सतोऽप्यधिष्ठानमसद्रूपं शून्यमिति कथमपि न संभवति॥

शून्यवाददृष्ट्या पौरुषेयवाक्यानामप्रामाण्ये नाविद्यामूलत्वमेव कारणम्, किन्त्वद्वैताभिमताविद्यातिरिक्तभ्रान्तिज्ञानादिमूलकत्वमेव। तथाच वेदान्तवाक्यसमानयोगक्षेमत्वं पौरुषेयवाक्ये न संभवति। वस्तुतस्तु निर्विशेषवाक्यजन्यज्ञानस्य पूर्वोक्तविधया नाविद्यारूपदोषजन्यत्वमपि वर्तते, इति भ्रान्तिमूलत्वेन साम्यकथाऽप्यनवसरैव। नहि माध्यमिकानां वाक्यजन्यज्ञानमेव सर्वप्राश्चात्यम्, न चार्वाक-नैयायिकादिवाक्यजन्यं सर्वतः पाश्चात्यमिति काचन राजाज्ञाऽस्ति; तर्काप्रतिष्ठानात् पुरुषमतिवैश्वरूप्येणाव्यवस्था-

पत्तेः, इति निर्विशेषवाक्यजन्यज्ञानस्यापि बाधकवेदान्तवाक्य-जन्यज्ञानान्तराभावस्योभयसम्मतत्वे कथं पाश्चात्यबाधादर्शनं नासिद्धम्? सर्वथा तु निर्विशेषवाक्यस्योपक्रमाद्यनुसारेणाद्वितीयब्रह्मतत्त्वबोधन एव स्वारस्यात् तदविरोधेनैव प्रमाणान्तराणां नेयत्वाच्च निर्विशेषब्रह्मवादोऽयमेव मोक्षस्य प्रधानतमं द्वारमिति नियतं सर्वैरपि स्वीकर्तव्यम् ॥

अथेदानीमवसरप्राप्तम्—निर्विशेषपराणां वाक्यानां श्रुति-स्मृति-पुराणगानां ब्रह्मसूत्राणां च समालोचनं नाम। अत्राद्वैतिनामत्यन्तसाधकतयाऽभिमतानि निर्विशेषब्रह्मपराणि वेदान्तादि-वाक्यानीमान्येव ॥

(१) "सदेव सौम्येदमग्र आसीत्" इत्येवमादीनि "तत्त्वमसी" त्यन्तानि, (२) "अथ परा यया तदक्षरमधिगम्यते" इति प्रवृत्ता परविद्याऽक्षरब्रह्मनिरूपणपरा, (३) "सत्यं ज्ञानमनन्तं ब्रह्म", (४) "निर्गुणं निरञ्जनम्", (५) "निष्कलं निष्क्रियं शान्तम्", (६) "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" (७) "यस्यामतं तस्य मतं मतं यस्य न वेद सः", (८) "ब्रह्म वेद ब्रह्मैव भवति", (९) "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति", (१०) "न दृष्टेर्द्रष्टारं पश्येः न मतेर्मन्तारम्", (११) "आनन्दो ब्रह्म", (१२) "विज्ञानमानन्दं ब्रह्म", (१३) "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति", (१४) "नेह नानास्ति किञ्चन", (१५) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", (१६) "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्", (१७) "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति", (१८) "सर्वं खल्विदं ब्रह्म", (१८) "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति", (२०)

"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि", (२१) "मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात्", (२२) "मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः। नचमत्स्थानि भूतानि पश्य मे योगमैश्वरम्।" (२३) भूतभृत् नच भूतस्थो भूतात्मा भूतभावनः।" (२४) "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।" (२५) "यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः", (२६) "इदं सर्वं यदयमात्मा", (२७) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्", (२७) प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्।" "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥" "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते।" यदेतद् दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोनयः। ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे। ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर।" "तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः॥ यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम। तदेषोऽहमयं चान्यो वक्तुमेवमपीष्यते॥" "वेणुरन्ध्रविभेदेन भेदः षड्जातिसंज्ञितः। अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः॥" "सोऽहं स च त्वं सच सर्वमेतद् आत्मस्वरूपं त्यज भेदमोहम्। इतीरितस्तेन स राजवर्यः तत्याज भेदं परमार्थदृष्टिः॥" विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥" "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत॥" "न तदस्ति विना यत् स्याद् मया भूतं चराचरम्।" इत्यादीनि॥

जगन्मिथ्यात्वप्रतिपादकान्यपि वाक्यान्यनिर्वचनीयाविद्यास्व-

रूपबोधकान्यत्रानुसन्धेयानि—(१) "अनृतेन प्रत्यूढाः", (२) तेषां सत्यानां सतामनृतमपिधानम्" (३) "नासदासीद् नो सदासीत् तदानीम्। तम आसीत् तमसा गूढमग्रे प्रकेतम्", (४) "मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्।" (५) "इन्द्रो मायाभिः पुरुरूप ईयते", (६) "मम माया दुरत्यया", (७) "अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते", (८) "ज्ञानस्वरूपो भगवान् यतोऽसावशेष-मूर्तिर्नतु वस्तुभेदः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञा-नविजृम्भितानि। यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्त-दोषम्। तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तु-भेदाः॥ तस्माद् न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद् द्विज वस्तुजातम्। विज्ञानमेकं द्विजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपे-तम्॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्। एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत् संव्यव-हारभूतं तत्रापि चोक्तं भुवनाश्रितं ते", (९) "भिद्यते हृदयग्रन्थि-श्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" (१०) "तमेवं विदित्वाऽतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय", (११) "प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमाद-ममृतत्वं ब्रवीमि।" (१२) "अथ योऽन्यां देवतामुपास्तेऽन्योऽसा-वन्योऽहमस्मीति न स वेद।" १३) "अकृत्स्नो ह्येष आत्मेत्येवोपा-सीत", (१४) "तत्त्वमसि" (१५) "त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते। तद्योऽहं सोऽसौ योऽसौ सोऽह-मस्मि।" (१६) "आत्मेति तूपगच्छन्ति ग्राहयन्ति च।"

इमानि हि प्रमाणवाक्यान्युभयेषां श्रीभाष्यकार-शङ्करभग-वत्पादानां किं श्रीभाष्याभिमतमर्थं बोधयन्ति? उत भगवत्पादाभि-मतमिति समालोचनीयम्॥

अत्र प्रथमं छान्दोग्यगतसद्विद्याप्रकरणं श्रीभाष्यकाराः स्वमतानुगुणं व्याचक्षते। इदं हि प्रकरणम्—"एकमेवाद्वितीयमि" त्युपक्रम्य "तत्त्वमसी" ति वाक्येनोपसंह्रियते। मध्ये च "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि" ति वाक्येन परामृश्यते, इत्येतत्प्रकरणसमालोचनेन त्रीणि प्रमाणवाक्यानि पूर्वसंगृहीतानि व्याख्यातानि भवन्ति। तेन चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि मतद्वयरीत्या समालोचितप्राया भविष्यति। सा हि न केवलं छान्दोग्य एव, किन्तु मुण्डक-बृहदारण्यकयोरपि श्रूयते—कस्मिन् नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" 'कस्मिन्नु खलु विदिते सर्वमिदं विदितं भवती" ति॥

"सदेव सौम्येदमि" ति वाक्यं हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन प्रवृत्तं तद्घटकेन सच्छब्देन परं ब्रह्म परामृशतीत्युभयसंप्रतिपन्नम्। तस्य सच्छब्दवाच्यस्य परमात्मन इदंतादात्म्यानुवादात् तदुपादानत्वमप्युभयसंप्रतिपन्नम्। न केवलमिदंतादात्म्यश्रवणमात्रेणोपादानत्वम्, किन्तु तत् "बहु स्यां प्रजायेये" ति बहुभवनसंकल्पेनाप्यवगम्यत इत्यपि संप्रतिपन्नमेव। "तदैक्षते" ति तन्निमित्तत्वमपि सूच्यते, इत्यभिन्ननिमित्तोपादनतायामेव मतद्वयेऽपि प्रकरणतात्पर्यम्। एतेन—सर्वज्ञत्व-सर्वशक्तित्वादिकमपि—व्याख्यातम्, "अनेन जीवेनात्मनाऽनुप्रविश्ये" ति सर्वान्तर्यामित्वं तदाक्षिप्तसर्वनियन्तृत्वादिकमप्युभयसम्मतमेव। एतेन—"ऐतदात्म्यमिदं सर्वमि" ति सर्वजगत्तादात्म्यं "तत्त्वमसी" ति ब्रह्मात्मतोपदेशश्च—व्याख्यातः। "वाचारम्भणमि" ति वाचारम्भणत्वं तु ब्रह्मण एकस्य विज्ञानेन सर्वस्य विज्ञानोपयोगितया कार्याणां कारणाभेदप्रतिपादनार्थमित्युभयसंप्रतिपन्नम्॥

इदमेवात्रालोचनीयम्—कीदृशमिदमभिन्नोपादानत्वम्? तस्य वाचारम्भणश्रुत्यादेश्च कथं "तत्त्वमसी" ति महावाक्यार्थविचार

**उपयोगः ? किमिदं सगुणब्रह्मण एव पारमार्थिकतासिद्धान्तस्यानुगुणम्? उत निर्गुणब्रह्मण एव पारमार्थिकतासिद्धान्तस्य ? "तदैक्षत बहु स्यां प्रजायेये" त्यादीनां कस्मिन् मते स्वारस्यम् ? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनं केन मतेनोपपद्यते ? इति ॥**

(१) चिदचिद्विशिष्टं ब्रह्मैव शास्त्रार्थः। तस्याचिद्विशिष्टत्वेनोपादानत्वम्, स्वरूपतो निमित्तकारणत्वम्। तत्र यद्यप्यचिदंशस्यैव परिणामाः स्थूलभूतानि, चिदंशस्यैव धर्मभूतज्ञानसंकोच-विकासादिद्वारा स्थूलचितश्च परिणामाः; तथापि शरीर-शरीरिभावेनापृथक्सिद्धत्वाद् ब्रह्मणः पृथक् कारणस्वरूपस्य व्यवहारानर्हत्वाच्च ब्रह्मैवाभिन्ननिमित्तोपादानं मन्यते; कारणवाक्येषु सर्वेषु सूक्ष्मचिदचिद्विशिष्टस्यैव ब्रह्मणः परामर्शात्। तथाच सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम्, स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यम्, इति कार्यावस्थकारणावस्थजगद्रूपेण स एवावतिष्ठते, यः सर्वावस्थावस्थितचिदचिच्छरीरतया तत्प्रकारः, इति बोधयितुमेव— "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजत।" "सन्मूलाः सोम्येमाः सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्यादिश्रुतयः प्रवृत्ताः। तथाच सदेवेत्यादिवाक्येषु सत्पदं सूक्ष्मचिदचिच्छरीरकपरमात्मस्वरूपस्यैव बोधकम्, नतु निर्विशेषस्य ब्रह्मणः। तथाच कारणवाक्येनोपक्रमः सगुणब्रह्मपारमार्थिकतावाद एव युज्यते, न केवलाद्वैतवादे। "एकमेवाद्वितीयम्" इति वाक्यस्य च तदनुगुण एवार्थो वर्णनीयः। तत्रैकशब्देन प्राधान्यमद्वितीयपदेनासाहाय्यं च बोध्यते॥

एतेन—वाचारम्भणश्रुतिरपि—व्याख्याता; अनया श्रुत्या "मृत्तिकेत्येव सत्यमि" ति मृद् घट इति ज्ञानस्य प्रमात्वबोधनेन कार्य-कारणयोरेकद्रव्यत्वमेव बोध्यते, नतु कारणव्यतिरेकेण कार्याभावोऽद्वैतिनामभिमतः। तत्र वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वकव्यवहारपरः, वाचेति तृतीयया प्रयोजनतया हेतुत्वं विवक्षितम्। आरम्भणमिति कर्मणि ल्युट्। आरभ्यते मृत्पिण्डेनेत्यर्थसिद्धम्। विकारः—घटत्व-द्रव्यत्वाद्यवस्था। वाक्पूर्वकहानोपादानव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते। मृत्पिण्डो नामरूपभाग् भवतीत्यर्थः। कार्य-कारणयोरेकद्रव्यत्वे प्रमाणमाह—"मृत्तिकेत्येव सत्यमि" ति। मृदयं घट इति प्रत्यभिज्ञया

मृन्मयं घटादिकमपि मृद्द्रव्यत्वेन प्रामाणिकमित्यर्थः। बुद्धिशब्दादि-भेदा घटादिषु द्रव्यभेदेऽपि दृष्टाः। 'आस्ते' 'शेते' 'सुख्यहम्' इत्यादिषु द्रव्यैक्येऽपि हि ते दृश्यन्ते। अतस्ते साधारणाः। तत्र—"आस्ते" 'शेते' इत्यादिषु द्रव्यैक्यनियामिका या प्रत्यभिज्ञा, साऽत्रापि द्रव्यैक्यनियामिकाऽस्त्येव, इति द्रव्यैक्यमेव। अत्र मृत्तिकामात्रस्य सत्यत्वम्, विकारासत्यत्वं च विवक्षितं चेत्, इतिशब्दवैयर्थ्यम्; मृत्तिकैव सत्येति हि वाच्यम्। विकारानित्यत्वे दृष्टान्तः साध्यविकलः; सत्यत्वप्रतिपत्तेः; यादृशं सत्यत्वं मृत्तिकायाः, तादृशं घटस्यापि वर्तत इति मृत्तिकामात्रसत्यत्वासंभवश्च। तथाच जगद्-ब्रह्मणोरप्येकद्रव्यत्वेनैकविज्ञानेन सर्वविज्ञानोपपादकता वाचारम्भणश्रुतेः। सति चैवम्—सूक्ष्मचिदचिच्छरीरकब्रह्मण एव सर्वकारणस्य सर्वैः कार्यैः सन् घटः इत्यादिप्रत्यभिज्ञयैक्याद् एकविज्ञानेन सर्वविज्ञानमुपपन्नमेव; "तत्त्वमसी"ति वाक्यमपि जीव-ब्रह्मणोरपृथक्सिद्धिविवक्षाद्वारा स्थूलचिद्ब्रह्मणोरपि द्रव्यैक्यमेव बोधयति, तत्र च दृष्टान्तविधया वाचारम्भणश्रुतिः प्रवृत्तेति भावः॥

इदं चाभिन्ननिमित्तोपादानत्वं चिदचिच्छरीरकतया ब्रह्म-जगतोर्द्रव्यैक्यनिरूपणार्थं चिदचिद्विशिष्टस्यैव ब्रह्मणो भवति, न केवलस्य निर्विशेषस्य चैतन्यस्य, इति सगुणब्रह्मवाद एव योग्यः; ईक्षतिकर्तृत्वादीनां निर्विशेषे ब्रह्मणि बाधादिति श्रीभाष्यानुयायिनो—मन्यन्ते॥

**शङ्करभगवत्पादानुयायिनस्तु—सद्विद्याप्रकरणमिदं निर्विशेषवादस्यैवानुगुणम्, नतु सगुणब्रह्मपारमार्थिकतावादस्य। सृष्टिप्रकरणेषु सर्वेषु कारणं ब्रह्म यदि सूक्ष्मचिदचिद्विशिष्टमुपात्तं स्याद्, तर्हि सूक्ष्मचिदचिद्विशिष्टब्रह्मकारणतावाद एव तस्य तात्पर्यमुन्नेतुं शक्येत, नतु तदस्ति; यतः "सदेव सोम्यदमग्र आसीदि"ति सत्पदेन परमात्मस्वरूपमेव बोधयितुं शक्यम्, नतु चिदचिद्विशिष्टम्। "नासदासीद् नो सदासीत् तदानीम्। तमः आसीत्" इत्यादिवाक्यानि सद्रूपं कारणं तमसाऽऽवृतमासीदिति बोधयन्त्यपि चित्सम्बन्धं कारणावस्थायां न प्रतिपादयन्ति। एतेन—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतिरपि—व्याख्याता।**

सति चैवमज्ञानेन तमःशब्दवाच्येनावृतं सद्रूपेण प्रकाशमानं ब्रह्मैव जगतः कारणम्। तच्चाव्रियमाणं सद्रूपमेव, नासद्रूपम्; असतः सत्तादात्म्येन प्रतीयमानप्रपञ्चोत्पत्त्यसंभवात्, चिद्विशिष्टत्वेऽपि ब्रह्मणस्तत्त्वमसीत्युपदेशवैयर्थ्यमपि; प्रथमवाक्येनैव ज्ञातत्वात्। चिद्चिद्विशिष्टब्रह्मज्ञानस्यैव यदि मोक्षोपयोगित्वम्, तर्हि "तत्त्वमसी"ति जीवशारीरकत्वमात्रोपदेशः कथं सदुपदेशः स्यात्? अन्तर्यामिब्राह्मणावगतं सर्वशरीरकत्वं तु स्थूलचिदचिद्विशिष्टस्वरूपसाधारणम्, इति तद्वदेव सर्वशरीरकत्वेनोपसंहारे कर्तव्ये 'तत्त्वमसी'ति चिद्चच्छिरीरकत्वमात्रोपसंहारासाङ्गत्यापत्तिः। "सदेवेदमि"ति सर्वतादात्म्येनोपक्रमेण सर्वशरीरकत्वेऽवगते "एकमेवाद्वितीयमि"ति द्वितीयप्रतिषेधोऽपि श्रीभाष्यमते वितथ एव; यतस्तस्य सर्वशरीरकत्वेनैव सर्वप्राधान्यमवगम्यते, स्वशरीरप्रकृतिसाहाय्यस्य धर्माधर्मादिसापेक्षत्वस्य च श्रीभाष्यमतेऽपि स्वीकारात् सहायसामान्यनिषेधोऽसङ्गतः। "यदग्ने रोहितं रूपमि"त्यादिना "त्रीणि रूपाणीत्येव सत्यमि"ति तन्मात्राणामेव हि सत्यत्वप्रतिज्ञा, न सूक्ष्मचितोऽपि, इति कारणमत्र सर्वशरीरकं न विवक्ष्यते। "सदेवेदमि"त्यवगतस्य सार्वात्म्यस्यैव पुनः परामर्शम्—"ऐतदात्म्यमिदं सर्वमि"ति व्यत्ययेनानूद्य 'तत्सत्यमि'ति तच्छब्देनैतदात्म्यघटकैतत्पदार्थस्यैव परामर्शेन 'इदं सर्वमि' ति तच्छरीराणां पृथक्करणेन च स्वरूपचैतन्यांशमात्रमादाय सत्यत्वम्, तत एव ब्रह्मणोरभेद इत्यपि ज्ञातत्वेन चिच्छरीरकब्रह्मोपदेशायोगः। किञ्च—"सदेव सौम्येदमग्र आसीत्" इत्यत्रापि तादात्म्यं कार्य-कारणभावनिबन्धनं वोत शरीर-शरीरिभावनिबन्धनं वा? आद्ये "तत्त्वमसी" त्युपसंहारस्य शरीर-शरीरिभावपरतया योजनायोगः। द्वितीये "सन्मूलाः सौम्येमाः सदायतनाः सत्प्रतिष्ठाः" इति सन्मूलत्वनिबन्धनं सर्वतादात्म्यम्, इति 'ऐतदात्म्यमि'त्युपसंहारायोगः।

सदायतनत्वादिकं हि सद्रूपे ब्रह्मण्यध्यस्तत्ववाद एव स्वरसम्। नहि शरीरं शरीरिणि प्रतिष्ठितमिति प्रसिद्धम्, नवा शरीरिमूलकत्वं शरीरस्य। शरीरिणः शरीरकारणत्वं हि तत्र शरीरस्याध्यस्तत्ववाद एवोपपद्यते, नान्यथा। तथाचैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽपि कारणज्ञानेन कार्यज्ञानमादायैव, नतु विशिष्टशरीरिज्ञानम्; अन्यथा "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति तदुपपादकतया कार्य-कारणस्वरूपनिदर्शनमनुपपन्नं स्यात्॥

अत्र कार्य-कारणयोरभिन्नतयाऽत्र प्रतीयमानयोः कारणरूपमेवानुवर्तमानत्वात् सत्यम्, नतु कार्यरूपं व्यावर्तमानमित्येव बोध्यते। अत्र मृत्तिकोदाहरणाद् ज्ञायते तादात्म्यप्रतीतियोग्यकार्य-कारणभाव एव ब्रह्म-प्रपञ्चयोर्विवक्ष्यते, इति साक्षादेव ब्रह्मकार्यत्वं प्रपञ्चस्येति सिद्धान्त एवोक्तवाक्यस्वारस्यम्। नहि श्रीभाष्यमते मृद्घटयोरिव ब्रह्म-प्रपञ्चयोः साक्षादुपादानोपादेयभावो मन्यते। अद्वैतमते तु नायं दोषः; साक्षादुपादानत्वस्य ब्रह्मणि स्वीकारात्। इयान् विशेषः—यद् मृत्तिका परिणामिकारणम्, ब्रह्म तु विवर्तोपादानम्, इति स्वाभिन्नकार्यजनकत्वरूपं परिणामि-विवर्तोपादानसाधारणमुपादानत्वमात्रमादाय प्रकृतिसत्यत्वबोधन एव तात्पर्यम्। तथाच—मृत्तिकापदेन प्रकतिमात्रसत्यत्वमेव विवक्षितं भवति। प्रकृतिश्चेयं किं ब्रह्मशरीरं प्रकृतिः, उत ब्रह्मैवेति चर्चायां ब्रह्मरूपैव प्रकृतिरत्र मृत्तिकापदेन विवक्ष्यत इति ज्ञायते, यतः "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधादि"ति वाचारम्भणसाहाय्येन ब्रह्मण एव प्रकृतित्वमुपादानत्वं सूत्रकारा "जन्माद्यस्य यतः" इत्युपक्रान्तमुपसंहरन्ति। नच श्रीभाष्यमते साक्षात् परिणामित्वेन ब्रह्मण एवोपादानत्वं मन्यते। तथाच न केवलं प्रत्यभिज्ञानिबन्धनद्रव्यैक्यमेव वाचारम्भणश्रुत्यर्थः, किन्तु स्वव्यतिरेकेण कार्याभावरूपविवर्तोपादानत्वमेव तदर्थः। एतेन—"तदनन्यत्वमारम्भणशब्दादिभ्यः"

इत्यपि—व्याख्यातम्; अधिकमद्वैतमार्तण्डे व्यक्तम्। तथाच "मृत्तिकेत्येव सत्यमि" त्यत्र परिणामिसाधारणप्रकृतिमात्रसत्यताबोधनेऽपि न दोषः। न ह्यत्र ब्रह्मस्वरूपं सिसाधयिषितम्; तस्य स्वतःसिद्धत्वात्, किन्तु तत्कार्यप्रपञ्चमिथ्यात्वमेव। तच्च उपादानकारणव्यतिरेकेण कार्याभावानुमानसमर्पणेनाप्युपयुज्यत एव। अनेन—अयं पटः, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, पटत्वात्, पटान्तरवत्, अथवा-अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिता। अंशित्वादितरांशीव दिगेवैषा गुणादिषु॥" इति मित्थ्यात्वानुमानप्रयोग एव सूचितो भवति, इति "शुक्तिरित्येव सत्यं रज्जुरित्येव सत्यम्" इत्यादिनिदर्शनाद् न विशेषः॥

"मृत्तिकेत्येव सत्यमि" तीतिशब्दप्रयोगस्तु मृद्घटयोरभेदेन कदाचिद् मृत्तिकाशब्देन घटस्यापि ग्रहणेन घटसत्यत्वमेवात्र वर्णितमिति शङ्कापरिहारार्थम्, मृद्रूपं कारणरूपमेव सत्यम्, नतु कार्यरूपमिति ज्ञापनार्थं च। श्रीभाष्यते तु घटरूपेणापि घटस्य सत्यत्वस्वीकाराद् मृत्तिकैव सत्यमित्यनेनापि नेष्टसिद्धिरिति वैयर्थ्यमपरिहरणीयम्। किंच श्रीभाष्यदृष्ट्या प्रत्यभिज्ञानाद् द्रव्यैक्योपदेशोऽयं वितथोऽपि, यतो नहि मृद्घटयोः प्रत्यभिज्ञा; अन्यथा मृद्घटयोः प्रत्यभिज्ञावादिनां मते तद्भेदशङ्काया एवाभावात् कथं मृत्तिकेत्येव सत्यमिति न वितथम्? यदि दृष्टान्तस्थिरीकरणार्थमनुवादमात्रम्, तर्हि शरीर-शरीरिणोरुभयोरपि प्रत्यभिज्ञानाभावाद् न द्रव्यैक्यसिद्धिः; अन्यथा देहात्मवादोऽपि प्रामाणिकः स्यात्, इति शरीरिज्ञानेन शरीरज्ञानमनुपपादितं स्यात्। नहि सूक्ष्मचिदचितोर्ब्रह्मशरीरयोर्नित्ययोर्ब्रह्मकार्यत्वमपि, येन दृष्टान्तसिद्धकार्य-कारणभावनिबन्धनद्रव्यैक्यबुद्धिः स्यात्। ततश्च विवर्तोपादानत्वमेव ब्रह्मणो विवक्षितम्॥

तच्च मायोपहितस्यैवाद्वैतिभिरपि स्वीक्रियते। इयान्

विशेषः—यत कारणशरीरं प्रकृतिमात्रं मायाऽविद्यादिपदवाच्यमद्वैतमते, श्रीभाष्यमते तु सूक्ष्मचिदपि। नहि कुत्रापि सृष्टेः पूर्वं मायाविशिष्टं रूपमिव जीवविशिष्टमपि रूपं ब्रह्मणः परामृश्यते। सत्यं जीवोऽप्यनादिरेव, तथापि न सोऽपि कारणतावच्छेदकः; अनुपयोगात्। ईक्षितृत्वं च मायोपहितस्यापि मायिकवृत्तिमादायोपपद्यते। एतेन—सर्वज्ञत्वमपि—व्याख्यातम्, न ह्यद्वैतिनः सृष्टिकाले, ततः पूर्वमपि वा सर्वथा ब्रह्मणोऽद्वितीयत्वं मन्यन्ते, कल्पितं सद्वितीयत्वं हि सृष्टिकाले स्वीकुर्वन्त्येव। अत एव—"सदेव सौम्येदमग्रे आसीत्" इति प्रपञ्चतादात्म्यम्, तस्मिन्नेव वाक्ये तदेव ब्रह्मोद्दिश्य "एकमेवाद्वितीयम्" इति सजातीय-विजातीय-स्वगत-भेदराहित्यप्रतिपादनं चोपपद्यते॥

तथाच व्यवहारदृष्ट्या कारणत्वमुपादानत्वरूपमीक्षितृत्वेन निमित्तत्वरूपं चाद्वैतिनोऽपि मन्यन्ते। सत्यकामत्वादिकल्याणगुणा अपि व्यवहारदशायां नाद्वैतिनां विरुद्धाः।वस्तुगत्या खलु द्वितीयाभावो विवक्ष्यते। सृष्टिप्रकरणाम्नाता गुणाः सार्वदिकगुणवत्त्वे न प्रमाणं भवितुमर्हन्ति। सति चैवं'सदेवेदमि'त्यनुवादः, "एकमेवाद्वितीयमि"ति विधिः, इत्यद्वितीयस्यैव ब्रह्मण उपक्रमः, "तत्सत्यं स आत्मे"ति ब्रह्ममात्रसत्यत्वपूर्वकं ब्रह्मात्मभावोपदेशादुपसंहारोऽप्यद्वितीयस्यैव ब्रह्मणः;अन्यथा—"तत्सत्यमि"ति ब्रह्मसत्यत्वोपदेशो वितथ एव स्यात् श्रीभाष्यमते। अनेन हि ब्रह्ममात्रसत्यत्वमेव विवक्ष्यते। सति चैवं "मृत्तिकेत्येव सत्यमि" त्यादीनामपि ब्रह्ममात्रसत्यताज्ञापनार्थमेव प्रवृत्तिरित्यपि फलति, इति वाचारम्भणश्रुत्यर्थोपयोगो जीवस्य ब्रह्मात्मभावोपदेश एव सुष्ठु भवति, अभिन्ननिमित्तोपादानत्वं च तदनुगुणमेव श्रुतिसम्मतमित्यद्वैताभिमतमेवाभिन्ननिमित्तोपादानत्वं छान्दोग्यषष्ठाध्यायार्थः। तत्रैव वाचारम्भणश्रुतेः "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्या-

दीनां च स्वारस्यम्। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इति विध्यनन्तरम्—"आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन सर्वमिदं विदितं भवती"त्यात्ममात्रज्ञानमेव सर्वविज्ञानसाधनमिति प्रतिपादितम्, न चिदचिद्विशिष्टब्रह्मज्ञानम्। न ह्यत्र सूक्ष्मचिदचिदुपस्थापकं किमपि लिङ्गमस्ति, प्रत्युत—"न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति। नवा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवती"ति शरीर्यात्मनोऽतिरिक्तमेवात्मस्वरूपम्, यदेवैकत्र सदादिपदेन कुत्र चन—"आत्मैवेदमग्र आसीदि"ति च निर्दिश्यते, इति "सदेवे"त्यादौ सदादिपदार्थश्चैतन्यमात्रमेव, नतु चिदचिच्छरीरकम्। न केवलं सृष्टिवाक्येषु, किन्तु "आत्मा वा अरे द्रष्टव्यः" "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" इत्यादावपि न चिदचिच्छरीरकस्य परमात्मन उपदेशो दृश्यते। इदं च सर्वं निर्विशेषब्रह्मवाद एव युज्यते, इति सद्विद्याप्रकरणं सर्वं निर्विशेषे ब्रह्मणि प्रमाणम्। तत्त्वमसिमहावाक्यार्थस्तु यथावसरं विचारयिष्यत उत्तरत्रेति संग्रहेणैतावन्मात्रं सूच्यते—यद् जीवशरीरकब्रह्मोपदेशविवक्षायां श्वेतकेतुमुद्दिश्य ब्रह्मस्वरूपविधानासंभवः, तत्र ब्रह्मशरीरत्वबोधनस्यैव विवक्षापत्तेः, शरीरिपरस्य शरीरपरताकल्पनादिप्रसङ्गात्। उद्देश्य-विधेयभावाविवक्षायां तु 'असि' पदप्रयोगानुपपत्तिः, शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्य लोकासिद्धस्य कल्पनप्रसङ्गः, "तत्सत्यमि"ति ब्रह्ममात्रसत्यत्वोपदेशानुपपत्तिः, सद्विद्याप्रकरणस्य ब्रह्म-प्रपञ्चयोः कार्यकारणभावबोधनेनाभेदबोधनपुरस्कारेण प्रवृत्तत्वात् शरीर-शरीरिभावेन तदभेदबोधनपुरस्कारेणाप्रवृत्तत्वात् शरीर-शरीरिभावेन तद्योजनस्याप्राप्तकालत्वम्, इत्यादि बहुदोषदुष्टत्वाद् न श्रीभाष्यकाराणां तत्त्वमसिमहावाक्यार्थवर्णनप्रकारः समादरमर्हति, किन्तु

स्वरूपचैतन्यैक्यमादाय जीव-ब्रह्मैक्यपरतयाऽद्वैतिनां विवरणप्रकार एव ॥

द्वितीयं तु प्रकरणमालोचितं श्रीभाष्यकारैर्मुण्डकोपनिषद्गतं परविद्याप्रकरणम् । इदमपि हि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानमुपजीव्यैव प्रवृत्तम्, इति परविद्याप्रकरणसमालोचनमपि सद्विद्याप्रकरणार्थनिर्णयस्योपकारायैव स्यात् ॥

एवमत्राम्नायते—"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च"......"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यगोत्रमश्रवणमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीराः । यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात् केशलोमास्संभवन्ति तथाऽक्षरात् संभवतीह विश्वम् । तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् । य सर्वज्ञः सर्ववित् । यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते"...... 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् । तदेतत्सत्यम्" "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः, तथाऽक्षराद्विविधास्सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति । दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः । एतस्माद् जायते प्राणो मनः सर्वेन्द्रियाणि च ।"........."पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्य ।......"यस्मिन् द्यौः पृथिवी चान्तरिक्षं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चत । अमृतस्यैष सेतुः ।"..."ओमित्येवं जानथात्मानं स्वस्ति वः पाराय तमसः

परस्तात्।"..."तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति ॥

इदमत्र श्रीभाष्यकाराभिमतं विवरणम्—"अथ परा यया तदक्षरम्" इत्यत्रापि प्रकृतानां हेयगुणान् प्रतिषिद्धया नित्यत्व-विभुत्व सुसूक्ष्मत्व-सर्वगतत्वाव्ययत्व-भूतयोनित्व-सार्वज्ञ्यादिकल्याणगुणयोगः परस्य प्रतिपादितः—इति। अद्रेश्यत्वाग्राह्यत्वे प्रत्यक्षानुमानाद्यगोचरत्वम्, अचक्षुःश्रोत्रत्वम्=इन्द्रियाधीनज्ञानाभाव; अश्रोत्रत्वावर्णत्वे=प्राकृतनामरूपराहित्ये। अपाणिपादत्वम्—इन्द्रियाधीनचेष्टाभावः। सूक्ष्मत्व-सर्वगतत्वे=सूक्ष्मतया सर्वव्याप्तिः। अव्ययत्वम्—एकरूपत्वम्, पूर्णत्वं वा। भूतयोनित्वम्=निखिलजगत्कारणत्वम्। नित्यत्वम्=कालापरिच्छिन्नत्वम्। सार्वज्ञ्यम्=स्वरूप-प्रकाराभ्यां सर्ववेदितृत्वम्। इमे हि गुणा निर्विशेषे ब्रह्मणि न सङ्गता भवन्ति। अतः सगुणमेव ब्रह्म परविद्याप्रकरणार्थः—इति ॥

अद्वैतिनस्तु मन्यन्ते—निर्विशेषपरमेव परविद्याप्रकरणम्, यतो भूतयोनित्वं "योनिश्च हि जायते" इति सूत्रप्रतिपाद्यमुपादानत्वमेव। तच्चोपादानत्वं पूर्वोक्तप्रकारेण विवर्तोपादानत्वमेव, न ह्यन्यथोपक्रान्तैकविज्ञाननिबन्धनसर्वविज्ञानोपपत्तिः संभवति। नित्यत्वविभुत्वादिकं तु मायोपहितस्य ब्रह्मणः सृष्टिक्षणादावद्वैतिनोऽपि नूनं स्वीकुर्वन्ति; तथापि तद् न पारमार्थिकमित्येव प्रकृतग्रन्थतात्पर्यम्। अत एव—अद्रेश्यत्वादिनिर्देश उपपद्यते। अनेन हि सद्विद्याप्रकरण इव कारणस्याद्वितीयत्वमेव बोध्यते। इयान् विशेषः—सद्विद्यायां कार्य-कारणभावेनोपक्रमोऽद्वितीयत्वस्योपसंहारः, अत्र परविद्यायामद्वितीयत्वेनोपक्रमः, कारणत्वेनोपसंहारः। अनेन च ज्ञायते पारमार्थिकमद्वितीयत्वम्, सद्वितीयत्वं कल्पितमिति। स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमिव स्वात्यन्ताभावाधिकरणे प्रतीयमानत्वमपि मिथ्यात्वमद्वैतिनो मन्यन्ते, इति प्रपञ्चमिथ्यात्वेन निर्विशेषस्यैवोपक्रमः—"ब्रह्म वेद ब्रह्मैव

भवती''ति महावाक्यार्थस्य ब्रह्मभावस्यैवोपसंहारः, मध्ये च—तत्र वाचारम्भणादिवाक्येन कारणमात्रसत्यत्वमिवात्रापि कर्मफलानित्यत्वविवेचनपूर्वकम्—"येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'' इति परविद्याप्राप्यस्य ब्रह्मणोऽक्षरशब्दार्थस्य कारणत्वेन प्रस्तुतस्य सत्यत्ववर्णनं च, इति निर्विशेषमेव ब्रह्म परविद्याप्रकरणार्थः, नतु सूक्ष्मचिदचिद्विशिष्टमिति सिद्धम्। अत एवात्र—"अक्षरात् परतः परः'' इति प्रकृत्यतीतत्वं प्रतिपादितमुपपद्यते। नहि परस्मिन् ब्रह्मणि सूक्ष्मचिदचिद्विशिष्टे प्रकृतिवशत्वशङ्काया अवसरलेशोऽपि, अतो लेशतोऽपि प्रकृतिसम्बन्धरहितमेव ब्रह्मेत्येवात्र वाक्यार्थः। अत एव—"पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्। एतद् यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्य'' इत्यक्षरब्रह्मणो गुहानिहितजीवाभिन्नतया ज्ञानेनाविद्याग्रन्थिरूपमायापदवाच्यप्रकृतिविनाशः प्रतिपादित उपपद्यते॥

तदयं निष्कर्षः—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया, अदृश्यत्वादिनाऽद्वितीयत्वेन च निर्विशेषोपक्रमः, तत्र एकविज्ञानेन सर्वविज्ञानोपपादककारणत्वेन समाप्तिश्च प्रथममुण्डप्रथमखण्डार्थः। अत्रोपपादितं कारणत्वं सर्वविज्ञानप्रतिज्ञासोपानतया कल्पितत्वं च न सविशेषब्रह्मवादस्यानुकूलम्। द्वितीयखण्डस्तु कर्मफलानित्यत्वव्यवस्थापनेन नित्यानित्यवस्तुविवेकेन चोपक्रम्य "येनाक्षरं पुरुषं वेद सत्यमि''ति ब्रह्ममात्रसत्यत्वेनोपसंहाराद् अद्वैतमतानुगुणसाधनचतुष्टयसंपत्तिरूपाधिकारप्रयोजकस्य संग्रहणाद् ब्रह्ममात्रसत्यत्वसिद्धान्तस्यैवावलम्बनाच्चाद्वैतवादस्यैव प्राणकल्पः॥

एतेन—द्वितीयमुण्डकमपि खण्डद्वयात्मकम्—व्याख्यातम्; अत्र प्रथमखण्डो हि—"तदेतत्सत्यम्—यथा सुदीप्तात् पावकाद् विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः, तथाऽक्षराद्विविधाः सौम्य भावाः

प्रजायन्ते यत्र चैवापियन्ति'' इत्यक्षरस्य पावकदृष्टान्तेन चिद्रूपस्यापि कारणत्वम्, नतु प्रथमखण्डोक्तविधया "सदेवे'' तिवाक्यविधया वा सद्रूपमात्रस्य। तथाच न केवलमस्त्यंशः, किन्तु भात्यंशोऽप्युपादानतया ब्रह्मानुवृत्त्यैव प्रपञ्चस्येत्युपक्रम्य "एतद् यो वेत्ति निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्ये''ति गुहानिहितात्माभेदेन तद्विज्ञानेनाविद्यानिवृत्तिबोधनेनोपसंहृतेः—"अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमि''ति श्लोकार्थमेवोक्ताखण्डतात्पर्यविषयं गमयति। "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'' इति द्वितीयमुण्डकोऽपसंहारोऽप्यत्रानुकूलः॥

अत्र गुहानिहिताभेदोक्त्या "तस्माद्वा एतस्मादात्मन आकाशः संभूतः'' इति तैत्तरीयोपनिषदुपदिष्टं गुह्यं ब्रह्मैवाज्ञानावस्थायां सद्रूपेण चिद्रूपेण च कारणम्, ज्ञानावस्थायामानदांशस्याप्यभिव्यक्तत्वाद् सच्चिदानन्दरूपमित्यत्रापि व्यवस्थाप्यतयाभिमतमिति ज्ञायतेअत एवा "विद्याग्रन्थिं विकिरती'' त्युपसंहारः। अविद्याया ग्रन्थित्वं हि सच्चिदानन्दरूपेषु कस्यचनांशस्यावारकत्वमेव, नतु सर्वात्मनाऽवारकत्वम्। इदं चाविद्याया निवृत्तिं विना न सम्भवतीत्यविद्याग्रन्थिनिवृत्त्युक्त्याऽखण्डरूपेण ब्रह्मभानमेवोपसंहृतं भवति, इति युक्तं तैत्तरीयश्रुत्येकवाक्यतैवायं खण्डः प्रवृत्त इति। यथाच तैत्तिरीयश्रुतेर्निर्विशेषब्रह्मवाद एव स्वारस्यम्, न सविशेषब्रह्मवादे, तथानन्दमयाधिकरणालोचनाप्रसङ्गे विशदीकरिष्यते॥

द्वितीयखण्डस्तु—येन गुहानिहितेन कारणस्य ब्रह्मणः प्रथमखण्डेनाभेद उपसंहृतः, स किमहमर्थः, उत केवलं चैतन्यमेवेति शङ्कावारणार्थं प्रवृत्तः—"आविः सन्निहितं गुहाचरं नामे''त्यन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयकोशतादात्म्यापन्नतयाऽहमादिरूपेण

तद्विषयतया प्रतीयमानमिदन्तया निर्देशानर्हमहंप्रतीत्यादिसमये वस्तुगत्या सन्निहितं च चैतन्यमात्रमेव गुहानिहितम्, नाहमर्थो जीवो जाग्रत्स्वप्नसुषुप्त्यवस्थावान, इत्युपक्रम्य "न तत्र सूर्यो भाति" इत्युपसंहरन् कारणस्य ब्रह्मणो नान्यभास्यत्वम्, किन्तु तस्यैव सर्वभासकत्वमिति बोधनेनाननुभाव्यसर्वाधिष्ठानसंविद्रूप एवात्मा, नतु सविशेषः, शरीर-शरीरिभावयोग्यो वेति गमयति। "तदेतत् सत्यं तदमृतमि"ति तन्मात्रसत्यत्वोक्तिरप्यत्रैवानुकूला। "तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ" इति "तदेतत्सत्यममृतमि"ति वाक्यानन्तरमितरेषामज्ञेयत्वव्यवस्थापनेनेदमेव विशदीक्रियते—यत्—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति। सति चैवमक्षरविद्याया अपि सद्विद्याया इव निर्विशेषब्रह्मवाद एव स्वारस्यम् ॥

एतेन—तृतीयमुण्डकमपि—व्याख्यातम्; तत्र प्रथमखण्डेन "आविः सन्निहितम्" इति पूर्वतनखण्डेन सन्निधानमात्रं कारणस्य चिद्रूपस्य परमात्मनः, नतु भोक्तृत्वम्, न वाहंप्रत्ययगम्यत्वमित्युक्तम्, तदेव "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्यो अभिचाकशीति" इति प्रथमवाक्येनोपक्रम्य—"समने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति द्वितीयवाक्येन परमात्मतादात्म्यापन्नस्य जीवस्याज्ञानवशात् तदप्रकाशेनैव शोकः, स्वतादात्म्यापन्नस्वाधिष्ठानस्वाभिन्नचैतन्यस्वरूपज्ञानेन तु मुक्तिरित्युपपादितम्। अत्रान्यत्वोक्त्या जीवब्रह्मभेदो यः प्रतीयते, स घटादिजडवर्गब्रह्मणोरिवाहंपदार्थस्यापि ब्रह्मणो भेदः कल्पितो यो वर्तते, स एव। अतश्चाद्वैतिनोऽप्युपलक्षणेनाहंपदार्थ एव मुख्यात्मा, तस्यैव श्रवणादिकं विधीयत इति मन्यन्ते, इति कथं वायं मन्त्रोऽद्वैतवादविरोधी ?

एतेन—"निरञ्जनः परमं साम्यमुपैति" इति फलवाक्यमपि—व्याख्यातम्। अत्र परमविशेषणाद् भोगमात्रसाम्यं सूत्रकारोक्तं वार्यते। तथाच क्रममुक्तानामिवोक्तचिद्रूपाहमर्थव्यतिरिक्तब्रह्मस्वरूपज्ञानिनः न जगद्व्यापारवर्ज्यतद्भावः, किन्तु एकीभाव एव। तस्यैव ह्युत्तरत्र द्वितीयखण्डे—"गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति" इति विज्ञानमयस्यापि तिरोभावेनैकीभाव एव ब्रह्मणा साकं मुक्तिरिति प्रतिपाद्यते। अनेन ज्ञायते—यदात्मनो विज्ञानमयत्वमपि सूक्ष्मशरीरसम्बन्धं यावदेव, तदनन्तरं तु नायं विज्ञानमयः, किन्तु विज्ञानरूपमेव। इयान् विशेषः—यत् सुप्तावज्ञायमानत्वाद् न ब्रह्मभावः, ज्ञानानन्तरं त्वज्ञाननिवृत्तेर्ब्रह्मभाव इति। एकीभावोऽयं ब्रह्मभाव एव, नतु साम्यमात्रमिति श्रुतिरभ्यासेन बोधयितुम्—"स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती"ति शब्दान्तरेणाभ्यासेन प्रवर्तते। तथाच—तत्त्वमसिवाक्येन सद्विद्यायामिव "एकीभवति" "ब्रह्मैव भवती"ति वाक्येन परविद्यायामपि ब्रह्मात्मभावस्याभ्यासेनैवोपसंहारः, कार्यकारणभावेनोपक्रमश्च वर्तते, इति न सविशेषब्रह्मवादस्य लेशतोऽप्यवसरः परविद्यायां सद्विद्यायां वा; उभयत्रापि शरीर-शरीरिभावेन ब्रह्मणोऽनुपदेशात् सूक्ष्मचिदचिच्छरीरकब्रह्मवादो नोक्तविद्याद्वयस्यापि तात्पर्यविषय इति विशदं प्रतीयते॥

तृतीयं तु वाक्यं श्रीभाष्यकारैरद्वैतमताननुकूलतया स्वमतस्यैवानुकूलतया च समालोचितम्—"सत्यं ज्ञानमनन्तं ब्रह्मे"ति तैत्तरीयोपनिषद्वाक्यम्, यत्तु श्रीभाष्यकारदृष्ट्या चिदचिच्छरीरकब्रह्मपरम्, अद्वैतदृष्ट्या निर्विशेषब्रह्मपरम्॥

इदमाम्नायते—"ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्मे" ति। 'ब्रह्मविदाप्नोतिपरम्' इति ज्ञेयतया प्राप्यतया च

विवक्षितं ब्रह्मस्वरूपं किमिति जिज्ञासायां प्रवृत्ता ऋक्”—“सत्यं ज्ञानमनन्तं ब्रह्मे”ति । अनेन वाक्येन सत्यत्वादिगुणविशिष्टं ब्रह्म प्रतिपाद्यते; नीलमुत्पलमित्यादाविव सामानाधिकरण्यप्रत्ययेन विशिष्टैकार्थपरत्वावश्यकत्वात्‌ , भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्तित्वस्यैव सामानाधिकरण्यरूपत्वात्‌ । न ह्येकार्थबोधकत्वमात्रेण सामानाधिकरण्यनिर्वाहः; सत्यादिपदानां व्यावृत्तिमात्रपरत्वेऽनेकार्थत्वापत्तेः, प्रवृत्तिनिमित्तभेदाभावेन स्वरूपमात्रपरत्वे पर्यायत्वापत्तेः । एतेन—सत्यपदेन सत्ता । जातिः, ज्ञानपदेन ज्ञानत्वम्‌, आनन्दपदेनानन्दत्वं च विवक्ष्यते, इत्युक्तजातिवाचित्वादपर्यायतेति कल्पतरूक्तिरपि—परास्ता; सत्त्वस्य जातिरूपत्वे ब्रह्मणः कालत्रयाबाध्यत्वमेव सत्त्वमिति स्वसिद्धान्तभङ्गापत्तेः, औपाधिकभेदमात्रेण ज्ञानत्वानन्दत्वादेराकाशत्वादेरिव जातित्वायोगात्‌, लक्षणया शुद्धब्रह्ममात्रविवक्षायां तत्र सत्यत्वादीनामभावेन प्रवृत्तिनिमित्तभेदेनापर्यायत्वोपपदनासम्भवाच्च । एतेन—सत्यादिपदानां विरोधिव्यावृत्त्यवच्छिन्नस्वरूपपरत्वशङ्कापि—परास्ता; एकोपलक्षणेनैव स्वरूपप्रतिपत्तावुपलक्षणान्तरानपेक्षया विरोधिव्यावृत्तेरनुपलक्षणत्वात्‌ ।उपलक्ष्यबहिर्भूत उपलक्ष्यप्रतीत्युपायो हि धर्म उपलक्षणं नाम । तथाच यदि विरोधिव्यावृत्तेः ब्रह्मस्वरूपत्वं संभवति, तदैव हि व्यावृत्तेरनुयोगिस्वरूपत्वम्‌, यथा कार्ष्ण्यव्यावृत्तं शौक्ल्यमित्यादौ, यत्रानुयोगिनो द्रव्यस्य द्रव्यान्तरव्यावर्तकधर्मत्वम्‌ . न तत्र तत्‌ ब्रह्मणस्तु स्वरूपव्यावर्तकधर्मान्तरापेक्षाऽस्त्येवेति न विरोधिव्यावृत्तिरूपता । यथाहि शौक्ल्यादिस्फुरणे तत्र कार्ष्ण्याद्यध्यासासंभवः, नैवं ब्रह्मस्फुरणे तदितरधर्माध्यासासंभवः । अतो रजतादिव्यावर्तकाधिष्ठानस्वरूपातिरिक्तशुक्तित्वादिवद्‌ ब्रह्मस्वरूपव्यावर्तकधर्मविशेषो ब्रह्मण्यवश्यमेव स्वीकर्तव्यः ; अन्यथा त्वेकतमपदवैयर्थ्यम्‌, प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च । न ह्युपलक्ष्यधर्मभेदं बिना बहूनामुपलक्षणानां प्रयोगः । तथाच जन्म-स्थिति-लयानां बहूनामुपलक्षणत्वं जगत्कारण उपलक्ष्ये धर्मभेदसत्त्वादस्मन्मत उपपद्यते, न त्वद्वैतमते । विरोधिव्यावृत्तीनां विशेषणत्ववादस्तु नाखण्डार्थत्ववादानुकूलः, किन्तु सखण्डार्थवादस्यैवानुकूलः । देवदत्तः श्यामो युवेत्यादिवाक्ये विशेषणभेदेऽपि विशेष्यैक्यप्रतिपत्तेः सत्याद्यनेकविशेषणेऽप्येकार्थबोधकत्वं न विरुद्धम्‌ ; यज्जातीयविशेषणानां नियमेन भिन्नाश्रयत्वं

न दृष्टम्, तज्जातीयविशेषणानां धर्मिवाचकशब्दैक्ये समानविभक्तिनिर्देशे चैकविशेष्यनिष्कर्षकत्वे दोषाभावात्। तथाच—खण्डो मुण्डः पूर्णशृङ्गः" इत्यादौ विशेषणभेदेन विशेष्यभेदेऽपि न विरोधः। यदि सामानाधिकरण्यावगतैक्यविरोधाद् विशेषणांशत्यागः, तर्हि प्रातिपदिकाभिहितविशेषणान्वयविरोधाद् ऐक्यस्यैव त्यागो वरीयान्। पदार्थ-संसर्गयोस्संसर्गस्योपसर्जनत्वेन "गुणे त्वन्याय्यकल्पने"ति न्यायानुसारित्वात् तस्य। वस्तुतस्तु पूर्वोक्तविधया सत्यात्वादिविशेषणत्वस्य विशेष्यैक्यप्रतीत्यविरोधित्वाद् व्यर्थोऽयं विशेषणान्वयपरित्यागः, अयुक्तश्च; अन्यथाऽनुपपत्त्यभावात्। विशेषणान्वयपरित्यागो हि विशेष्यमात्राभिधानेन भवति, तच्च लक्षणयैव, इति लक्षणापत्तेश्च। एतेन—तात्पर्यानुपपत्त्या विशेष्यमात्रस्य शाब्दबोधेऽन्वयाद् विशेष्यमात्रप्रतिपादने लक्षणेति मतमपि—परास्तम्; विशिष्टाभिधानस्वारसस्य शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यहानेरवर्जनीयत्वात्, सर्वपदलाक्षणिकत्वापत्तेश्च। न हि सर्वपदलाक्षणिकत्वं कुत्रापि दृष्टचरम्। लक्षणा हि मुख्यार्थत्वे प्रमाणान्तरविरोधात् स्वीक्रियते, प्रकृते तु विरोधाभावाद् न सा युक्ता। एतेन—सत्यादिवाक्यम्, अखण्डार्थम्, समानाधिकरणवाक्यत्वादित्यनुमानमपि—परास्तम्; वाक्यमखण्डार्थमितिपदयोरर्थभेदसत्त्वे प्रतिज्ञावाक्य एव हेतोरनैकान्त्यम्, न चेत्, अखण्डार्थत्वं प्रतिज्ञातमेव न स्यात्। दृष्टान्तस्य साध्यवैकल्यमवर्जनीयम्, प्रकृतिप्रत्ययात्मकपदपुञ्जत्वाद् वाक्यानाम्। तस्मात् सत्यादिवाक्यं सत्यत्वादिविशिष्टब्रह्मपरमेव युक्तम्, इति निर्विशेषवादोऽयम्—"सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यस्यापि विरुद्ध इति श्रीभाष्यानुयायिनो मन्यन्ते ॥

अयमेतेषामशयः—कारणतयोलक्षितस्याद्वितीयस्य ब्रह्मण इदं लक्षणम्—"सत्यं ज्ञानमनन्तं ब्रह्मे" त्युभयसम्मतमिदम्। अद्वितीयत्वं च कारण ईक्षेतृत्वाद्यन्यथानुपपत्त्याऽधिष्ठात्रन्तरशून्यत्वेन विचित्रशक्तियोगेन चैव युक्तम्; नतु सर्वात्मना निर्गुणत्वादिना। उपादानत्वे ब्रह्मणो बोधिते निमित्तान्तरमेव बुद्धिस्थं भवति, इति निमित्तान्तरशून्यत्वमेवात्र प्राप्तकालम्, योग्यं च, नतु सामान्यतो निर्गुणत्वम्; उपादानत्वस्यापि निषेधापत्त्या कारणतयोपलक्षितत्वमेव ब्रह्मणो न स्यात्,

इति कारणतयोपलक्षितस्य स्वरूपलक्षणबोधकतया विवक्षितम्—"सत्यं ज्ञानमि"ति वाक्यमपि व्यर्थं स्यात्। तथाच स्वसार्थक्यार्थमपि—"सत्यं ज्ञानमि"ति वाक्यं सत्यत्वादिविशिष्टब्रह्मनिरूपणपरम्, इति निर्विशेषवादोऽयं "सत्यं ज्ञानमि"ति वाक्यस्यापि विरुद्धः—इति॥

अद्वैतिनस्तु मन्यन्ते—"सत्यं ज्ञानमनन्तमि"ति लक्षणवाक्यं निर्विशेषपरमेव, नतु सूक्ष्मचिदचिद्विशिष्टकारणस्वरूपनिरूपणपरम्। "ब्रह्मविदाप्नोति परमि"तिं निर्दिष्टब्रह्मणो ब्रह्मवल्ल्यां केनापि वाक्येन चिदचिद्विशिष्टताया अप्रतिपादनात्, चिदचिद्विशिष्टब्रह्मस्वरूपे ज्ञेयतया विवक्षितेऽसत्याज्ञानत्वान्तवत्त्वादिशङ्काया अनुदयेन—सत्यत्वादिविशिष्टतया तल्लक्षणस्याप्रयोजनत्वात्, विशेषणभेदेन विशेष्यभेदस्य 'खण्डो मुण्डः पूर्णशृङ्गो गौरि'त्यादौ दर्शनेनात्रापि ब्रह्मभेदापत्त्या—"एकमेवाद्वितीयमि"ति श्रुतिविरोधापत्त्या च सत्यत्वादिविशिष्टैकार्थबोधकत्वेन सामानाधिकरण्यानिर्वाहाच्च। यथाहि खण्डत्वं पूर्णशृङ्गत्वं च नियमेन भिन्नाश्रयतया दृश्यते, एवमेव सत्यत्व-ज्ञानत्वानान्दानन्तत्वादयोऽपि भिन्नाश्रया एव दृश्यन्ते। लोके हि ज्ञानमन्तवदेव दृश्यते; नानन्तम्। पदार्थबोधमात्रेण वाक्यार्थबोधं विना निराकाङ्क्षत्वाद् अत एव पदार्थयोरेकवाक्यतया पदैकवाक्यता, इति वाक्यार्थ ऐक्यं न परित्यक्तुं योग्यम्, किन्तु विशेषणांश एव, यथा हि ज्ञानत्वानन्तत्वयोर्भिन्नाश्रयत्वनियमः, एवमानन्दत्वानन्तत्वयोरपि। एतेन—सत्यत्व-ज्ञानत्वयोरपि व्याख्यातम्। 'यथा हि 'देवदत्तो युवा श्यामः' इति सामानाधिकरण्यव्यवहारोऽबाधितो दृश्यते, नतु तथा सत्यत्वादिविशिष्टसामानाधिकरण्यव्यवहारः कुत्रापि दृश्यते; श्रुतिप्रामाण्याद्, निर्णये तु ज्ञानत्वानन्तत्वयोर्भिन्नाश्रयत्वनियमः परित्यक्तव्यो भवति, अथवा विशेषणांशान्वयः परित्यक्तव्यो भवति। न ह्यन्यथै-

कार्थबोधकत्वेन सामानाधिकरण्यनिर्वाहः संभवति, इत्यगत्या ज्ञानादिपदेन ज्ञानत्वादिविशेषणत्यागेन विशेष्यस्वरूपमात्रविवक्षायां कारणस्य सच्चिदानन्दरूपत्वं प्रतिपादितं भवति, इत्येकमेवाद्वितीयमित्यादिकारणवाक्यलक्षितं सत्वादिधर्मत्यागेन सच्चिदानन्दबोध्यं निर्विशेषस्वरूपमेवेति फलति, वाक्ये हि वाक्यार्थः प्रधानम्, पदार्था अप्रधानम्। ऐक्यं हि वाक्यार्थः समानविभक्तिनिर्देशस्थले सर्वसंप्रतिपन्नम्। तच्चैक्यमर्थस्यैवति च। इयान् विशेषः—केचन मन्यन्ते विशिष्टार्थैक्यम्, अन्ये तु विशेष्यस्वरूपमात्रैक्यमिति। सति चैवमुभयाभीप्सितैक्यनिर्वाहः पूर्वोक्तविधया विशेषणांशत्यागेनैव संभवति, नान्यथा, इति सत्यत्वाद्युपलक्षितनिर्विशेषस्वरूपचैतन्यबोधनार्थमेव सत्यादिवाक्यम्। विशेष्यमात्रस्य वाक्यार्थेऽन्वयस्तु विशेष्यस्यैव लक्षणया तात्पर्यानुसारेणोपस्थापनेन वा, शक्त्या विशिष्टोपस्थापनेऽपि तात्पर्यानुसारेण शाब्दबोधे विशेष्यमात्रस्यान्वयस्वीकारेण वा भवितुमर्हति। 'घटोऽनित्यः' इत्यादौ घटत्वरूपविशेषणस्यानित्यत्वेनान्वयस्य बाधितत्वाद् विशेष्यमात्रस्यानित्यत्वेनान्वयेऽपि विशिष्टवाचकस्य शब्दस्य विशेष्यमात्रपरत्वे न स्वारस्यहानिः, एवमत्रापि भवितुमर्हत्येव। इयान् विशेषः—यत् पदेनोपस्थापितस्य विशिष्टस्य कुत्रचन विशेष्यमात्रे पर्यवसानं योग्यतानुसारेण, कुत्रचन तात्पर्यानुसारेण। विशेष्यमात्रपर्यवसानं तु समानमेव। लक्षणया विशेष्यमात्रोपस्थापनपक्षोऽपि साधीयानेव। लक्षणा च क्वचित् पदद्वये क्वचिद् बहुषु पदेष्विति बहुशो दृष्टम्। यथा 'गङ्गायां घोषः', 'गम्भीरायां नद्यां घोषः'—"सोऽरोदीदि"त्यार्थवादेषु। तत्र 'गम्भीरायां नद्याम्' इत्यत्र पदयोः सामानाधिकरण्यं कथं श्रीभाष्यकारैस्तदनुयायिभिर्वा मन्यत इति वक्तव्यम्। यदि लक्ष्यतावच्छेदकद्वयवत्त्वेन, तर्हि बाधः; तत्र लक्ष्यार्थभेदाभवात्, यदि लक्ष्यार्थभेदाभावेऽ-

पि शक्यतावच्छेदकभेदमात्रेण, तर्हि 'सत्यं ज्ञानमि' त्यत्रापि शक्यतावच्छेदकभेदः समान एव। तथाच "सत्यं ज्ञानमि" त्यत्र प्रवृत्तिनिमित्तपदबोध्यशक्यतावच्छेदकभेदेनैव भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वरूपसामानाधिकरण्यनिर्वाहात् पूर्वोक्तविधया सत्यत्वादिविशेषणानां विवक्षायां विशेषणभेदेनार्थभेदापत्त्या सामानाधिकरण्यनिर्वाहासंभवाच्च विशेषणांशत्यागेन सच्चिदानन्दनिर्विशेषपरमात्मस्वरूपबोधकत्वमेव सत्यादिवाक्यानां स्वीकतव्यम् ॥

सर्वेषां स्वरूपचैतन्यपरत्वे पदत्रयवैयर्थ्योपपत्तिस्तु व्यावर्त्यभेदाङ्गीकाराद् नावसरति। तद्यथा—सत्यपदेनासत्यव्यावृत्तिः, ज्ञानपदेन जडव्यावृत्तिः, अनन्तपदेन च परिच्छिन्नव्यावृत्तिः। व्यावृत्तिश्चेयं शौक्ल्यदिकं यथा कार्ष्ण्यादिव्यावृत्तिः, तथा ब्रह्मस्वरूपमेव। शुक्तित्वज्ञानस्य रजताध्यासविरोधित्वात् शुक्तित्वं रजतव्यावर्तकं रजताध्यासाधिष्ठानधर्म इति युक्तम्, एवं सर्वप्रपञ्चाधिष्ठाने ब्रह्मण्यपि सर्वप्रपञ्चव्यावर्तकस्य कस्यचन, ज्ञानात् सर्वप्रपञ्चाध्यासनिवृत्तिर्यदि स्यात्, तर्हि तदङ्गीकारो युक्त एव। अखण्डब्रह्माकारवृत्त्या खलु समूलप्रपञ्चाध्यासो निवर्तते। नच तत्र रजतनिवृत्त्यनन्तरमप्यबाधिततया शुक्तित्वमिव कश्चन धर्मः प्रमाणतः सिद्ध्यति। यतः स्वरूपमेव सर्वव्यावर्तकत्वाद् न व्यावर्तकान्तरमपेक्षते। शौक्ल्यज्ञाने सति कार्ष्ण्याध्यास इवाखण्डब्रह्माकारवृत्त्यनन्तरं ब्रह्मण्यपरप्रपञ्चाध्यासोऽपि बाधित एव, इति कथं शौक्ल्यादिवैषम्यम्? नहि अखण्डब्रह्मापरोक्षसाक्षात्कारानन्तरम्—तदसत्यं जडमात्रवदिति कस्यापि ज्ञानं भवितुमर्हति। तथाच कारणवाक्यैरसत्त्वाचेतनत्वयोरज्ञाननिरासे सत्त्वज्ञानत्वादिधर्मवत्त्वशङ्कावारणार्थं तदंशस्यापि त्यागेन स्वरूपमात्रनिरूपणमेवात्र क्रियते। यतः कारणवाक्यानामद्वितीयब्रह्मबोधन एव तात्पर्यम्, नतु सद्वितीयब्रह्मबोधन इति

बहुशो निरूपितम्। अत एवाद्वितीयतया कारणवाक्योपलक्षितस्यैवेदं लक्षणं भवति। यथाचाद्वितीयवाक्यं वाचारम्भणश्रुत्याद्यविरोधार्थं द्वितीयसामान्यपरमेव स्वीकर्तव्यम्, तथा पूर्वमेव सूचितम्, इति कारणवाक्यतोऽद्वितीयतयोपलक्षतस्यैव सत्यत्व-ज्ञानत्वादिद्वितीयवत्त्वे बोधिते तत्स्वरूपलक्षणत्वमेव न स्यात्, इति "सत्यं ज्ञानमनन्तं ब्रह्मे" तिवाक्यप्रामाण्यं निर्विशेषब्रह्मवाद एव, न सविशेषब्रह्मवादे। तदेवं विरोधिव्यावृत्तिरेव सत्यादिपदार्थ इति मतेन सामानाधिकरण्यमुपपादितम्॥

व्यावृत्त्यवच्छिन्नं स्वरूपमेव सत्यादिपदार्थ इत्यपि नायुक्तम्, यतस्तत्र पक्षे व्यावृत्तेरुपलक्षणत्वमेव स्वीक्रियते। तथाच कारणवाक्यैरवगतसत्यज्ञानत्वोपलक्षितं ब्रह्मैव सत्यादिवाक्यार्थः। उपलक्षणेनाविवक्षितेनापि सामानाधिकरण्यं 'काकवद्देवदत्तगृहम्' इत्यादौ दृष्टम्। सत्यत्व-ज्ञानत्वादिकं च स्वविरोधिव्यावृत्तिरेव। तथाच कारणवाक्यावगतसत्त्वादिव्यावृत्तिरप्यद्वितीयवाक्येन बाध्यमानत्वात् परमार्थतो ब्रह्मणि नास्तीति बोधनेनाद्वितीयवाक्यार्थ एव पुनरपि विशदीक्रियते सत्यादिवाक्येन। तत्र चैकव्यावृत्तिमात्रस्योपलक्षणतया प्रतिपादनेन न ज्ञानत्वादीनामप्युपलक्षणत्वं बोधितं स्यात्, इति ज्ञानत्वादीनामपि विशेषणत्वव्यावर्तनेनोपलक्षणविधया ब्रह्मलक्षणत्वं वक्तव्यम्, इति नान्यतरेणैव निर्वाहः; अन्यथा कारणवाक्यावगतासत्त्वाचित्त्वादीनामपि तात्पर्यविषयत्वात् तेन धर्मेण सद्वितीयत्वमिति शङ्का न वारिता स्यात्। तेषां तात्पर्याविषयत्वं चासत्कारणवादनिरासेन सत्कारणवादव्यवस्थापनाद् ईक्षितृत्वादिना प्रधानादिकारणवादनिरासाच्चावगम्यते। तत्र प्रधानकारणवादनिरासस्यासत्कारणवादनिरासस्य च कारणस्य चिद्रूपतासद्रूपतादावपि सम्भवात् 'एकमेवे'त्यादीनां सत्त्व-चित्त्वादिनिरासतात्पर्येऽप्यदोषाद् अद्वितीयवाक्यस्य लेशतोऽपि सङ्कोच-

मन्तरा कारणस्वरूपमवश्यमेव लक्षणीयम्, इति तदर्थमेव सत्यादिवाक्यम्; अन्यथा कारणवाक्यैरेव—"सदेव" 'ऐक्षत' इत्यादिना सत्त्व-चित्त्वादीनामपि बोधनाद् व्यर्थमेव सत्यादिवाक्येन पुनर्लक्षणान्तरसमर्पणम्। तथाच द्वितीयवाक्यस्य निःसङ्कोचं प्रवृत्तिः, सत्यादिवाक्यस्य सार्थक्यम्, "सत्यं ज्ञानमनन्तमि"ति सामानाधिकरण्यं च निर्विशेषब्रह्मप्रामाणिकतावाद एव स्वरसम्, नतु सविशेषब्रह्मप्रामाणिकतावादे। एतेन—निर्गुणवाक्यान्यपि—व्याख्यातानि ॥

इदमत्र श्रीभाष्यानुयायिनो मन्यन्ते—श्रुतिषु कानिचन सगुणवाक्यानि, कानिचन निर्गुणवाक्यानि च दृश्यन्ते। तत्रोभयोर्विरोधेऽन्यतरस्याप्रामाण्यम्, अविरोधे तु नान्यतरस्य मिथ्यात्वाश्रयणशङ्केति स्थितौ सगुण-निर्गुणवाक्ययोर्विरोधाभावाद् उभयप्रामाण्यमपि स्वीकर्तव्यमेव। यदि तु अद्वैतिनां दृष्ट्योभयोर्विरोधादन्यतरस्याप्रामाण्यमवश्यं स्वीकर्तव्यम्, तर्हि तु सगुणवाक्यानां नाप्रामाण्यकल्पनं युक्तम्। अद्वैतिनो हि निर्गुणवाक्यानामेव प्रामाण्यम्, सगुणवाक्यानां तु निर्गुणवाक्यैरपच्छेदन्यायेन बाध एवेति मन्यमानाः अपच्छेदन्यायवैषम्यं प्रकृते विषये न पश्यन्ति ॥

तथाहि—अपच्छेदन्यायो हि यत्र न नियमेन विरोधः, नवा नियमेन पौर्वापर्यम्, तत्रैव प्रवर्तते। न केवलं नोद्गातृ-प्रतिहर्त्रपच्छेदयोर्नियमो वर्तते, किन्तु न पौर्वापर्यमपि नियतम्। न हि सर्वस्वदक्षिणाकत्वादक्षिणाकत्वयोर्विरोधनियमः, उभयोरप्यपच्छेदे तस्य क्रमभावित्वेऽप्युद्गात्रपच्छेदः पूर्वभावी, इतरस्तु चरमभावीति वा, विपर्ययेणेति वा नियमोऽपि नास्ति। अतोऽपच्छेदन्यायविषयः प्रयोगावधिकविरोधः, सगुण-निर्गुणवाक्ययोस्त्वर्थस्वरूपकृतो विरोधः, विधि-निषेधरूपतया नियतपौर्वापर्यं च। अतो विरोधाभ्युपगमेऽप्यनियतपौर्वापर्यविषयोऽपच्छेदन्यायो नात्र प्रवर्तते, किन्तु—"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" इति सूत्रसिद्धविरोधाधिकरणन्याय एव ॥

अत्र हि "औदुम्बरी सर्वा वेष्टितव्ये"ति स्मृति; "औदुम्बरीं स्पृष्ट्वोद्गायति" इति च श्रुतिः, तत्र श्रुतिः प्रथमं प्रमितिं जनयति, स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः, तत्र पौर्वापर्यं नियतम्; औदुम्बरीस्पर्शन-सर्ववेष्टनयोर्विरोधश्च नियतः। अतः पूर्वमेव प्रमितौ जातायां तद्विरुद्धोऽर्थो बाधितः स्यात्। अतो विलम्बितप्रवृत्तेः शीघ्रप्रवृत्तिर्बलीयासीति न्यायेन पूर्वस्याः श्रुतेर्बलीयस्त्वम्, इत्युत्तरशास्त्रानुदय एव। यद्यपि स्मृतिरधीयते; तथापि प्रमित्यनुदय एवात्र बाधो विवक्षितः, नतु शाब्दानुदयः; "आदित्यो यूपः" इतिवत्। यद्यपि तत्र स्मृतित्व-श्रुतित्वयोरेव बाध्य-बाधकभावप्रयोजकत्वम्, अत्र श्रुतित्वस्यैव बाधकभावप्रयोजकत्वमित्यस्ति वैषम्यम्; तथापि श्रुतित्व - स्मृतित्वयोः पौर्वापर्यहेतुत्वात् तेन सिद्धं पौर्वापर्यमेव नियतं बाध्य-बाधकभावप्रयोजकतया तत्र विवक्ष्यते, इति न्यायसाम्यात् सगुणवाक्यबलीयस्त्वमेव स्वीकर्तव्यम्॥

अथवा मास्तु श्रुतिद्वयविषये विरोधाधिकरणन्यायः, उपक्रमाधिकरणन्यायेनैव सगुणवाक्यप्राबल्यमूरीक्रियताम्; विरोधपौर्वापर्यनियमात्। तत्र हि "प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत स एवं वारुणं चतुष्कपालमपश्यत् तन्निरवपत्।" इत्युपक्रमस्योपसंहारे श्रूयमाणे "यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्"इति विधिवाक्य उपक्रमश्रुताया अश्वदातुरिष्टेर्विरोधेन प्रतिग्रहीतुरिष्टिः प्रतीयते। अस्मिंश्च विरोधे—गुणत्वादनुवादत्वादर्थवादस्य लक्षणा। विध्युद्देशो जघन्योऽपि स्वार्थहानिं न वाञ्छति॥ इति पूर्वपक्षे प्राप्ते गुणभूतस्याप्यर्थवादस्यासञ्जातविरोधित्वेन प्रबलत्वाद् विध्युद्देशस्य प्राधान्येऽप्यलब्धात्मकत्वात् प्रधानभूतो विध्युद्देशः स्वयमलब्धात्मा लब्धात्मानमर्थवादं प्रक्रमस्थं बाधितुमसमर्थः स्वयमेव तदानुगुण्यं भजते, इति "प्रतिगृह्णीयादि"त्यस्य णिजर्थमन्तर्भाव्य प्रतिग्राहयेदित्येवमर्थकल्पनया दातुरेवेष्टिरिति सिद्धान्तितम्। ततश्च सगुणवाक्यस्य भेदग्राहिप्रत्यक्षस्य वा प्राक्प्रवृत्तत्वेनोपक्रमाधिकरणन्यायोऽत्र प्रवर्तते; विरोधपौर्वापर्यनियमात्। अतः सगुणवाक्यविरुद्धत्वाद् निर्गुणशास्त्रानुदय एव, इति निर्गुणवाक्याप्रामाण्यमेवान्यतराप्रमाण्ये स्यात्, नतु सगुणवाक्याप्रमाण्यम्। 'इयं शुक्तिरि'ति ज्ञानस्य तु "इदं रजतमि"ति ज्ञानोत्पत्तिप्रतिबन्धकत्वं न संभवति,

अप्रामाण्यशङ्का तु अप्रामाण्यशङ्कासामग्र्याः फलबलात्उत्तेजकत्वकल्पनादुपपद्यते। प्रकृते तु न सगुणवाक्यानामप्रामाण्यशङ्केति न नेदं रजतमिति बाधकज्ञानसाम्यं निगुणवाक्यानाम्, येन सगुणवाक्यानामेवाप्रामाण्यं स्यात् ॥

वस्तुतस्तु—प्रत्यक्षप्रमाणजन्यं ज्ञानं योग्यतापरामर्शादिनिरपेक्षत्वाद् उत्पतदेव स्वविरुद्धं प्रथमं ज्ञानं बाधते, इति युक्तमेव द्वितीयस्यापि "नेदं रजतमिति वा 'इयं शुक्तिरि"ति वा ज्ञानस्येदं रजतमिति ज्ञानबाधकत्वम्, नतु वाक्यप्रमाणविषय एवं संभवति; स्वयमुत्पन्नयोस्तयोः प्रामाण्यपरीक्षानन्तरं यस्य प्रामाण्यं प्रथमतो निर्धार्यते योग्यतादिसमालोचनेन, तद्बाधकम्, इतरत्तु बाध्यम्, इति सगुणवाक्यानां प्रथमतो योग्यतादिना प्रामाण्यनिर्णये सति तदविरोधेन निर्गुणवाक्यप्रवृत्तिर्वर्णनीया, इति निर्गुणवाक्यबाध एव युक्तः। अतो नियतपौर्वापर्यविषयविरोधाधिकरणन्याय एवात्र प्रवर्तते, नापच्छेदन्यायः ॥

परमार्थतस्तु—सत्यकामत्वादीनामुपाध्यनुक्तिपूर्वकं श्रुत्युक्तानां स्वाभाविकत्वेन सर्वशाखाप्रत्ययन्यायेनापरेषामपि तादृशत्वस्यैव स्वीकर्तव्यत्वेन सामान्यविशेषभावेन सगुण-निर्गुणवाक्यानां नयनसंभवेन चाविरोधाद् नापच्छेदन्यायस्यात्र प्रवृत्तिशङ्काऽपि। एतेन—"यः सर्वज्ञः सर्ववित्" इत्युपासनारहितेषु वाक्येषु प्रतिपन्नस्य सर्वज्ञत्वादेः प्रमाणान्तराप्राप्तत्वेनानुवादविषयत्वासंभावेन न तद्वाक्यप्राप्तसर्वज्ञत्वादीनां निर्गुणवाक्येन निषेधसंभवः, ॥

अथवाऽध्यात्मशास्त्रेषु सर्वत्र—"नहि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि। वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः" "सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।" "निर्गुणस्याप्रमेयस्य" "गुणा गुणेषु वर्तन्ते इति मत्वा न शोचति" "कारणं गुणसङ्गोऽस्य" "नान्यं गुणेभ्यः कर्तारम्" "निर्गुणं गुणभोक्तृ च" "दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥" "विना हेयैर्गुणादिभिः" "गुणादिदोषैश्च मुने व्यतीतः" "गुणकलापस्य सदातनस्य नेता" इत्यादिषु गुणशब्दस्य सत्त्वादिगुणेष्वेव प्रसिद्धत्वाद् सत्त्वादिगुणराहित्यमेव निर्गुणवाक्यानि बोधयन्ति, नतु गुणसामान्याभावमद्वितीयत्वं वा। एतेन—अद्वितीयवाक्यमपि—व्याख्यातम्; तस्य सामान्यनिषेधस्य "न तस्य

कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते” इति श्रुत्यन्तरेणोपसंहारेण छाग-पशुन्यायेनेश्वरान्तरराहित्यबोधन एव तात्पर्यस्योरीकर्तव्यत्वाद् । यथाहि—“अग्नीषोमीयं पशुमालभेत” इति विधौ सामान्यतः श्रूयमाणोऽपि पशुः “छागस्य वपाया मेदसोऽनुब्रूही”ति मन्त्रवर्णात् छागरूपपशुविशेषे पर्यवस्यति, एवमत्रापीति छाग-पशुन्यायप्रवृत्तिप्रकारः । “गामानये”त्यादिलौकिकवाक्येष्वपि सामान्यवाचिनो गोशब्दस्य विशेषपर्यवसानं दृश्यत एव । तथाच—निर्गुणवाक्ये गुणशब्दस्य धर्मसामान्यवाचित्वेऽपि “अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सः” इति निषेध्यविशेषगुण एव पर्यवसानात् कथमपि निर्गुणवाक्यमपि न निर्विशेषतासिद्धान्ते प्रमाणं भवितुमर्हति—इति ॥

अद्वैतिनोऽपि नात्र विप्रतिपद्यन्ते—यत्सगुण-निर्गुणवाक्यानां सर्वेषां प्रामाण्यमिति । व्यावहारिकप्रामाण्यं हि सगुणवाक्यानामपि ते स्वीकुर्वन्त्येव । विषयस्य त्रिकालाबाध्यत्वमादाय पारमार्थिकप्रामाण्यमेव हि ते न स्वीकुर्वन्ति । सगुणवाक्यानि हि सगुणत्वं ब्रह्मणो बोधयन्ति, नतु तेषां पारमार्थिकत्वमपि । स्वतः प्रामाण्येनाबाधितत्वं प्रतीयमानमपि यावद्बाधमेव स्वीकर्तव्यम्, नतु बाधानन्तरमपि । नहि घटवान् देवदत्तो मासानन्तरं देवदत्तो घटाभाववानिति वाक्ययोर्विरोधो बाध्य-बाधकभावो वा । तत्त्वसाक्षात्कारानन्तरं हि 'नास्ति नासीत् न भविष्यतीति प्रतीतिः, न ततः पूर्वम्, तदानीं 'नासीदि'त्यस्यानन्वयापत्तेः । तथाच तत्त्वसाक्षात्कारिपुरुषदृष्ट्यैव सगुणवाक्यानां भेदप्रत्यक्षादीनां वाऽप्रामाण्यम्, नतु तद्रहितपुरुषदृष्ट्यापि, इति प्रामाण्याप्रामाण्ये नावस्थाविशेषमात्रनिबन्धने, किन्तु पुरुषभेदप्रयुक्ते अपि । किंच व्यवहारदशायां गुणानां सगुणनिष्ठतया प्रतीतिः, साक्षात्कारदशायां तु शुद्धचैतन्यसम्बन्धितया तदभावस्य प्रतीतिः, इति देशभेदादपि सगुण-निर्गुणवाक्यानामुभयेषामविरोधात् तत्तद्देशकालपुरुषदृष्ट्या सर्वप्रामाण्यमविरुद्धमेव । नहि काचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिकजन-

स्याज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण जायमानं द्विचन्द्रज्ञानं केनापि कारणेनैकस्य दैववशादागतस्य तिमिररहितस्य पुरुषस्योपदेशेन परीक्षादिना च स्वस्यापि तिमिरदोषं जानतः बाधकप्रत्ययानन्तरं द्विचन्द्रज्ञानबाधमात्रेणापरेषां सर्वेषां द्विचन्द्रव्यवहारेऽप्रामाणिकत्वबुद्धिरुदेति, इति तत्र ज्ञातस्वतिमिरदोषाणां द्विचन्द्रव्यवहार इवाज्ञातस्वाविद्यादोषाणामेव प्रपञ्चसत्यत्वव्यवहारः, इति भ्रान्ताभ्रान्तविवेकः स्वस्वानुभवैकमात्रनिबन्धनः, इति को वा विरोधः सगुण-निर्गुणवाक्ययोः ?

अयं भावः—शुद्धचैतन्यमेवाविद्यया तिरोहितं तत्तज्जीवादिभावं प्राप्य तत्तदुपाधिसम्बन्धाद् ब्रह्मणोऽपि भिन्नतया प्रतीयते, इति वस्तुगत्या ब्रह्मधर्माणामपि कल्पितसगुणजीवेश्वरादिधर्मतया व्यवहारः, इति यावद्व्यवहरणं ब्रह्मण्यारोपिता अविद्याद्युपहितब्रह्माधिष्ठानकजीवेश्वरादिधर्मतया भासमानास्सर्व एव गुणा निर्गुणवाक्यश्रवणसमनन्तरं न जीवधर्माः, न वेश्वरधर्मा इति ज्ञायन्ते । ततश्च ब्रह्मधर्माणामेव ब्रह्मण्यभावस्यापि बोधनाद् मिथ्यात्वसिद्धिः । इयमनेकजीववादानुसारिणी व्यवस्था ॥

एकजीववादे त्वेकस्य मुख्यस्य जीवस्य मुक्तौ सर्वमुक्तेरेव सिद्धान्तात् मुक्तस्य तस्य ब्रह्मसाक्षात्कारानन्तरं सर्वबाधो न दोषाय । तथाच सत्तात्रैविध्यवादेनैकसत्तावादेन वा सगुण-निर्गुणवाक्यायोर्न विरोधलेशोऽपि । एकसत्तावादे हि ब्रह्मस्वरूपं विहाय कस्यापि न सद्रूपत्वम्, किन्तु सर्वस्य ब्रह्मव्यतिरिक्तस्य सत्तादात्म्यमेवेति स्वीकारात् सगुणवाक्यानां गुणस्वाभाविकत्वबोधकत्वं बाधितम् । एतेन—भेदप्रत्यक्षादयोऽपि—व्याख्याताः । तथाच निर्गुणादिवाक्येषु गुणपदस्य विना सङ्कोचमविरोधोऽद्वैतिनाम्, तत्सङ्कोचेनाविरोधसम्पादनमिति मुख्यार्थताहानिः श्रीभाष्यमते । व्यावहारिकत्व-पारमार्थिकत्वादिकं फलबलसिद्धस्वरूपविशेषं भ्रान्ता-

भ्रान्तपुरुषविशेषमात्रानुभवगम्यम्, इति न व्यावहारिकत्वमेव प्रामाण्यशरीरघटकं मन्यते। अयं निष्कर्षः—अबाधितविषयकत्वमेव प्रामाण्यम्, तच्च व्यवहारकालावच्छेदेनैव प्रमाणाप्रमाणव्यवहाराद् व्यवहारकालात्यये तद्व्यवहारस्यैवाभावात् स्वरूपकथनार्थं व्यवहारकालाबाधितेति विशेषणेन परिष्क्रियते। शुद्धचैतन्यं तु स्वतः प्रमा न प्रमाणजन्यम्, इति जन्यप्रमालक्षणेऽत्र व्यवहारकालप्रवेशः स्पष्टप्रतिपत्त्यर्थमेव, नतु व्यावर्तनार्थम्। तथाच निर्गुणवाक्यस्य यादृशं प्रामाण्यम्, तादृशमेव सगुणवाक्यस्यापि प्रामाण्यं स्वीक्रियते, नतु शुक्तिरजतादिज्ञानवदत्यन्ताप्रामाण्यं सगुणवाक्यानामद्वैतिनोऽपि मन्यन्ते। सति चैवम्—यावदुपासनव्यवहारं यावद्ब्रह्मकारणत्वव्यवहारं च ब्रह्मणः सगुणत्वम्, साक्षात्कारानन्तरं तु नोपास्यत्वम्, न वा कारणत्वम्, तद्व्यवहारो वेत्येव फलितार्थः। इदं च प्रामाण्यं श्रीभाष्यानुयायिभिस्तेषां मुक्तिकालेऽपि प्रपञ्चसत्यत्वेन सविशेषब्रह्मसत्यत्वव्यवस्थापनार्थमेव यदि मन्यते, तर्हि तैस्साकमपि नाद्वैतिनां विरोधः; यतः सोऽप्यद्वैतिनां व्यवहारकाल एव। यदि त्वद्वितीयब्रह्मशशशृङ्गायमाणत्वव्यवस्थापनार्थम्, तर्हि किमिति निर्गुणवाक्यानामपि निःसङ्कोचं प्रवृत्तानामन्यथानयनेन निःस्वरूपत्वं सम्पाद्यते? किं वा प्रयोजनं श्रीभाष्य-तदनुयायिमते सगुणवाक्यशेष एव निर्गुणवाक्याम्नानस्य स्वतन्त्रतया वा प्रकरणान्तरे; यतश्चिदचिच्छरीरके परमात्मनि विशिष्य निर्दुष्टतया स्पष्टं प्रतिप्रकरणं प्रतिपादिते दोषगन्धस्याप्यनवसरे च दोषनिषेधस्याप्रसक्तप्रतिषेधत्वमापतति। यद्यद्वैतमतरीत्या भ्रान्तिप्रसक्तानां तेषां वारणार्थं निर्गुणवाक्यम्, तर्हि बाधितम्। भ्रमो हि विशेषरूपेणाज्ञाते वस्तुनि भवति, नतु तद्रूपेण ज्ञातेऽपि; ब्रह्मशब्दादिमहिम्ना तत्तद्वाक्यविशेषैश्च विशिष्टतत्तद्दोषविशेषरहिततया चावगते दोषभ्रमो ह्यनवसर एव। तथाच नामान्तरेण निर्विशेषब्रह्मशशशृङ्गाय-

माणत्वव्यवस्थापनार्थोऽयं प्रयत्नो निर्गुणवाक्यानामप्रामाण्यव्यवस्थापनार्थ एव। छाग-पशुन्यायो हि भावरूपसामान्य-विशेषविषयः, न त्वभावरूपसामान्यविषयः। अन्यथा—"अग्नीषोमीयं पशुमालभेते"त्यस्य छाग उपसंहारवत् "न हिंस्यात् सर्वा भूतानी"त्यस्य "न ब्राह्मणं हन्यात्"इत्यनेनोपसंहरः, "न ब्राह्मणं हन्यादि"त्यस्य च "नात्रेयं हन्यादि"त्यनेन वोपसंहारः समापद्येत। तथाचापहतपाप्मत्वादिविशेषनिषेधैर्न निर्गुणवाक्यानामुपसंहारः॥

वस्तुतस्तु—अपहतपाप्मत्वादिकमुपास्यगुणतया दहरविद्यादावाम्नायते, निरञ्जनत्वं तु श्वेताश्वतरोपनिषदादौ ज्ञेयस्यावगम्यते, इत्येकप्रधानेनासम्बन्धात् सामान्यगुणनिषेधस्य विशेषगुणनिषेधस्य च, नात्र छाग-पशुन्यायस्यावसरलेशोऽपि। छाग-पशुन्याये हि पशुछागयोरेकप्रधानसाधनत्वं न कस्यापि विप्रतिपन्नम्। किञ्च छागपशुन्याये विशेषो व्यवस्थाप्यमान एक एव भवति, नतु बहवः, अत्र तु बहवो विशेषाभावा व्यवस्थाप्यतया मन्यन्ते, इति छागपशुन्यायविषयतायां निर्गुणवाक्यानाम्, न केवलं न तन्न्यायानुगण्यम्, किन्तु विशोकत्वमात्रं ब्रह्मणः स्यात्, नापहतपाप्मत्वादिकम्, अथवाऽपहतपाप्मत्वमात्रं स्यात्, नाग्राह्यत्वादिकमिति महती विपत्तिरापद्येत, इति हेयगुणाभावपरतया ज्ञेयप्रकरणस्थनिर्गुणवाक्यानां नयनं न न्यायानुगुणम्। अतोऽगत्या निर्गुण-सगुणवाक्ययोरन्यतराप्रामाण्यकल्पनमेव स्वीकर्तव्यम्, न त्वविरोधेन नयनम्। तत्र च सगुणवाक्यप्रामाण्येन निर्गुणवाक्याप्रामाण्यपक्ष एव तैर्मन्यत इति युक्तमुक्तम्—निर्गुणवाक्याप्रामाण्यव्यवस्थापनार्थ एवायं प्रयत्नः श्रीभाष्यकारादीनाम्—इति॥

वयं तु पश्यामः—यद्यन्यतराप्रामाण्यं समर्थनीयं स्यात्, तर्हि सगुणवाक्याप्रामाण्यमेव समापतेत्, नतु निर्गुणवाक्याप्रामाण्यम्; अपच्छेदन्यायेन निर्गुणवाक्यानामेव प्राबल्यात्।

"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति सूत्रेण विरुद्धयोः पौर्वापर्यमवोक्तन्यायप्रवृत्तौ बीजं मन्यते, नतु पौर्वापर्यानियमः, विरोधानियमो वा ॥

यत्तु—अपच्छेदन्यायो ह्यनियतविरोध-पौर्वापर्यविषयः। उद्गातृ-प्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति, तत्रापि क्रमेणापच्छेदोऽप्यनियत इति वर्णितम्, तत्र न्यायस्यानपच्छेदेऽप्रवृत्त्या युगपदपच्छेदेऽपि न्यायान्तरेण विकल्पस्य व्यवस्थापनात् "पौर्वापर्ये पूर्वदौर्बल्यमि"ति न्यायस्य क्रमेणापच्छेदमात्रविषयत्वात्, नियतपौर्वापर्यविषय एवायं न्यायः, नतु पौर्वापर्यानियमे। एतेन विरोधनियमोऽपि व्याख्यातः। अविरोधो हि एकमात्रापच्छेदेन वा भवेत्, अनपच्छेदेन वा; उभयत्रापि नायं न्यायः प्रवर्तते; पौर्वापर्य-एव ह्ययं न्यायः, स च विरुद्धयोरेवेति नियते पौर्वापर्ये नियत एव च विरोधेऽयं न्यायः प्रवर्तत इति सिद्धम् ॥

एतेन—विरोधाधिकरणन्यायस्यैवात्र प्रसङ्ग इत्यपि—परास्तम्; श्रुति-स्मृत्योर्विरोधे कस्य प्रामाण्यमिति हि तत्र चर्चा। तत्र च श्रुतित्वेन स्मृतित्वेन च विरोधो हि न भवति, किन्तु विरुद्धविषयकश्रुतित्वेन स्मृतित्वेन च। तथाच सर्ववेष्टनस्मृतिमूलश्रुत्यन्तरकल्पनं सम्भवति वा नवेति विचारे प्रत्यक्षश्रुत्यवगतार्थविरुद्धश्रुत्यन्तरासम्भवादप्रामाण्यमिति वा, अनुमानेऽपि श्रुतिनिश्चयं यावदमननुष्ठापकत्वमिति वा सिद्धान्तस्तत्राधिकरणे व्यवस्थापितः, नतु स्मृतित्व-श्रुतित्वयोः पौर्वापर्यहेतुत्वेन तत्र स्मृत्यप्रामाण्यं व्यवस्थापितम्; अन्यथा—पदार्थप्राबल्येन स्मृतिप्रबलताया व्यवस्थापनमुत्तरत्रासङ्गतं स्यात्। अतोऽर्थविरोधाविरोधयोरेव प्रामाण्याप्रामाण्यचर्चा। तत्र स्मृत्यप्रामाण्यकारणन्तु मूलश्रुत्यनुमापनासम्भव एव। अत्र च स्मृतेरुत्तरत्वं न कारणम्, स्मृत्युत्तरत्वस्य श्रुत्यनुमान आनुकूल्यात्, किन्तु श्रुतिबाधितत्वमेव तत्र

कारणम्, श्रुतिप्राबल्ये श्रुतेः स्मृत्यनपक्षत्वमेव कारणम्, नतु पूर्वत्वम्। तथाच विरोधे श्रुति-स्मृत्योः श्रुतित्वमेव प्राबल्यप्रयोजकम्, नतु पूर्वत्वम्; "प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमि"-त्युक्तेः। तथाच पूर्वत्वस्यैव प्राबल्यप्रयोजकत्वेऽपच्छेदन्यायः "पौर्वापर्ये पूर्वदौर्बल्यमि"ति सूत्रमूलो निर्विषयः स्यात्, इति विषयविवेके कर्तव्ये—"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षणां यत्र जन्म धियां भवेत्॥" इत्यपच्छेदन्यायविषयता, पूर्वापेक्षतायामुत्तरस्योपक्रमन्यायविषयत्वमिति व्यवस्थैव स्वीकर्तव्या। सति चैवं निर्गुण-सगुणवाक्ययोर्निर्गुणवाक्यप्रामाण्यं न सगुणवाक्यान्वयापेक्षम्, यथाऽर्थवादान्वयापेक्षं विधिवाक्यप्रामाण्यम्, इति सगुण-निर्गुणवाक्ययोरपच्छेदन्याय एव प्रवर्तते, नोपक्रमन्यायः; अन्यथा भ्रमस्य पूर्वस्य पाश्चात्यबाधकज्ञानबाधकत्वम्, अतिदेशवाक्यानां विकृतिगतौपदेशिकवाक्यबाधकत्वं च स्यात्। नहि सत्तयैवातिदेशवाक्यं प्रमाणम्, किन्तु योग्यताद्यपेक्षयैव, इति सत्तया ज्ञापकस्य प्रत्यक्षस्येव ज्ञायमानतया ज्ञापकस्य वाक्यस्यापि पूर्वस्य स्वविरुद्धेनोत्तरेण बाधोऽवश्यमेव स्वीकर्तव्यः; अन्यथाऽतिदेशेनोपदेशबाधापत्तेः। अयमेवन्यायः सगुण-निर्गुणवाक्यविषयेऽपि। अतिदेशोपदेशयोर्हि पौर्वापर्यनियमोऽपि वर्तते, यत्रोपदेशेनातिदेशस्य बाधः, तत्र विरोधनियमोऽप्यस्तीति—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति सूत्रे 'प्रकृतिवदि'ति दृष्टान्तस्वारस्यादपि गम्यते। प्रमाणान्तरप्राप्तोऽन्यत्र सावकाशधर्मो ह्यतिदेशविषयः, उपदेशविषयस्तु निरवकाशः। तथाचोपासनाद्यङ्गतया सावकाशानां सत्यकामत्वादीनां ज्ञानत्वसामान्येन वस्तुतन्त्रज्ञानेऽपि प्राप्तानां निर्गुणादिवाक्येन बाधात् प्रत्याम्नानाद् अर्थेऽपञ्चेव प्रतिषेधादपि वैकृतधर्मबाधदर्शनात् सत्यकामत्वादीनां

ज्ञेयब्रह्मधर्मत्वं न युक्तमिति बोधनेन 'प्रकृतिवदि'ति दृष्टान्तस्थलीय इवापच्छेदन्यायः कथं वारयितुं शक्यते ?

श्रीभाष्यकारमते तूपासनान्तरेषु प्रतीतानां ब्रह्मधर्माणां मोक्षसाधनब्रह्मज्ञानेऽपि समन्वयस्य गुणोपसंहारविधया स्वीकारात् तत्र श्रुतविशोकत्वाद्यपेक्षया नूतनो धर्मः को वा निर्गुणवाक्येनोपदिश्यते ? इति निर्गुणवाक्यवैयर्थ्यमपरिहरणीयमेव, इति सावकाश-निरवाकाशन्यायोऽपि निर्गुणवाक्यानां निर्विशेषप्राधान्य एव युज्यते। अत्र निर्गुणवाक्यपदेन गुणसामान्यनिषेधपराणि "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमि"त्यादीनि वाक्यानि निर्गुणशब्दघटितान्यपि यदि कानिचन स्युः, तर्हि तान्यपि गृह्यन्ते, इति निरञ्जनादिवाक्यमद्वितीयादिवाक्यं च निःसङ्कोचं प्रवृत्तं निर्विशेषपरं व्यवस्थापिम् ॥

वस्तुतस्तु निर्गुणपदघटितं ज्ञेयब्रह्मप्रकरणस्थमेकमपि वाक्यमुक्तब्रह्मस्वरूपनिरूपणपरं नास्ति, इति निर्गुणश्रुतीनामिति व्यपदेशोऽर्थतो निर्गुणश्रुतीनामित्येव नेयम्। स्मृतिपुराणयोस्तु सत्त्वरजस्तमोगुणाद्यसम्बन्धाभिप्रायेण निर्गुणपदं बहुशः श्रूयते, तत्र च निर्गुणपदमिवाद्वितीयादिपदमपि वर्तते, इति सत्त्व-रजस्तमोगुणासम्बन्धो यथा निर्गुणपदेन बोध्यते, तथा पदान्तरेण धर्मसामान्याभावोऽपि प्रतिपाद्यते, इति निर्गुणपदं सत्त्वादिगुणराहित्यमेव बोधयति श्रुतिगतमिति शङ्कापि—निरवसरा; गुणशब्दो हि अध्यात्मविद्याप्रकरणेऽपि न केवलं सत्त्वादिगुणमेवाभिधत्तेः, किन्तु "समस्तकल्याणगुणात्मकोऽसौ" "विना हेयैर्गुणादिभिः" इत्यादिश्रीभाष्योदाहृतविष्णुपुराणवचनेषु धर्मपर्यायोऽपि दृश्यते। अनेनेदं ज्ञायते—यत् प्रकृतिसम्बन्धिकार्यविचारावसरे सत्त्वादिगुणपरत्वम्, अन्यथा तु धर्मसामान्यपरत्वम्। तत्र च गुणस्य हेयत्वमहेयत्वं च वर्तते, परं तु हेयगुणविवक्षा यत्र मन्यते, तत्र हेयविशेषणमपि

दीयते, यथा—'हेयैर्गुणादिभिरि'ति। तथाच हेयपदासमव्याहृतं प्राकृतगुणविचारप्रकरणाभावे गुणपदं धर्मसामान्यपरमित्येव गम्यते, इति केवलनिर्गुणपदं ब्रह्मप्रकरणगतं धर्मसामान्यनिषेधपर-मित्येव स्वीकर्तव्यम् ॥

ज्ञानस्वरूपस्यैव ब्रह्मणो ज्ञातृत्वस्यापि स्वीकारात् "सत्यं ज्ञानमि"ति ज्ञानरूपत्वाभिधानं न विरुद्धमिति श्रीभाष्यमतमेवा-द्वैतिनामपि मतम्। इयान् विशेषः—यद् ज्ञातृत्वं मायातादात्म्य-निबन्धनं काल्पनिकमित्यद्वैतमतम्, तदपि पारमार्थिकमिति तु श्रीभाष्यमतम्। अत्रालोचनीयं सर्वं पूर्वमेवालोचितम्, इति निर्विशेषब्रह्मणो न सत्यज्ञानवाक्येनासिद्धिः, नवा निर्गुणवाक्येन॥

एतेन—निर्गुणवाक्यानां सगुणवाक्यानां च विषयम्—अपहत-पाप्मेत्यपिपास इत्यन्तेन हेयगुणान् प्रतिषिध्य 'सत्यकामः सत्यसङ्कल्पः' इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्तीति श्रीभाष्यो-क्तिरपि—व्याख्यातप्राया; सविशेषप्रकरणत्वाद् दहरविद्यायाः ॥

तत्र सत्यकामत्वादय इवापहतपाप्मत्वादयोऽपि गुणा एवो-पासनार्थं विवक्ष्यन्ते, नतु हेयगुणनिषेधपूर्वककल्याणगुणविधिरिति पूर्वमेव सूचितम्, इति नात्र प्रकरणे निर्गुणवाक्यानामन्यथानयनेन विवरणकल्पनस्यावसरः। तदेवं निर्गुणवाक्यानां न सविशेषपरत्वम्, किन्तु निर्विशेषपरत्वमिति सिद्धम् ॥

अनन्तरं श्रीभाष्यकारैरालोचितमद्वैतिनामत्यन्तमनुकूलं च वाक्यम्—"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्" इति वाक्यम्—"सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति।" इति वाक्यं च समालोचयामः॥

अत्र श्रीभाष्यकाराः—"भीषाऽस्माद्वातः पवते"इत्यादिना ब्रह्मगुणानारभ्य 'ते ये शतमि'त्युपक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा "यतो वाचो निवर्तन्ते"इति ब्रह्मणः कल्याणगुणानन्त्यमत्यादरेण

वदतीयं श्रुतिः। "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिते"तिफलमवगमयद् वाक्यं परस्य ब्रह्मणो गुणानन्त्यं ब्रवीति; 'विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते।' काम्यन्त इति कामाः कल्याणगुणाः। ब्रह्मणा सह तद्गुणानश्नुत इत्यर्थः। दहरविद्यायां "तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इतिवद् गुणप्राधान्यं वक्तुं सहशब्दः। फलोपासनयोः प्रकारैक्यम्—"यथाक्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवती"ति श्रुत्यैव सिद्धमिति वाक्यद्वयमिदं स्वमतानुगुणम्-विवृण्वते ॥

तत्र "यतो वाचो निवर्तन्ते" इति "स एको ब्रह्मण आनन्दः" इति वाक्यार्थं ब्रह्मानन्दमेव शतगुणोत्तरतयोपसंहृतं स्तौति। तथाचानन्दमयब्रह्मतावाद एवोक्तवाक्यस्वारस्यम्। अत एव—"एतमानन्दमयमात्मानमुपसंक्रामती"ति वाक्यानन्तरम्—"तदप्येष श्लोको भवती"ति प्रकृत्यैव "यतो वाचो निवर्तन्ते"इति वाक्यप्रवृत्तिरुपपद्यते, न त्वद्वैत्यभिमतपुच्छब्रह्मवादे; "आनन्दं ब्रह्मणो विद्वान् न बिभेति" इति वाक्ये ब्रह्मण इति षष्ठीश्रुतिविरोधात्। तथाच "यतो वाचः" इति वाक्यं न निर्विशेषवादस्यानुकूलम्। "सोऽश्नुते" इति तु सहयोगे तृतीयाया एव ब्रह्मणा विपश्चितेत्यत्र विवक्षणस्य युक्तत्वात् सहशब्दस्य युगपदित्यर्थवर्णनस्य तृतीयाया अर्थान्तरकल्पनस्य च गौरवग्रस्तत्वात्, प्राप्यवस्तुनो निरूपणस्यापेक्षितस्यैवमेव निर्वाहाच्च स्वमत एवानुगुणं "सोऽश्नुते'इति वाक्यमिति—मन्यन्ते ॥

अद्वैतिनस्तु मन्यन्ते—"स एको ब्रह्मण आनन्दः" इति आनन्दमयकोशमेव सुषुप्त्यवस्थोपहितमन्तर्याम्यभिन्नतया "ब्रह्मणः" इति ब्रह्मपदं परामृशति, न तु "ब्रह्मविदाप्नोति परमि"ति प्रक्रान्तं ब्रह्मस्वरूपम् ॥

अत एव—"स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जित-

लोकानामानन्दः, अथ ये शतं पितॄणां जितलोकानामानन्दाः, स एको गन्धर्वलोक आनन्दः", इत्याद्युपक्रम्य—"अथ ये शतमाजानजानां देवानामानन्दास्स एकः प्रजापतिलोक आनन्दः" "स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथैष परमानन्दः। एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः" इति "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति प्रस्तुतेतरभूतानन्दानुभवमध्य एव "स एको ब्रह्मण आनन्दः" इति ब्रह्मानन्दोऽपि वर्णित उपपद्यते। तथाच व्यष्टिकारणशरीरोपहिताभिन्नसमष्टिकारणशरीरोपहितानन्दमयो जीव एव माण्डूक्यश्रुत्युक्तस्तृतीय आनन्दमीमासायामुपसंहरे 'ब्रह्मण' इत्यनेन परामृश्यते, न तु तुरीयं माण्डूक्योक्तं "सलिल एको द्रष्टेति"तिप्रस्तुतं सर्वभूतानन्दानुभवोपजीव्यानन्दरूपं "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यप्रतिपादितं ब्रह्मस्वरूपम्। अत एव बृहदारण्यके चतुर्थाध्याये ब्रह्मानन्देनान्तिमेन—यश्च श्रोत्रियोऽवृजिनोऽकामहतः"इति सौषुप्तव्यष्टिजीवानन्दोऽपि समष्टिजीवानन्देनाविविक्ततया प्रतिपद्यते॥

"अत ऊर्ध्वं विमोक्षायैव ब्रूहि" इति प्रश्ने "अत्र हि याज्ञवल्क्यो बिभयाञ्चकारे"ति वाक्यशेषो हि यस्यानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति वर्णितम्, तदानन्दस्वरूपवर्णनेऽशक्ति प्रतिपादयन्नपि— "स एको ब्रह्मण आनन्दः" इति वावाक्येनावगत आनन्दो न "यतो वाचो निवर्तन्ते" इति वाक्यविषय इति गमयति। तथाच सौषुप्तपुरुषानन्द एव "स एको ब्रह्मण आनन्दः" इति वाक्येन वर्ण्यते। अत एव—"स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैवं पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवे"ति पुनः स्वप्नद्वारा जागरणाद्यवस्थासम्बन्धस्तस्य ब्रह्मणः प्रतिपाद्यमान उपपद्यते, इति "ते ये शतमि"त्यनुक्रमपरम्परायाः समाप्तिस्थानं ब्रह्म "यतो वाचो निव-

र्तन्ते'' इति वाक्ये निर्दिष्टं च ब्रह्म नैकम्; "एतस्यैवानन्दस्यान्यानि भूतानि'' इति एतद्रूपस्यैवानन्दस्येति सामानाधिकरण्येनान्वयस्यैव युक्तत्वात् अनन्दरूपब्रह्मांश एव वृत्त्यभिव्यक्तो विषयानन्दो नामेति बोधनद्वारा ब्रह्मरूपानन्दप्राप्तिपर्यन्तमवकाशो वर्तते। तथाच— "अत्र ह याज्ञवल्क्यो विभयाञ्चकारे''तियादृशब्रह्मलोकानन्दप्राप्तावपि भीतेरवकाशो वर्णितः, स ब्रह्मलोकानन्दः, "आनन्दं ब्रह्मणो विद्वानि''त्यत्र न विवक्ष्यत इत्यकामेनापि स्वीकर्तव्यम्; यतः "न बिभेति कुतश्चने''ति भयाभावोऽत्र प्रतिपाद्यते, इत्यानन्दमयमधिकृत्य नायं श्लोकः, किन्तु तस्याप्यधिष्ठानभूतं शुद्धं पुच्छं ब्रह्मैवाधिकृत्य। एतेन—"भीषाऽस्माद् वातः पवते''इति प्रक्रमोऽपि "तस्यैष एव शारीर आत्मे''ति प्रस्तुतं पुच्छं ब्रह्मैव "यदेष आकाश आनन्दो न स्यादि''त्यादिनाऽऽनन्दरूपेण प्रस्तुतं विषयीकरोति, नानन्दमयम्; यतो नानन्दमयात् सौषुप्तात् व्यष्टिरूपात् समष्टिरूपाद्वाना भीतिरत्र वर्ण्यते, किन्तु पुच्छब्रह्मण एव। अधिकमुपरि स्पष्टीभविष्यति। "स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात् प्रेत्य। एतमन्नमयमात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसंक्रामति, एतमानन्दमयमात्मानमुपसंक्रामती''ति वाक्यजातेन हि पुच्छब्रह्मज्ञानिन आनन्दस्तु "स एको ब्रह्मण आनन्दः'' इत्यन्तसर्वानन्दोऽपि, इति बोधिते कियमयं सौषुप्तानन्द एवेति शङ्कावारणेन, न ब्रह्मानन्द एतावान्, न चेतोऽपि शतगुण इत्येवं परिच्छेदयोग्यः, किन्त्ववाङ्मनसगोचरः इति प्रतिपादनार्थमेव— "यतो वाचो निवर्तन्ते'' इति श्लोकः, इति सविशेषब्रह्मपरो नायं श्लोकः, किन्तु निर्विशेषब्रह्मपरः। अधिकं चात्रालोचनीयमानन्दमयाधिकरणप्रस्ताव आलोचयिष्यते। यथाच "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता''इत्यस्य प्राप्यब्रह्मस्वरूपानुपपा-

दकत्वात्, भिन्नपादस्थस्य सहशब्दस्य पादान्तरगतब्रह्मणापदेनान्वयासम्भवादेश्च सविशेषब्रह्मवादे नानुकूल्यम्, तथाऽऽनन्दमयाधिकरणे परपक्षनिराकृतिग्रन्थसमालोचनपूर्वकं बहु विस्तरिष्यते, इति तत एवाधिकमवगन्तव्यम् ॥

दहरविद्यायामपि न गुणानां प्राधान्यम्, किन्तु गुणिन एव; अन्यथा हि ब्रह्मोपासनत्वमेव तस्य हीयेत, तदेवं वाक्यद्वयमपि पूर्वोक्तं निर्विशेषवादस्यैवानुकूलमिति सिद्धम् । नहि—"ब्रह्मविदाप्नोति परमि"ति ब्रह्मोपासनाविधिपरम्, किन्तु तज्ज्ञानविधिपरमेवेति तत्क्रतुन्यायस्यापि नात्र प्रसङ्गः ॥

अनन्तरं श्रीभाष्यकारैरालोचितं तु—"यस्यामतं तस्य मतम्, मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानतामि"ति वाक्यद्वयं केनोपनिषद्गतम् । "न तत्र चक्षुर्गच्छति न वाक् न मनो न विद्मो न विजानीमो तथैतदनुशिष्यात् । अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे । यद्वाचानभ्युदितम्, येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यन्मनसा न मनुते येनाहुर्मन्यते मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।.........यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् । यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम् । नाहं मन्ये सुवेदेति नो न वेदेति वेद च यो नस्तद्वेद वेदेति नो न वेदेति वेद च ।" इत्यनुक्रम्य श्रूयते—"यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम्" इति ॥

इदमत्र श्रीभाष्यकाराणां विवरणम्—"यस्यामतं तस्य मतम्" "अविज्ञातं विजानतामि"ति ब्रह्मणो ज्ञानाविषयत्वमुक्तं चेत्, "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानाद् मोक्षोपदेशो न स्यात् । अतो ब्रह्मविषयवेदनमेवापवर्गाय सर्वाः श्रुतयो विदधति । ज्ञानं

चोपासनात्मकम्। उपास्यं च ब्रह्म सगुणमित्युक्तम्। "यतो वाचो निवर्तन्ते" इति ब्रह्मणोऽनन्तस्यापरिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेद्यायोग्यत्वश्रावणेन 'ब्रह्म एतावदि'ति परिच्छेदज्ञानवतां ब्रह्माविज्ञातमित्युक्तम्; अपरिच्छिन्नत्वद् ब्रह्मणः, अन्यथा "यस्यामतं तस्य मतमि"ति मतत्वविज्ञातत्ववचनं विरुद्ध्येत—इति ॥

अद्वैतिनस्तु—"नेदं यदिदमुपासते" "यन्मनसा न मनुते" "यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं ब्रह्मणो रूपं वेत्थ। "यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम्" इत्यादिभिः स्वरूपतो मनोवाचामगोरत्वेनानुपास्यत्वेन च प्रतिपादनपूर्वकं प्रवृत्तेन—"यस्यामतमि"ति वाक्येन परिच्छिन्नतया ब्रह्माज्ञानं ब्रह्माज्ञानमिति वर्णनमनवसरम्, यतः स्वरूपचैतन्यस्य स्वयंप्रकाशस्याहमादिभानं न ब्रह्मज्ञानम्, किन्त्वखण्डाकारवृत्त्या स्वप्रकाश एव ब्रह्मज्ञानम्। तथाच—ज्ञानिनो यस्याहमिति मननं विज्ञानं वा स्वस्य न भवति जागरणावस्थायामपि स ब्रह्म मनुते, विजानाति वा, यस्तु स्वस्वरूपमहमित्यमहमर्थतया मनुते, स नात्मानं जानाति; ब्रह्मणोऽनुभवरूपस्याननुभाव्यत्वेन स्वप्रकाशत्वादित्येव विवक्ष्यते। "ब्रह्मविदाप्नोति परम्" इत्यादीनामपि ब्रह्माकारवृत्तेरज्ञाननाशद्वारा स्वरूपप्रकाशप्रापिकाया अप्युपहितब्रह्मपर्यन्तं व्यापार एव तात्पर्यम्, नतु वाङ्मनोजन्यज्ञानविषयत्वबोधनेऽपि। अवगतिपर्यन्तं हि ज्ञानं ब्रह्मविदाप्नोतीत्यादौ ज्ञानं नाम, नोपासनात्मकम्, "नेदं यदिदमुपासते"इत्युपास्यत्वनिषेधाद् ब्रह्मणः ॥

यत्तु—यदिदं जगदुपासतेऽज्ञानिनः, नेदं ब्रह्म, किन्तु तदेव ब्रह्म त्वं विद्धि यद्वाचानभ्युदितं येन वागभ्युद्यते इत्येवोक्तवाक्यार्थ इति ध्यानविधिसमर्थनावसरगतं विवरणम्, येन ब्रह्मणो जगद्वैरूप्यमेव प्रतिपाद्यत इति श्रीभाष्यकारा मन्यन्ते, तत्रापि यदिदमुपासते, नेदं ब्रह्मेति विवरणेनोपास्यवैलक्षण्यं तु सिद्धमेव। इयान् विशेषः—यदिदं जगदिति श्रीभाष्यकाराणां विवरणम्,

अद्वैतिनां तु उपास्यमात्रवैलण्यस्य विवक्षणेन ब्रह्मण उपास्यत्वप्रतिषेधस्यैव विवक्षणात् यदिदं तत्र तत्र दहरविद्यादिषूपासते, नेदं ब्रह्म, किन्तु यद्वाचानभ्युदितमिति विवरणम्। तत्र प्रथममते—वागाद्यनभ्युदितमेव ब्रह्म, नेदं जगत्, यदिदं जगत् प्राणिन उपासते इति योजनया वागाद्यनभ्युपदितमेव ब्रह्म, उपास्यमानं जगद् न ब्रह्मेति ब्रह्मविधेयक एको बोधो जगदुद्देश्यकश्चापरो बोधः, द्वितीयमते तु ब्रह्म, वागाद्यनभ्युदितमेवेत्यक एव ब्रह्मोद्देश्यको बोधः, "नेदं यदिदमुपासते" इति तु तदेवेत्येवकारव्यावर्त्यस्यैव—वागाद्यभ्युदितस्यैवोपास्यत्वाद् उपास्यस्य वागाद्यभ्युदितस्य वा न ब्रह्मत्वमित्यंशस्यानुवादमात्रम्। अत एव—यद्वाचाऽनभ्युदितम्" इत्यत्रेव 'यन्मनसे'-त्यादावपि नेदं यदिदमुपासत इत्याम्नानम्। अत्र प्रथममत एवकारवैयर्थ्यम्, जगद्वैरूप्यं च नात्र वक्तव्यमपि। तथाच किमुपास्येनादित्याद्यात्मना सर्वं प्रेर्यते, उतान्येनेति प्रश्ने नोपास्येन, किन्तु वागाद्यविषयेणैव ब्रह्मणेति सुष्ठु लगति। तथाच सर्वाधिष्ठानं सर्वभासकं वा नोपास्यम्, किन्त्ववाङ्मनसगोचरमेव किंचिद् ब्रह्माख्यं वस्तु, इति प्रकरणार्थः। सति चैवं पूर्वोक्तप्रकारेण मतत्वामतत्वादिकं सर्वं यथाश्रुतमेवोपपद्यते, नतु परिच्छिन्नतया ज्ञानेऽज्ञानम्, अपरिच्छन्नतया ज्ञाने ज्ञानमित्येवं योजनमत्रापेक्षितम्, ज्ञानेऽज्ञानत्वकल्पनायोगात्॥

वस्तुतस्तु—अद्वैतिनोऽपि परिच्छन्नतयाऽहमर्थरूपेणात्मस्वरूपज्ञानं न ज्ञानम्, तथाऽहमिति परिच्छिन्नरूपेणात्मनः स्वयंप्रकाशस्याज्ञानमेव ज्ञानमित्येव मन्यन्ते, इति श्रीभाष्यकाराणां विवरणं नाद्वैतमतस्यापि विरुद्धम्, इति इदमपि वाक्यं निर्विशेषवादस्यानुकूलमेव॥

"न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारम्" इतिवाक्यं तु दृष्टिव्यतिरिक्तद्रष्टृप्रतिषेधपरमिति मतद्वयसम्मतम्। इयान् विशेषः—

यद् धर्मभूतज्ञानाश्रयत्वं विहायागन्तुकचैतन्ययोगेन द्रष्टृप्रतिषेध इति श्रीभाष्यमतम्, अद्वैतमतं तु आगन्तुकान्तःकरणधर्मवृत्त्यध्यासेनात्मनो ज्ञातृत्वम्, स्वरूपतस्तु ज्ञानरूपत्वमेव न ज्ञानाश्रयत्वमिति। वक्तव्यं चात्र सर्वं पूर्वमेवोक्तमिति मतद्वयसाधारणी योजना ॥

द्वितीया तु योजना श्रीभाष्यकाराणामसाधारणी— दृष्टेर्द्रष्टारं जीवात्मानं न जानीहि, किन्तु परमात्मानमिति। अन्यथा "विज्ञातारमरे केन विजानीयादि"ति श्रुतिविरोधापत्तेरिति। आगन्तुकज्ञानेन ज्ञातृत्वे चेश्वरस्यापि विज्ञातुरागन्तुकं ज्ञानमङ्गीकर्तव्यं स्यात्, नचास्मदादेरपि ज्ञानस्यानित्यत्वमिति तदाशयः। अद्वैतिनस्तु ईश्वरस्यापि मायापरिणामागन्तुकज्ञानेनैव ज्ञातृत्वात् "आत्मा वा अरे द्रष्टव्यः" इति प्रस्तुतस्य साक्षात्करणीयस्यात्मनो—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इति द्वैतशून्यतया स्वप्रकाशतया च प्रतिपादितस्य निर्विशेषचिन्मात्ररूपत्वाच्च नात्र परमात्मोपासनविवक्षा; किन्तु दृष्टिव्यतिरिक्तद्रष्टृनिषेध एवेत्येवोरीकर्तव्यमिति—मन्यन्ते। अधिकं चानुभूत्यात्मताप्रकरणे व्यक्तम् ॥

"आनन्दो ब्रह्मे"ति भृगुवल्लीवाक्यमानन्दस्वरूपमात्रं ब्रह्मेति बोधयदद्वैतिनः स्वमतानुगुणमपरं वाक्यं मन्यन्ते। इदमपि सविशेषब्रह्मपरमेव, नतु निर्विशेषब्रह्मपरमिति श्रीभाष्यकाराः ॥

अयमेतेषामाशयः—ज्ञानाश्रयस्य ब्रह्मणो ज्ञानमिवानन्दोऽपि स्वरूपमेव, इति न विरोधः। अत्र मते—विज्ञानमानन्दं ब्रह्मेति वाक्यस्यानन्दरूपमेव विज्ञानं ब्रह्मेत्यर्थः। तथाच ज्ञानस्यात्मनो ज्ञातृत्ववद् आनन्दरूपस्यापि ब्रह्मणः क्वचिदानन्दं ब्रह्मण इत्यादावानन्दधर्मितया निर्देशोऽप्युपपन्नः। केवलानन्दरूपत्वे तु ब्रह्मणः—"आनन्दं ब्रह्मणः" इति भेदनिर्देशानुपपत्तिः—इति ॥

अद्वैतिनस्तु मन्यन्ते—नानन्दोऽपि विज्ञानरूपः; "विज्ञानमानन्दं ब्रह्मे"त्यादौ विज्ञानपदवैयर्थ्यात्, भृगुवल्यामपि "विज्ञानं ब्रह्मेति व्यजानादि"त्यनेनैव ब्रह्मज्ञाने समापिते "तपसा ब्रह्म विजिज्ञासस्वे"ति पुनर्विचारार्थं प्रेरणात् "आनन्दो ब्रह्मेति व्यजानात्" इत्यनन्तरमेव—"सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिते"ति विद्यासमाप्त्युपदेशायागाच्च। "आनन्दं ब्रह्मणः" इति राहोः शिर इतिवदभेदेऽपि षष्ठीस्वीकारेणाप्युपपत्तेः न धर्म-धर्मिभावेन ब्रह्मव्यतिरेक आनन्दस्योक्तश्रुतिः प्रमाणम्॥

परमार्थतस्तु—आनन्दं ब्रह्मण इत्यत्रानन्दशब्देन मानुषादिहिरण्यगर्भान्तानन्दस्यैव परिच्छिन्नस्य ग्रहणात् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्यनुसारेण सर्वं भूतानन्दजातं पूर्वोक्तं ब्रह्मण एवांश इति जानन् 'न बिभेति कुतश्चन', यतोऽधिकानन्दादेव स्वल्पानन्दस्य भीतिर्भवति, नतु समानानन्दात्। ब्रह्म चात्र सर्वाधिष्ठानप्रत्यक्चैतन्यमात्रमिति स्वस्वरूपज्ञाने हिरण्यगर्भान्तस्य सर्वस्य स्वांशरूपत्वेन स्वस्मिन् कल्पितत्वेन वा स्वव्यतिरेकेणाभावनिर्णये सति कुतोऽपि भीतेरनवसरात्, इति "आनन्दं ब्रह्मणः" इत्यत्र भेदषष्ठीपरतायामपि न विरोधः। अधिकमानन्दमयाधिकरणप्रस्तावे द्रष्टव्यम्॥

"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" "नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इति भेदनिषेधपराण्यपि वाक्यानि "कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वनिषेधपराणि, न पुनः—"बहु स्यां प्रजायेय" इति बहुभवनसङ्कल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषेद्धुं शक्नुवन्ति। नानात्वनिषेधादिकमपरमार्थभेदविषयमिति तु न युक्तम्, प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इति कल्पनाया अयोगात्॥

अयमाशयः—ब्रह्म-जगतोर्भेदनिषेधो हि तयोरैक्यविरोधेनैवेति मतद्वयसम्मतम्। तत्राद्वैतमते जगतो ब्रह्मकार्यत्वाद् उपादानोपादेययोरभेदाद् ऐक्यमिति मन्यते। श्रीभाष्यमते तु—निरस्तसमस्तहेयप्रत्यनीकस्य ब्रह्मणो हेयेन जगतैक्यं व्याहतम्, किन्तु जगद्विशिष्टब्रह्मणैव कार्य-कारणभावादिगम्यम्। कार्यकारणयोरैक्यं नाम—अवस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वैक्यम्। तथाच प्रकार्यैक्यमेव कार्य-कारणभावगम्यम्, न तु प्रकारि-प्रकारयोः प्रकाराणां वा परम्परम्। तथाच विशेषणांशैक्याभावेऽपि न क्षतिः॥

द्विविधं हि सामाधिकरण्यम्—यद् भिन्नकालीनावस्थारूपसद्वारविशेषणाश्रयधर्म्यैक्यं कार्य-कारणभावस्थले, सर्वकालीनाद्वारकविशेषणाश्रयधर्म्यैक्यम्—यथा—"अयं वेदविद् ब्रह्मणः" इत्यादौ कार्यकारणभावाभावेऽपि। सति चैवम् ब्रह्मणश्चिदचिदनुप्रवेशपूर्वकं नामरूपभाक्त्वश्रवणाद् सद्वारकत्वसिद्धेः शरीरतया प्रकारभूतचिदचिद्भिन्नत्वं प्रकार्यैक्यस्योपकारकमेव, नतु बाधकम्। तथाचैक्यविरोधी भेद एव "नेह नास्तीति" श्रुत्या निराक्रियते, नतु तदनुकूलोऽपीत्येव स्वीकर्तव्यम्, अन्यथा—'द्वै घटौ, इति बुद्धौ सत्यां मृद् घट इति ज्ञानं न स्यात्, एको घट इति बुद्धौ च 'घटादि न रूपादि' इति च ज्ञानं न स्यात्। तथाच कार्यनानात्वं कार्य-कारणयोरभेदस्य कथमपि न विरोधी। तथाच न केवलं कार्य-कारणभावमात्रेण ब्रह्मजगतोरभेदः, किन्तु तदन्तर्यामिकत्वेन तदात्मकत्वादपि, इति प्रकार्यैक्यमादायैव "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते"त्यादौ सामानाधिकरण्यम्। अत्र तदनत्वं हि तत्स्थितिधारकत्वं तदन्तार्यामिकत्वमेवेत्यभेदश्रवणे सर्वत्र तदन्तर्यामिकत्वस्याप्यनुसन्धानं कर्तव्यम्। अयं च भेदो न लोकसिद्धः, किन्तु श्रुतिसिद्धः, इति तन्निषेधे श्रुतितात्पर्यकल्पनं न युक्तम्; भेदाभेदयोर्विरोध-पौर्यापर्यनियमेनापच्छेदन्यायाविषयत्वस्य पूर्वमेव विवेचनाद् नाभेदश्रुतीनां भेदश्रुतिबाधकत्वम्, किन्तु कुतर्कभ्रान्तिमूलभेदविषयत्वमेवाभेदश्रुतीनाम्। तथाच ब्रह्म-प्रपञ्चयोरपि कार्य-कारणयोर्भेदनिषेधे हि, ब्रह्मकार्यत्वमेव जगतो न स्यात्, इति तदभेदपराणि वाक्यान्यपि बाधितानि स्युः। नहि जीव-ब्रह्मणोर्ब्रह्म-जगतोर्वा भेदः, प्रमाणान्तरसिद्धः, येनानूद्य निषिध्येत॥

तदत्र श्रीभाष्याभिमत उक्तश्रुत्यर्थः—यत्र-यदा, द्वैतमिव भवति =स्वनिष्ठभेद इव भवति। इवशब्दः स्वनिष्ठभेदस्यातात्त्विकत्वद्योतकः। कथमिवेतिवद्विवक्षितार्थो वा; तत्=तदा, इतरः इतरम्—इतरेण पश्यति। केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः, इतरः=स्वनिष्ठो द्रष्टा, इतरम्= स्वनिष्ठं द्रव्यम्, स्वनिष्ठदर्शनसाधनेन पश्यति। यत्र तु=यदा तु, अस्य=उपासकस्य, सर्वमात्मैवाभूत्=परमात्मसामानाधिकण्येन सर्वं साक्षात्कृतम्। नहि पूर्वमनात्मभूतं सर्वमिदानीमात्मा भवति, परमात्म-सामानाधिकरण्येन साक्षात्काराभिप्रायोऽभूदिति भावः। तत्=तदा, क इत्यध्याहारः? इतर इत्युक्तत्वात्। स्वनिष्ठः को द्रष्टा स्वनिष्ठेन केन दर्शनसाधनेन स्वनिष्ठं कमर्थम् (द्रव्यम्) पश्येत्। ज्ञातृ-ज्ञेय-ज्ञान-साधनेषु स्वनिष्ठं किञ्चिदपि नास्तीत्यर्थः। अत्र प्रमितनिषेधायागाद् आपातप्रतीतिसिद्धस्यैव निषेध्यत्वाद् लौकिकप्रतीतेश्च स्वनिष्ठताविषय-त्वात् तेन रूपेण निषेधः। तथाच परमात्मसाक्षात्कारदशायां प्रकारिण आत्मनः प्रतीयमानत्वादहंशब्दवाच्यपरमात्मसामानाधिकरण्येन दृश्य-तत्साधनानां प्रतीतिः, संसारदशायां तु स्वनिष्ठतया प्रतीतिरिति निष्कर्षः। एतेन—"तद्धैतत् पश्यन् ऋषिर्वामदेवोऽहं मनुरभवं सूर्यश्चे"ति श्रुतिरपि—व्याख्याता, इति "यत्र हि द्वैतमिव भवती"त्यादिवाक्यार्थः।

इह=प्रपञ्चे दृष्टप्रकारेण नानाभूतं स्वनिष्ठतया किञ्चिदपि नास्तीति "नेह नानास्ति किञ्चनेति श्रुत्यर्थः॥

मृत्योः=अज्ञानात्, मृत्युम्-अज्ञानान्तरं प्राप्नोति, यः स्वनिष्ठमिव पश्यति सर्वमिति "मृत्योस्स मृत्युमाप्नोती"ति श्रुत्यर्थः—इति॥

अद्वैतिनस्तु—सर्वत्र सामानाधिकरण्यप्रत्ययेषु यदि प्रपञ्चस्य तदात्मकत्वमपि निर्दिष्टं स्यात्, तर्हि श्रीभाष्योक्तरीत्या सामाना-धिकरण्यं प्रकार्यैक्यमादायैव, नतु केवलकार्य-कारणभावनिबन्धना-भेदमादायेति वक्तुं शक्यते। उपनिषत्सु हि—विनाऽपि नियम्यत्वं कार्याणां कारणाभेदपराणि वाक्यानि दृश्यन्ते, एवं नियम्यतया प्रपञ्चप्रतीतिस्थलेऽपि न सामानाधिकरण्यं दृश्यते, किन्तु भेद एव। तथाच ब्रह्मकार्यस्यैव प्रपञ्चस्य ब्रह्मनियम्यत्वाद् जगतो ब्रह्मणा तादात्म्यं जगद्विशिष्टब्रह्मैक्यमादायैव, न जगद्ब्रह्मैक्यमादायेति

वादो न क्षोदक्षमः; अन्यथा "यस्य पृथिवी शरीरमि"त्यादावपि पृथिव्यादीनां नियम्यतया प्रतीयमानानां तद्विशिष्टब्रह्मपरत्वापत्त्या भेदव्यपदेशोऽनुपपन्नः स्यात्। एतेन—"ओमित्येतदक्षरमिदं सर्वमि"त्यन्तर्यामितोपदेशं विना तादात्म्योपदेशोऽपि—व्याख्यातः। तथाच "सदेवे"त्यादौ सद्रूपेण ब्रह्मणः प्रपञ्चतादात्म्यं श्रूयमाणमपि शरीर-शरीरभावानिबन्धनमेव सामानाधिकरण्यम्, नतु कार्य-कारणभावनिबन्धनमिति सिद्धान्तस्याननुकूलमेव। यद्यपि सदायतनत्वेन तन्नियम्यत्वमपि वस्तुगत्या वर्तते; तथापि "मृत्तिकेत्येव सत्यमि"ति कार्य-कारणयोरेव द्रव्यैक्यस्य श्रीभाष्यकारैरपि विवक्षणात् शरीर-शरीरिभावस्य तदैक्यप्रयोजकत्वस्य तत्रानङ्गीकारात् "यस्य पृथिवी शरीरमि"त्यादौ भेदस्यैव व्यपदेशाच्च कार्य-कारणभावनिबन्धनेऽभेदे स्वीक्रियमाणे कार्य-कारणयोर्भेदोऽपि तत्र तत्र प्रतीयमानः कल्पित इत्येव स्वीकर्तव्यम्; तदैक्यविरोधित्वात्॥

एतेन—अवस्थाद्वयापन्नचिदचिद्वस्तुविशिष्टवस्त्वेकत्वं कार्यकारणभावनिबन्धनं सामानाधिकरण्यमिति—प्रत्युक्तम्; मृद एवावस्थाद्वयापन्नत्वेनावस्थायापन्नपदार्थान्तरविशिष्टवस्त्वैक्यस्य कुत्रापि कार्यकारणभावस्थलेऽदर्शनेनोक्तकल्पनाया अप्रामाणिकत्वात्। मृद एव ह्यवस्थाविशेषो घटो नाम, इति ब्रह्मण एवावस्था प्रपञ्च इति स्यात्, यदि ब्रह्म कारणं प्रपञ्चस्योपादानताविधयेति स्वीकर्तव्यम्, इति परिणामवादो विवर्तवादो वा नियतमेव स्वीकर्तव्यः। परिणामवादस्तु साक्षाद् ब्रह्मणो न श्रीभाष्यकाराणामपि सम्मतः, किन्तु शरीरद्वारकमेव ब्रह्मणो महदाद्युपादानत्वम्, ज्वालाव्यवहितस्य काष्ठस्य करणत्ववदिति हि तन्मतम्। अस्मिंश्च पक्षे न मुख्यमुपादानत्वं ब्रह्मणः सम्भवति; यतो व्यापारव्यवहितस्य काष्ठादेर्मुख्यदाहकरणत्वव्यवहार इव नात्राव्यापारशरीरद्वारकमुख्योपादानत्वव्यपदेशो युक्तिसहः। सति चैवं चिदचिद्विशिष्ट-

ब्रह्मकारणतावादोऽयं वस्तुगत्या ब्रह्माभिन्ननिमित्तोपादानतावादस्य प्रतिकूल एव स्यात्, इत्यन्ततो गत्वा ब्रह्मकार्यत्वमेव प्रपञ्चस्य परित्यक्तव्यं स्याद्। सति चैवं ब्रह्मकार्यतया तदात्मकतया चैक्यमिति न श्रीभाष्यमत उपपद्यते, इति यदि प्रपञ्च-ब्रह्मणोस्तादात्म्यं सामानाधिकरण्यं वा स्वीकर्तव्यम्, तर्हि कार्य-कारणभावनिबन्धनमेव तत् स्वीकर्तव्यम् ॥

एतेन—रूपविशिष्टस्य पिण्डत्वावस्थापन्नस्य रूपस्पर्शविशिष्टेन घटत्वावस्थापन्नेनैवैक्यम्। अत्र घटगत रूप-स्पर्शस्थाने चिदचितौ पिण्डत्व-घटत्वस्थानेऽवस्थाद्वयापन्नेति। इयान् विशेषः—यद् ब्रह्मणि चिदचिद्द्वाराऽवस्थायोगित्वम्, घटादिस्थले तु रूपस्पर्शादिद्वारेति। अत्र बालत्व-युवत्वावस्थाद्वयापन्नशरीरविशिष्टवस्त्वैक्यमनुरूपो दृष्टान्त इत्यादि—परास्तम्; एकावस्थावतोऽवस्थान्तरापत्तिर्हि परिणामि-परिणामभावेन भवति, नान्यथा। परिणामश्च सावयवस्यैव भवति, न निरवयवस्य। तथाच घटपिण्डगतरूपस्पर्शयोश्चिदचित्स्थानत्वं न सम्भवति। अवस्थाद्वयं हि वस्तुगत्या चिदचितोरेव, न ब्रह्मणः। पिण्डत्वाद्यवस्थापि यदि रूपस्पर्शयोरेव स्वीक्रियते, तर्हि बाधः; मृद एव पिण्डत्व-घटत्वाद्यवस्थाया लोकसिद्धत्वात्, रूपरसयोस्तददर्शनात्। नहि रूपस्पर्शावेव पिण्ड-घटौ इति लौकिकाः प्रतियन्ति, इत्यलौकिकतत्त्वगवेषणायां सुदूरं गमनं श्रीभाष्यानुयायिनाम् ॥

"स एवायं तरुणोऽभूदि"त्यादौ तु सत्यं बालत्व-युवत्वावस्थापन्नशरीरविशिष्टैकवस्तुप्रतीतिर्वर्तते, परं त्विदमेवालोचनीयम्—यत् कार्य-कारणभावः शरीरात्मनोस्तत्र वर्तते वा, न वेति। यदि वर्तते, तर्हि विवर्तवादे पर्यवसानम्, यदि न वर्तते, तर्हि तत्रापि कथं सामानाधिकरण्यम्? अद्वैतिनस्तु मन्यन्ते—तत्रापि शरीरस्यात्मन्यध्यासनिबन्धनमेव सामानाधिकरण्यमिति। यदि

च विनाऽपि कार्य-कारणभावं शरीरशरीरिभावमात्रेण सामानाधिकरण्यम्, तर्हि व्यर्थं ब्रह्मप्रपञ्चयोरपि कार्य-कारणभावकल्पनं सामानाधिकरण्यप्रतीत्यर्थम्। तथाच केवलकार्य-कारणभावस्थलेऽप्यभेद-प्रतीतिदर्शनात्, शरीरात्मभावस्थलेऽप्यहं देवदत्त इत्यादिस्थले प्रकारद्वयप्रतिभानं विनापि प्रकारप्रकारिणोरप्यभेदप्रतीतिदर्शनाच्च ब्रह्म-प्रपञ्चयोः कार्य-कारणभावेनाप्यैक्यं विनापि शरीर-शरीरिभावं सम्भवतीति कार्य-कारणयोर्भेदस्यैक्याविरोधार्थं मिथ्यात्वमवश्यमेव स्वीकर्तव्यम्। दृष्टं हि बाध्य-बाधकभावनिबन्धनमपि सामानाधिकरण्यम्—'इदं रजतमि'त्यादौ। तथाच द्विविधं सामानाधिकरण्यम्—विशेषण-विशेष्यभावनिबन्धनम्, यथा वेदविद् ब्राह्मण-इत्यादौ, बाधायां सामानाधिकरण्यम्—स्थूलोऽहं कृशोऽहमित्यादौ, 'इदं रजतमि'त्यादौ च। शरीर-शरीरिणोरपि बाधायामेव सामानाधिकरण्यम्। स्थूलोऽहमित्यादौ हि नावस्थाद्वयविशिष्ट-वस्त्वैक्यप्रतीतिः शरीरे। सूक्ष्माचिद्विशिष्ट एव स्थूलचिद्विशिष्टोऽपि इत्यादौ तु न भिन्नकालीनावस्थाद्वयविशिष्टवस्त्वैक्यपरत्वम्। तथाच न विशेषण-विशेष्यभावे सामानाधिकरण्यम्, इति स्वीकर्तव्यमेव। यथाच तन्नियम्यानां न तत्तादात्म्येन व्यवहारः, राज-प्रजयोः सामानाधिकरण्याभावात्, तथाऽन्यत्र व्यक्तम्। सति चैवम्—"सर्वं खल्विदं ब्रह्मे"त्यादिसामानाधिकरण्यमपि तज्जत्वादिनापि यदि स्वीक्रियते, तर्हि नियतं भेदमिथ्यत्वव्यवस्थानमपेक्ष्यते। ततश्चाविद्यकोऽयं भेदो न प्रमाणसिद्धः, किन्तु भ्रान्तिमूल एव, इति भ्रान्तिसिद्धत्वं भेदस्य निरूपयितुमिदं वाक्यम्—"यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यती"ति। अत्रेवशब्दो भेदातात्त्विकताव्यवस्थापनार्थ इति मतद्वयसम्प्रतिपन्नम्, यदि इव शब्दार्थो विवक्ष्यते। इयान् विशेषः—यत् स्वनिष्ठभेदातात्त्विकत्वं श्रीभाष्य-मते, अद्वैतमते तु भेदमात्रातात्त्विकत्वम्। अत्र स्वनिष्ठेति

पदाध्याहारो निष्प्रमाण इति भेदसामान्यमिथ्यत्व एव पर्यवसानम्। इवशब्दार्थाविवक्षापक्षस्तु निर्गतिको न स्वरसश्च। एतेन—"यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येदिति वाक्यमपि—व्याख्यातम्। तत्र च—"अहं मनुरभवम्" इति ज्ञेय-तत्साधनाद्य-भेदानुसन्धानं यदि परमात्मशरीरकत्वात् सर्वेषामिति मन्यते, तर्हि मुक्तात्मनोऽपि मन्वादिसामानाधिकरण्यं मन्वादिशरीरिभावेन मन्वादिकारणत्वेन च स्वीकर्तव्यम्। तत्र च कथं जगद्व्यापारवर्जमेव परमात्मभावः? ननु जगद्व्यापारेणापि साकम्? ततश्च परमात्मशरीरत्वाद् मुक्तस्य परमात्मन इव तच्छरीरमन्वादिभिस्सामानाधिकरण्यं न प्रकारिमात्रैक्यमादाय, किन्तु प्रकरयोरप्यैक्यम्। सति चैवं भवदीयः पूर्वोक्तो नियमो भवद्भिरेव परित्यक्तो भवति। एतेन—"नेह नानास्ति किञ्चने"ति श्रुतिरपि—व्याख्याता; तस्या अपि भेदसामान्यनिषेधपरायाः सङ्कोचे प्रमाणाभावेन स्वनिष्ठभेदतात्त्विकतामात्रबोधकत्वायोगात्। इहशब्दस्य प्रक्रान्तब्रह्मपरामर्शित्वपरित्यागेनाप्रक्रान्तप्रपञ्चपरत्वायोगात्, नानाकिञ्चनपदद्वयवैयर्थ्यापाताच्च॥

"यदा ह्येवैष एतस्मिन् उदरमन्तरं कुरुते। अथ तस्य भयं भवति" इति वाक्यं तु—न ब्रह्मणि भेददर्शननिन्दापरम्, "जुष्टं यदा पश्यति"ति तत्र नानात्वदर्शनस्य मुक्तिसाधनत्वावगमात्, किन्तु ध्यानविच्छेदस्यैव भयकारणताद्वारा निन्दापरम्, "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते" इति प्रतिष्ठाशब्दवाच्याया निष्ठायाः प्रस्तुतत्वादिति श्रीभाष्यकाराः—वदन्ति॥

अद्वैतिनस्तु—"यदा ह्येवैष एतस्मिन्नदृश्ये" इत्यभयकारणं प्रतिपाद्य भयकारणप्रतिपादनार्थं प्रवृत्ते—"यदा ह्येवैष एतस्मिन्नि"ति वाक्येऽपि एतस्मिन्पदेन पूर्वतनवाक्यप्रक्रान्तब्रह्मण एव परामर्शो युक्तः, ननु प्रतिष्ठायाः परामर्शः; प्रक्रमस्वारस्यभङ्गात्,

एतस्मिन्पदेन नपुंसकेन प्रतिष्ठायाः परामर्शायोगाच्चेति ब्रह्मणि भेददर्शननिन्दापरमेवेदं वाक्यमिति—वदन्ति ॥

तदेवं सर्वाणि वाक्यानि श्रीभाष्यकारैरद्वैतमतप्रतिकूलतया व्याख्यातान्यद्वैतिनामेव साधकानीति व्यास्थापितमिति निर्विशेषब्रह्मवाद एव स्वारसिकः ॥

इतः परम्—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"ति सूत्रमप्यद्वैतिनामेवानुकूलमिति निरूप्यते ॥

"न स्थानतोऽपि परस्ये" ति सूत्रे हि नञः श्रवणात् सत्यं वयमपि पश्यामो भवन्त इव किञ्चिदत्र निषेध्यं सूत्रकारा मन्यन्त इति । निषेध्यं च प्रसक्तमेव नाप्रसक्तमिति, किं सूत्रोपात्तमेवोचितमुताध्याहृतमिति तु विप्रतिपन्नमिदम् । अत्र स्थानतोऽपीत्यपिशब्देन समुच्चयार्थेनान्वयाद् नञः , स्थानतः स्वरूपतश्चोभयलिङ्गं न ब्रह्मेति स्वरसमन्वयो भवति भगवत्पादमते । सत्यं प्रजापतिवाक्यमात्रस्यात्र विचार्यत्वे स्थानप्रयुक्तदोषशङ्कामात्रं तद्वाक्यदृष्ट्या प्रसक्तमिति न स्थानतो दोष इति, दोषस्याध्याहार इति समस्त्यवसरः कल्पनायाः, परन्तु नेदं संभवति, यतः सर्वत्रपदवैयर्थ्यमत्र समापद्येत । 'सर्वत्र' पदप्रयोगेण हि सर्वेषां वेदान्तवाक्यानां विवक्षा, "सर्वत्र प्रसिद्धोपदेशादि" त्यादौ क्लृप्तेति, सर्ववेदान्ततात्पर्यविषय एवात्र विचार्यते: नतु वाक्यविशेषगृहीतापुरुषार्थगन्धशङ्कानिषेधादिकम् । स्पष्टं हि "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्रो वै, सशरीरः प्रियाप्रियाभ्याम्, नह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती" ति वाक्यं शरीरासम्बन्धेनैव ब्रह्मणोऽपुरुषार्थगन्धं निषेधति, नतु शरीरसम्बन्धमपि सिद्धवत्कृत्येति, प्रजापतिवाक्यावगते स्वप्नाद्यवस्थाद्वारेण निर्दिश्यमाने च नापुरुषार्थगन्धशङ्कांया अवसरः । स्थानपदं हि—"स्थानादिव्यपदेशोपपत्तेश्च" त्यादाविव नियम्यस्थानमेवा-

त्रापि परामृशतीति, स्पष्टमिदं विज्ञायते—यत् सूत्रकारा अत्र स्थानसम्बन्धनिषेधेनाशरीरमेव ब्रह्म निर्देष्टुमिच्छन्ति सर्ववेदान्तप्रतिपाद्यतया। तदिदं सिद्धम्—यत् "न स्थानतः" इति सूत्रगतस्य नञो न दोषेणाध्याहृतेनान्वयः। सम्बन्ध्याकांक्षा हि श्रुतेनोभयलिङ्गपदेनैव समर्प्यते। नहि प्रजापतिवाक्यश्रवणानन्तरं कस्यापि ब्रह्मणि दोषशङ्का समापतति॥

"सर्वत्र ही" ति हेत्वंशे तु नाध्याहारदोषः, यतः—अनन्तरसूत्रगतमतद्वचनपदमत्रानुषज्यते। अतद्वचनपदेन त्वनुभयलिङ्गवचनं विवक्ष्यते। तच्च निर्विशेषवचने पर्यवस्यतीति भगवत्पादमततात्पर्यम्। एतेन—हेतुदलस्य स्वेष्टानुसारेणाध्याहारो न न्याय्य इति शङ्कापि—परास्ता। नहि सूत्रानुपस्थितं किमप्यत्र योज्यतेऽस्माभिः, भवन्मते तु दोषादिपदस्य सूत्रानुपस्थितस्याध्याहारान्नानुषङ्गः। एतदेवाभिप्रेत्यास्माभिरस्मदीयवेदान्तपरिभाषाभूमिकायाम्— "सर्वत्र ही"त्यत्र तु निर्विशेषमेवेत्यध्याहार इव भवतीतीवशब्दः प्रयुक्तः। सर्वत्रातद्वचनपदेन तात्पर्यतो निर्विशेषपरत्वमेव विवक्ष्यत इति न हेतोरसिद्धिः॥

तथाच सर्वाणि वेदान्तवाक्यानि, न सविशेषब्रह्मपराणि, निर्विशेषैकतात्पर्यकत्वादिति न्यायप्रयोगस्यैवात्र विवक्षितत्वान्न दोषः। भवन्मते तु ब्रह्म, निर्दोषम्, सर्वत्रोभयलिङ्गत्वादित्यत्र न केवलं सर्वत्रपदम्, किन्तूभयपदमपि व्यर्थमिति, व्यर्थविशेषणत्वात् व्याप्यत्वासिद्धिः। सूचितं चैतत्परिभाषाभूमिकायामेव सत्यकामत्वादि लिङ्गान्तरसमर्थनस्य को वोपयोगः, यतो निरस्तसमस्तदोषत्वमेकमेवं तत्र पर्याप्तमिति ग्रन्थेन ?

"भेदादिति चेन्न प्रत्येकमतद्वचनात्" इति सूत्रान्तरं तु सत्प्रतिपक्षानुमानान्तरनिरासार्थमेव। "यथा हि निर्विशेषवाक्यगम्यत्वेनोभयलिङ्गत्वनिषेधेन निर्विशेषपरत्वं व्यवस्थाप्यते, एवं

सविशेषवाक्यप्रतिपाद्यत्वेनाप्युभयलिङ्गत्वनिषेधेन सविशेषपरत्वमेव वेदान्तानां भवत्वि'' ति शङ्का हि प्रत्युपाधि तदसम्बद्धस्वरूपप्रतिपादकत्वात् सविशेषवाक्यानां न परमतात्पर्यविषयत्वम्, किन्त्वनुवाद एवेति प्रतिपादनेन निरसनीयेति, भेदादिति सूत्रान्तरम्। पूर्वत्र केवलमद्वचनत्वं हेतुः अत्र तु प्रत्येकमतद्वचनत्वमिति निष्कर्षः। सति चैवमुभयलिङ्गत्वाभावमाश्रित्य साक्षान्निषेधात् निर्विशेषप्राधान्यात् निर्विशेष एव वेदान्तानां पर्यवसानमिति सूचनार्थम्—"अरूपवदेव ही''ति सूत्रमित्याद्युत्तरत्र स्पष्टीभविष्यति ॥

अथवा—"सर्वत्र हि'' इति सर्वतादात्म्यमेव "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत'' इति वाक्यसिद्धं सर्वोपादानताप्रयुक्तं विनानुषङ्गमध्याहारं वा हेतुरत्र विवक्ष्यते। सति चैवं पृथिव्यादिशरीरसम्बन्धो न पारमार्थिकः, यतो बाधायामेव सामानाधिकरण्यं सर्वत्र। न हि कुत्रापि ब्रह्म पृथिव्यादिशरीरसमानाधिकरणतया निर्दिष्टम् ॥

अन्तर्यामिब्राह्मणेऽपि हि "यस्य पृथिवी शरीरमि' त्यादिना भेदेनैवोपदेशो दृश्यते, इति न शरीरशरीरिभवादिकं वास्तवम्, इति नोभयलिङ्गं ब्रह्मेति युक्तमिति सूत्रार्थः। तथाच ब्रह्म, न स्थानादिप्रयुक्तसविशेषत्व-स्वरूपप्रयुक्तनिर्विशेषत्वोभयवत्, सर्वतादात्म्येनाम्नायमानत्वात्, इत्यनुमानप्रयोगोऽत्र विवक्षितः। यथाचोभयलिङ्गत्वे सविशेषत्वं नोपपद्यते, तथा पूर्वमेव सूचितम्। अत्र पक्षे सर्वतादात्म्यं सविशेषस्यैव भवतु, इति शङ्कावारणार्थम्—"भेदादिति चेन्ने'' ति सूत्रम्। परिशेषानुमानपरम्—"अरूपवदि'' ति सूत्रमिति विवेकः। सगुणवाक्यानि हि सर्वाणि बहून्यपि वा न तात्पर्यतः सगुणपराणीति घण्टाघोषोऽयमद्वैतिनामिति,—किमर्थं वा श्रीभाष्यानुयायिभिर्वारं वारं—यत् भूयस्यः सगुणश्रुतयः, सगुणविद्यापराणि च दृश्यन्ते सूत्राणि बहूनीति व्याक्रुश्यते ?

ततश्चायमेवार्थः सूत्रकाराभिमत इति विज्ञायते—यदन्तर्यामिब्राह्मणादिसगुणं वाक्यं सर्वं निर्विशेषपरमिति। एवंच प्रथमसूत्रोपात्तहेतुसमन्वयार्थं द्वितीयसूत्रमिति व्याख्यातं भवति। सति चैवमशरीरमेव ब्रह्म सर्वत्र विवक्षितमितिं पर्यवसित एवार्थः स्पष्टमुपपाद्यते सूत्रकारैः—"अरूपवदेव हि तत्प्रधानत्वात्" इति। न ह्युभयसम्मतेनैव हेतुना सूत्रकाराः सर्वत्र साध्यं साधयन्ति, किन्तु स्वासाधारणेन स्वयं साध्यमानेनापीत्यवश्यमिदमूरीकर्तव्यम्; अन्यथा मुख्यमीक्षितृत्वादिकं प्रधानवादादिनिरासार्थतया सूत्रकाराभिमतं न साङ्ख्यानामपि साधारणमिति प्रधानकारणवादनिरासाद्यसम्भवद्युक्तिकं स्यात्। एतेन—हेतुनिर्देशश्च पक्षद्वयसाधारण इति चिन्त्यमिति—सूचितम्। वस्तुतस्तु—प्रतिपर्यायमेकात्मप्रतिपादनम्, वाक्यविशेषेषु निर्गुणस्वरूपप्रतिपादनं च साधारणमेवात्र हेतुतया निर्दिश्यते। हेयगुणराहित्यादिपरतया संकोचे तु न प्रमाणम्, न वा कुत्रापि तथा सूत्रकारैः सूचितम्॥

सूत्राणां हि न्यायपराणां हेतुप्रधान्यमिति, सति सम्भवे हेतुघटकस्य तच्छब्दस्य नञ्घटितस्य पूर्ववाक्योपात्तहेतुविपरीतपरत्वमेव युक्तम्। अतश्च "भेदादिति चेन्ने" ति सूत्रेऽतद्वचनशब्दे तच्छब्देन भेदपरामर्श एव युक्तः, नतु साध्यपरामर्शः। अन्यथा—स्थानतो यो दोष आपादितः, स एव दोषोऽवस्थाभेदादपि शङ्क्यत इति, सत्यकामत्वादिहेतुप्रतिक्षिप्तस्य दोषस्य न कथमपि पुनरुत्थानमिति—भेदादिति सूत्रं वितथमेव स्यात्। निरस्तसमस्तदोषत्वं सत्यकामत्वं च पूर्ववाक्योपात्तं नावस्थाभेदनिबन्धनम्, किन्तु सार्वदिकमिति प्रकरणत एवावगम्यते। अयं भावः—ब्रह्म, निर्दोषम्, उभयलिङ्गत्वात्, इत्यनुमानस्यावस्थाभेदमादाय सदोषे जीवेऽप्युभयलिङ्गत्वस्य विद्यमानत्वाद् व्याभिचारशङ्कावारणार्थं "प्रत्येकमतद्वचनादि" ति भवन्मतम्। तत्र च प्रतिपर्याय-

मुभयलिङ्गत्वश्रवणादुभयलिङ्गत्वमनवस्थाभेदनिबन्धनमत्र विवक्षितमिति खलु साधनीयम्, नतु प्रतिपर्यायमदोषत्ववचनात्। तेन हि स्वाभाविकं निर्दोषत्वमुभयलिङ्गत्वेन साध्यत इति पुनरपि व्यभिचाराशङ्का तदवस्थैव भवति। ब्रह्म, निर्दोषम्, निरस्तसमस्तदोषत्वादिति न्यायस्वरूपे हेतुसाध्ययोरैक्यमिति त्वन्यदेतत्। अतः—वेदान्तेषु बहुषु स्थलेषु भेदवाक्यानामपि विद्यमानत्वात् सविशेषपरमाशङ्क्य तन्निरासार्थमिदं सूत्रमित्येव विवरणं साधु॥

"अरूपवदेव हि तत्प्रधनत्वादि" त्यादिसूत्राणीदानीं समालोचयामः। इदं हि सूत्रं श्रीभाष्यानुयायिभिः स्वमतानुगुणतया विवृतम्। अयमेतेषामाशयः—"अरूपवदेव हि तत्प्रधानत्वात," "प्रकाशवच्चावैयर्थ्यात्," "आह च तन्मात्रम्।" "दर्शयति चाथो अपि स्मर्यते" इति सूत्रचतुष्टयं हि न भगत्पादमतानुगुणम्। अरूपमेव हीति वक्तव्ये अरूपवदिति वतिप्रयोगो हि ब्रह्मणः शरीरितुल्यत्वं बोधयतीति। इदमेवास्माकं वक्तव्यम्—यदत्र मते—तन्निर्वाहकत्वादित्यत्र न केवलं तत्पदेन शरीरग्रहणेन तन्नियामकत्वेन विवक्षा न संभवति, किन्तु भोक्त्रापत्तिसूत्रादिसिद्धस्यैव पुनरपि "न स्थानतोऽपि" इति प्रथमसूत्रार्थसाधितस्यैव वा तन्मत उपपादनाद् अरूपवत्सूत्रवैयर्थ्यमपि समापतति। अरूपपदं बहुव्रीहिसमासेन निर्गुणं बोधयति, अरूपवत्पदमपि तद्धितान्तस्य रूपवत्पदस्य नञ्तत्पुरुषेण निष्पन्नं तदेव तु बोधयति। सति चैवमरूपमित्येव वक्तव्ये 'अरूपवत्' इति प्रयोगः कथं श्रीभाष्यमतानुयायिनामेवानुकूलम्। मात्रालाघवं तु वैयाकरणानामेव पुत्रोत्सवाय, न वैयासिकानामपि। ब्रह्म निर्गुणमिति बोधनं ह्यवाङ्मनसगोचरस्येदन्तया निर्देशासंभवाद् न संभवतीति, "अथात आदेशो नेति नेति" इति प्रक्रियया रूपवद्

ब्रह्मेत्यादिरूपेणैव हि ब्रह्म निरूपणीयमिति मतुप्सार्थक्यमद्वैतमतेऽपि संभवत्येव। सत्यं श्रीभाष्यकारा अत्र तत्पदं व्यस्तमेव मन्यन्ते, परन्तु नैतद्युक्तम्, वैयर्थ्यात्। प्रकरणादेव हि तदर्थलाभः संभवति, 'प्रधानत्वात्' पदमपितु श्रीभाष्यमते न स्वरसम्। प्रधानत्वपदेन हि मुख्यात्वादित्येव स्वरसतोऽर्थः प्रतीयते, न नु निर्वाहकत्वादिति। अनेन चेदं ज्ञायते—यत्सत्यं सगुणमपि वेदान्तेषु प्रतिपाद्यते, परन्तु न तन्मुख्यम्, किन्तु निर्गुणमेवेति। श्रुतौ हि उपासनार्थं ब्रह्मणो बहूनि रूपाणि कल्प्यन्त इति तु सत्यम्, तात्पर्यविषयत्वं तु न तेषु गुणेषु; अन्यथा "मनो ब्रह्मेत्युपासीत" इत्यादौ कल्पितं मनसो ब्रह्मत्वमपि पारमार्थिकं स्यादिति। उपासनाविषयास्तु अन्यत्र कल्पिता दृष्टाः, इति कथं ब्रह्मण्यप्युपास्ये सत्यकामत्वादयो न कल्पिता भविष्यन्ति। श्रीभाष्यकारा हि पुरुषार्थत्वाद् ब्रह्मण उपास्यस्य पारमार्थिकं सगुणत्वमपि समन्वयसूत्रेण प्रतिपादयन्ति, परन्तु समन्वयशब्दस्य तात्पर्यविषयत्वादित्यस्मिन्नेवार्थे स्वारस्यात्, पुरुषार्थतयाऽन्वयादिति विवरणं न सूत्राक्षरानुगुणमिति सर्वविदितमिदम्। एतेन—न ह्युपासनार्थानां परमार्थतेत्यस्ति नियमः; तथा सति "आत्मेत्येवोपासीते" त्युपास्यतया निर्दिष्टस्यात्मैक्यस्याप्यपारमार्थ्यप्रसङ्गात्" इति मार्ताण्डोक्तिरपि—व्याख्याताः; नहि भगवत्पदा अत्रोपासनां मन्यन्ते; इतिपदसमभिव्याहारात्, किन्तु ज्ञानमेवेति बृहदारण्यकभाष्य एव व्यक्तम्॥

अत एव "प्रकाशवच्चावैयर्थ्यमि" ति सूत्रमपि सावसारं भवति। यतस्तात्पर्याविषयत्वे गुणानां ब्रह्मणि तत्कल्पनावैयर्थ्यशङ्का स्वरसत उदेतीति, तत्समर्थनमत्र काम्यते प्रकाशदृष्टान्तेन। अत्र प्रकाशपदेन लोकसिद्धप्रकाश एव दृष्टान्ततया विवक्षणमर्हति, नतु "सत्यं ज्ञानमि" ति वाक्यम्। न हि सूत्रकाराः कुत्रापि "सत्यं ज्ञानमनन्तं ब्रह्मे" वाक्यं निर्विशेषप्रकाशस्वरूपब्रह्मपरं

मन्यन्त इति श्रीभाष्यानुयायिनो वक्तुमर्हन्ति, येन—"सत्यं ज्ञानमनन्तं ब्रह्म" त्यादिभिर्निर्विशेषप्रकाशैकस्वरूपं ब्रह्मावगम्यते, "यथा सत्यं ज्ञानमित्यादिवाक्यावैयर्थ्यात् प्रकाशस्वरूपत्वं ब्रह्मणोऽङ्गीक्रियते," इत्यादि भाष्यमुपपन्नं भवति। यदि तु परमतरीत्या दृष्टान्तः, तर्हि तु परमते सगुणवाक्यानामप्यवान्तरप्रामाण्यस्वीकारान्नाशङ्कया एवोत्थितिः। परे हि सत्यादिवाक्यं सगुणवाक्यं च सर्वं निर्विशेषब्रह्मबोधकतयैव प्रमाणं मन्यन्ते। श्रौतज्ञानादिपदपरित्यागेन प्रकाशपदप्रयोगस्वारस्यमपि श्रीभाष्याभिमतं न सूत्रकाराभिमतमिति ज्ञापयति। नहि प्रकाशपदेन सत्यज्ञानादिवाक्यमुपस्थाप्यते॥

श्रुतिप्रापितेषु गुणेषु केषुचित् सार्थक्यम्, केषुचित्तु वैयर्थ्यमिति शाङ्काया अकस्मात् गुणाविवक्षादीनां पूर्वसूत्रेष्वसूत्रणे कथमुत्थितिरपि समुदेति? अतः ब्रह्म, सगुणम्, प्रकाशवत्, उपासनार्थतया तु गुणानां सार्थक्यमित्येवात्र सूत्रार्थो वर्णनीयः। यथाच वियद्व्याप्यावतिष्ठमानः प्रकाशः अङ्गल्याद्युपाधियोगेनार्जवादिकं प्राप्नोति, विषयविशेषाणां सूक्ष्माणां ग्रहणार्थतया कल्पितवक्रादिरूपोऽपि सप्रयोजनः, एवमत्रापीति तु भगवत्पादाभिमतोऽर्थः। एवं चावैयर्थ्य एव वस्तुगत्या प्रकाशदृष्टान्ततात्पर्यं पर्यवस्यतीति न दोषः॥

एतेन—प्रकाशस्यावैयर्थ्ये दृष्टान्ततयाऽन्वयः सूत्रवाक्यात् स्वरसतः प्रतीयते, परैस्तु—औपाधिकाकारायोगे दृष्टान्ततया योजनात् स्वरससिद्धार्थत्याग इति व्याससिद्धान्तमार्ताण्डोक्तिरपि—व्याख्याता। यतो वयमपि वस्तुगत्याऽवैयर्थ्य एव प्रकाशदृष्टान्ततामभिप्रेमः। द्वारं तु केवलमौपाधिकाकारायोगः। सूत्रकारा हि चैतन्यमात्ररूपत्वस्य सत्यकामत्वादिभिर्वस्तुगत्या विरोधमेव मन्यन्ते नाविरोधम्। व्यवहारदृष्ट्या तु अविरोधं मन्यन्त इति त्वन्यदेतत्।

अत एव—"एवमप्युपन्यासादविरोधं बादरायणः" इति सूत्रेऽपिशब्दस्वारस्यम्। अत्र हि सूत्रे विरोधेऽप्यविरोधो हि सूत्र्यमाणः रूपान्तरेण विरोधः, रूपान्तरेणाविरोध इति कल्पनायामेव स्वरसो भवति। अन्यथाऽविरोधं बादरायण इत्यनेनैव गतार्थत्वात् व्यर्थमेवै "वमपी" तिपदम्। अनेन हीदं ज्ञायते—यत सत्य ज्ञानादिबोध्यनिर्विशेषप्रकाशस्वरूपत्वं सत्यकामत्वं च विरुद्धमिति, सति चैवं कथं वाऽविरोधसाधनात्पूर्वमेव—"प्रकाशवदि" ति सत्यज्ञानादिदृष्टान्ततासंभवः? इदमत्रालोचनीयम्—यत् चतुर्थाध्यायप्रतिपिपादयिषितमविरोधं गृहीत्वा किं "प्रकाशवच्चे"ति सूत्रस्य प्रवृत्तिः; उत "प्रकाशवच्चे" ति सूत्रसिद्धमौपाधिकं सत्यकामत्वादिकं गृहीत्वा चतुर्थाध्यायेऽविरोधोपसंहरणमिति। तत्र प्रथमपक्षे विरोधशङ्काया एवानवसरः। नहि उभयलिङ्गत्वं प्रथमं साधितं कल्पितमिति शङ्काया लेशतोऽप्युत्थितिरस्तीति व्यर्थमत्राविरोधसमर्थनम्। द्वितीयपक्षे तु विरोधस्य निर्विशेषपारमार्थिकतायां पुरःस्फूर्तिकत्वात् व्यवहारदृष्ट्याऽविरोधसमर्थनार्थमेव चतुर्थाध्यायप्रवृत्तिः। "प्रकाशवच्चेति" तु सत्यकामात्वादिकल्पितत्वव्यवस्थामूरीकृत्य स्वरसत एवोपपद्यते॥

यद्यप्येवमप्युपन्यासादिति सूत्राभिमतोऽविरोध एकस्य व्यावहारिकत्वमपरस्य पारमार्थिकत्वमिति कल्पनया सम्भवति, परन्तु सूत्रकाराभिमतं पारमार्थिकत्वं चैतन्यमात्रस्य, व्यावहारिकत्वं तु सत्यकामत्वादेरिति, न केवलं "प्रकाशवच्चावैयर्थ्यमिति" सूत्रमात्रेणावगम्यते, किन्तु—"आह च तन्मात्रम्" इति सूत्रस्यापि साहाय्येनेति, सूत्रद्वयसिद्धमेवार्थजातं पृथक् पृथक् जैमिन्यौडुलोमिमतत्वेन संगृह्य निष्कृष्यानन्तरमेवै "वमप्युपन्यासात्"ति सूत्रेण प्रतिपादयतीति सिद्ध्यति। "चितितन्मात्रेण" इति तन्मात्रपदेन चायमर्थः प्रत्यभिज्ञायते। एवं च—"आह च तन्मा-

त्रमि''ति सूत्रमप्यद्वैतमतमेवानुगृह्णाति। अत्र तन्मात्रपदेन तदितरव्यवच्छेदः प्रतिपाद्यमानस्य गम्यते, तच्च निर्विशेषमात्रप्रतिपाद्यताविवक्षायामेव स्वरसं भवति ॥

न केवलं सगुणवाक्यशेषा एव निर्गुणबोधकाः, किन्तु स्वतन्त्राण्यपि श्रुति-स्मृति वाक्यान्यत्र प्रमाणानीति प्रदर्शनार्थम्—"दर्शयति चाथो अपि स्मर्यते'' इति सूत्रम्। अनेन हि स्पष्टमिदं प्रतिपाद्यते—यत् प्राकाशदृष्टान्तो ब्रह्मणि गुणानामौपाधिकत्वेन सार्थक्यव्यवस्थापनार्थ एव, यतः सूत्रकारोक्तं निदर्शनमिदं न स्वतन्त्रम्, किन्तु श्रौतमपीति सूत्रयन्ति सूत्रकाराः—"अत एव चोपमा सूर्यकादिवत्'' इति। इदं हि सूत्रं सूर्योपमया ब्रह्मणो निर्दोषत्वसमन्वयार्थमिति श्रीभाष्यकाराः। अद्वैतिनस्तु सगुणत्वस्यैपाधिकत्वसमन्वयार्थमिति मतद्वयार्थनिष्कर्षः ॥

इदमत्र श्रीभाष्यम्—"अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् तत्र तत्रावस्थितोऽपि निर्दोषः'' इति। प्रतिबिम्बसूर्यकादयोऽपि तु सदोषा एवेति निर्दोषत्वसाधने न तस्य दृष्टान्ततासम्भव इति—न सूत्रस्वारस्यम्, यतो ह्युपाधिदोषाः सर्वेऽपि प्रतिबिम्बगता भवन्तीत्यनुभवसिद्धमिदम्। एतेन—घटाकाशादिदृष्टान्तोऽपि श्रीभाष्यगतो—व्याख्यातः। घटाकाशोऽपि हि घटोपहितो घटवदनित्य एव विशिष्टः। अद्वैतमते तु प्रतिबिम्बानामिव ब्रह्मणोऽप्युपाधिगुणैरेव सगुणत्वम्, नतु स्वत इति व्यवस्थापनान्न दृष्टान्तताऽसम्भवः। वस्तुतस्तु नात्र घटाकाशादिदृष्टान्तता; उत्तरसूत्रानुत्थानात् ॥

एतेन—"अम्बुवदग्रहणात्तु न तथात्वमि''ति सूत्रमपि—व्याख्यातम्, इदं हि सूत्रं ब्रह्मणः प्रतिबिम्बत्वाभावादुक्तव्यवस्थानुपपत्तिशङ्कापरमिति मतद्वयसम्मतमिदम्। अत्र च जलबिम्बयोर्व्यवधानमिवोपधिब्रह्मणोर्व्यवधानाभावाद् न ब्रह्मप्रतिबिम्बत्वमिति

शङ्काहृदयम् । इदमेवात्र पृच्छ्यते—यत् सर्वशरीरकब्रह्मवादे शरीरशरीरिभावप्रयुक्तस्य सदोषत्वस्य प्रतिबिम्बदृष्टान्तेन कथं परिहारसम्भव इति ?

"वृद्धिह्रासभाक्त्वमि"ति सूत्रं तु श्रीभाष्यमतेऽत्यन्तं प्रतिकूलम् । अत्र हि दृष्टान्तदार्ष्टान्तिकभावविवक्षितं सारूप्यं न बिम्बप्रतिबिम्बभावेन, किन्तु औपाधिकधर्मवत्त्वेनेति स्पष्टं प्रतीयते । श्रीभाष्यमते तु—वृद्धिह्रासादिभाक्त्वं निरस्यते, इति सूत्रयोजनमिदं सूत्राक्षराननुगुणम्, नञध्याहारापत्तिश्च । अत्र हि वृद्धिह्रासभाक्त्वं साध्यतया निर्दिश्यमानं निषेध्यतया साध्यमिति कथं सूत्रकारहृदयङ्गमं स्यादिति सर्व एव समालोचयन्तु ॥

तदिदं सिद्धम्—यत्—"एवमप्युपन्यासादि"ति बादरायणसूत्रेणाप्यद्वैतमतस्यैव परिपोषणाद् न "प्रकाशवत्" "आह च तन्मात्रमि" त्यादिसूत्राणां श्रीभाष्याभिमतं योजनं सम्भवदुक्तिकम् । अद्वैतमते हि अनेकजीववादे यावत्सर्वमुक्ति ईश्वरभाव एव मुक्तिरित्येव सिद्धान्ताद् अपहतपाप्मत्वादिकमपि दहरविद्याप्रकरणादावाविर्भूतजीवधर्मतया प्रतिपाद्यमानं मुक्तधर्म इति सिद्धान्तलेशसंग्रहादौ व्यक्तम् । एवं च "ब्राह्मेण रूपेणे" त्यादिभिः स्रष्टृत्वादिकं मुक्तानां प्रतिपाद्यत इत्येव तत्त्वम् ॥

बादरायणाचार्या हि न केवलं "न स्थानतोऽपि" इत्यादिसूत्रैः, किन्तु मुक्तेर्गतिनिरपेक्षत्वव्यवस्थापकैः स्वाप्निकमायिकत्वव्यवस्थापनपरैश्चान्यैः सूत्रैरप्यद्वैतमतमेव स्वादरणीयं मन्यन्ते । योगाचारमतादद्वैतमतस्य महान् विशेषः, इति न योगाचारमतनिरसनमेवाद्वैतमतनिरसनम् ॥

"नाभाव उपलब्धेः" इति अर्थानामभाव उपलभ्यमानत्वेन निरस्यते । इदं च येषां मतेऽर्थस्य नोपलब्धिरेव, तस्यैव मतस्य निरसनं भवितुमर्हति । न हि योगाचारमत इवाद्वैतमतेऽर्थस्य ज्ञाना-

तिरिक्ताकारवतो नोपलब्धिरेव स्वीक्रियते। उपलभ्यमानस्यार्थस्य बाधितत्वमात्रमेव हि भगवत्पादा मन्यन्ते। एतेन—"वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रमपि—व्याख्यातम्। इदं हि सूत्रं स्वप्नवैधर्म्येण जाग्रद्दशायामर्थसत्त्वं साधयति। तच्च—"स्वाप्निकस्यार्थस्य न प्रतीतिरेवेति तु सत्यम्। जाग्रति तु पृथगर्थानामुपलभ्यमानत्वात् न तद्दृष्टान्ततासम्भवः—'इत्युपपादनपरमेव। तत्र स्वाप्निकानामर्थानां प्रत्यहं बाध्यमानत्वात् स्वाधिष्ठानचैतन्यव्यतिरेकेणाभावनिर्णयेन प्रातिभासिकत्वमद्वैतिनो मन्यन्ते—सूत्रकाराश्च "मायामात्रं तु" इति सूत्रयन्तः। तत्र योगाचारमतेऽर्थानामप्रत्यक्षत्वाद् अनुमानेन ज्ञानाकारतयैव तेऽनुमीयन्ते, इति तद्दृष्टान्तेन जाग्रद्दशायामप्यर्थानामनुमेयतावादिनां तेषामेव निरास एवानेन सूत्रेण क्रियते। तथाचार्थानामुपलभ्यमानत्वेन प्रत्यक्षत्वाद् ज्ञानाकारतानुमानं बाधितमित्येव तात्पर्यम्, नतु स्वप्नदृष्टान्तेनार्थमिथ्यात्वनिरासपरमपीदं सूत्रम्॥

अद्वैतमते हि स्वाप्निका अपि प्रत्यक्षा जाग्रत्कालिका अपि प्रत्यक्षा इति नानुमानसाध्यमर्थस्वरूपम्। सूत्रकारसाधितस्वाप्निकरथाद्यभावेनैव यदि योगाचारमत इव ज्ञानाकारता साधिता स्यात्, तर्हि सत्यं स्वाप्निकदृष्टान्तेन मिथ्यात्वनिरासेऽपि सूत्रस्य तात्पर्यमूरीकर्तुं शक्यते। न ह्येदं श्रीभाष्यकारानुयायिभिरपि स्वीकर्तुं शक्यम्; अन्यथा स्वाप्निकानां तन्मतरीत्येश्वरसृष्टत्वात् तद्वैधर्म्येणाकाशादीनामनीश्वरसृष्टत्वे सूत्रकारतात्पर्यं तैरङ्गीकरणीयं स्यात्। सत्यमनेन सूत्रेण वैधर्म्यं स्वाप्निकानां जागरिकाणां च सूत्रकारा मन्यन्ते। नह्यद्वैतमतेऽपि स्वाप्निकानां जागरिकानां च न वैधर्म्यम्। स्वाप्निकाः व्यवहारदशायामेव बाध्याः, जागरिकास्तु न तथेति सर्वानुभवसिद्धमिदम्। श्रीभाष्यमते तु न किमपीश्वरसृष्टत्वाविशेषाद्वैधर्म्यं स्वाप्निकानां जागरिकाणां चेति "वैधर्म्याच्चे" ति न

सङ्गतं भवति। अतोऽपि हेतोः सूत्रकाराः स्वाप्निकमायिकत्वमभिप्रयन्ति। ज्ञानक्षणिकतावादो योगाचाराणां नाद्वैतिनामिति विशेषोऽपि सर्वविदित एव। "क्षणिकत्वाच्च" इति सूत्रेण सूत्रकारा अपीममर्थं सूत्रयन्त्येवेति, योगाचारमतनिरसनेनैवाद्वैतमतनिरासोऽपीति सिद्धान्तमार्तण्डकाराणामन्येषां च कल्पना छिन्नमूलैव। एतेन—"जगन्मित्थ्यात्ववादी योगाचारः" इति—परास्तम्। मित्थ्यात्वं ह्यद्वैताभिमतं न निःस्वरूपत्वम्, किन्तु पारमार्थिकत्वेनाभावः। अत एवाकाशादीनां सृष्टिराम्नायमानोपपद्यते। योगाचरमते त्वर्था निःस्वरूपा इति कथं तत्साम्यमद्वैतमतस्य ?

एकसत्तावादः, स्वरूपेण त्रैकालिकनिषेधश्चाद्वैतिनां यद्यपि कल्पितमेव स्वरूपं प्रपञ्चानां गोचरयतीति सांवृतसत्यत्ववादियोगाचारमतेन साकं प्रपञ्चमित्थ्यात्वे सत्यमस्ति साम्यम्; तथापि नेदं निःस्वरूपत्वं केवलानुमानगम्यम्, किन्तु श्रुतिमूलानुमानगम्यमिति श्रुत्यप्रामाण्येन केवलानुमानेन सांवृतसत्यत्वमर्थानां न साधयितुमलमित्येव "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रतात्पर्यम्। न ह्यद्वैतिनो योगाचारा इव केवलानुमानसाध्यं प्रपञ्चमित्थ्यात्वं मन्यन्ते। द्वितीयाध्यायद्वितीयपादगतत्वाच्चैषां सूत्राणां श्रुत्यमूलानुमाननिरसनपरत्वमेव गम्यत इति "स्वरूपेण त्रैकालिकनिषेधप्रतियोगित्वमि" त्यद्वैतिनां पक्षो नानेनाधिकरणेन निरस्यते। अत एव "क्षणिकत्वाच्च" इति ज्ञानक्षणिकत्वमप्यप्रामाण्यहेतुतयाऽत्र निर्दिश्यते। न ह्यद्वैतिनो ज्ञानक्षणिकतावादिन इति न तिरोहितमिदं तत्त्वम्। स्वाप्निकानामुत्पत्तिवर्णनम्, तदनन्तरमेव "न तत्र रथा रथयोगाः" इति निषेधवचनं चैव खलु मायिकत्वसाधकतया 'मायामात्रमि'ति सूत्रेण प्रतिपाद्यते। न च योगाचारमते एकस्मात् चैतन्यादाविर्भावः सर्वेषां तत्रैव बाधश्चोरीक्रियते। तथाच निरधिष्ठानारोपवादनिरासार्थमेव "क्षणिकत्वाच्चे"ति सूत्रमिति वक्तव्यम्।

यथाच ज्ञानक्षणिकतावादपरित्यागे स्वरूपचैतन्यस्यैव सत्यस्याधिष्ठानतास्वीकारे च योगाचारमतस्याद्वैतमतादविशेषः, तथा बृहदारण्यकभाष्यादौ व्यक्तम्। तादृशस्तु योगाचारो नात्र निरस्य इति "क्षणिकत्वाच्चे" त्यादिनैवावगम्यते। सर्वथा तु नाद्वैतमतनिरसनं सूत्राकाराभिमतम्, प्रत्युत तत्समर्थनमेव।

अयं भावः—लोकसिद्धं स्वाप्निकानामभावं गृहीत्वा योगाचारैर्जागरिकार्थानामप्यभावो मन्यते। इदं च लोकानुभावो जागरिकाणां स्वाप्निकानां च विलक्षण एव वर्तत इत्युपपादनेन निरस्यत इति स्थितिः। शास्त्रसिद्धस्तु स्वाप्निकानामभावो न केवलमपलापरूपः, किन्तु स्वाधिकरणतया प्रतीयमाने स्वस्योपलभ्यमानस्यैवाभावरूपः। इदमेव च मिथ्यात्वम्। अयं चाभावोऽर्थानां दृश्यत्वेन हेतुना, जडत्वेन हेतुनाऽन्येन वा साध्यते, "नाभाव उपलब्धेः" इति तु यो दृश्यत्वेनाभावनिषेधः साध्यते, स चापलापात्मकाभावनिषेध एव भवितुमर्हति। यस्य यस्य दृश्यत्वम्, न तस्यापलापः—यथा ज्ञानस्येति हि वस्तुस्थितिः। यदि हि "नाभाव उपलब्धेरि" त्यादिकं प्रपञ्चसत्यत्वसाधकतयाऽत्र मन्यते, तर्हि दृश्यत्वं सत्यत्वव्याप्यमिति वक्तव्यम्। इदं च स्वाप्निकेऽर्थे व्यभिचरितम्। स्वाप्निकानामपि सत्यत्वविवक्षायां तु "वैधर्म्याच्च न स्वप्नादिवदि" त्यनन्तरसूत्रासङ्गतिः। अनेन हि सूत्रेण लोकदृष्ट्या स्वाप्निकानामपलापः कथञ्च कर्तुं शक्यते, नतु जागरिकाणामित्येव बोध्यते। ततश्च लोकसिद्धानुभवमूलकार्थनिषेधायोगपराण्येवोक्तानि सूत्राणि। सति चैवं शास्त्रसिद्धमिथ्यात्वांशे तु न स्वाप्नजागरिकयोर्वैषम्यं सूत्रकारा मन्यन्ते।

उत्पद्यमानस्य सतो मिथ्यात्वं हि सूत्रकाराभिमतं स्वाप्नजागरिकोभयसाधारणं स्वाप्निकमादायापि समर्थयितुं शक्यम्, जागरिकमादायापि, उभयमप्यादाय वा; मीमांसाया न्यायप्रधान-

त्वात् समानन्यायविषयान्यतरमित्थ्यात्वव्यवस्थापनेनैवेष्टनिर्वाहात् स्वाप्निकमित्थ्यात्वसाधने क्लेशाभावं मत्वा "मायामात्रमिति" सूत्रम्। "सन्ध्ये सृष्टिराह ही" ति सृज्यमानत्वेन पूर्वपक्षः, सृज्यमानत्वेऽपि मित्थ्यात्वोपपादनेन सिद्धान्त इति वस्तुस्थितिः। सति चैवं न्यायसाम्यात् आकाशादीनामपि सृज्यमानानां मित्थ्यात्वमविरुद्धमिति न्यायसिद्धमिदम्। मित्थ्यात्वे हि स्वाप्निकानां स्वप्नतोत्यनन्तरकालिकबाध्यत्वमेव प्रयोजकम्। तच्च जागरिकाणामपि वाचारम्भणश्रुत्या बाध्यतया श्रुतानामविशिष्टमेव। अतः स्वाप्निकमायामात्रत्वोक्तेरत्रापि तात्पर्येऽपि न क्षतिः॥

परेतु—"मायामात्रं तु" इति स्वाप्निकमायामात्रत्वं यन्निरूपितम्, तत एव जागरिकप्रपञ्चमित्थ्यात्वासिद्धिः, "वैधर्म्याच्च न स्वप्नादिवत्" इति हि विलक्षणस्वभावत्वमुभयोः प्रतिपाद्यते। प्रातिभासिकं हि स्वाप्निकम्, व्यावहारिकाश्च जागरिकाः। अत एव—अनभिव्यक्तस्वरूपत्वहेतुसमन्वयः। न हि स्वाप्निकेष्विव जागरिकेष्वपि तत्तदुत्पादकावयवादिपूर्णसामग्र्यभावो वर्तत इति जागरिकमित्थ्यात्वं सूत्रकारैरेव पृथक् सूत्रणीयम्। तच्च सूत्रितमेव सूत्रकारैः—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति। भगवत्पादा अपि—"न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति। प्रतिपादितं हि—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इति समस्तस्य प्रपञ्चस्य मायामात्रत्वम्" इति वदन्तोऽत्रानुकूला इति—वदन्ति। एतेन—स्वाप्नप्रपञ्चानां मायिकत्वं सूत्रयन् सूत्रकारो जाग्रत्प्रपञ्चानां कथं न मायिकत्वं सूत्रयतीति शङ्कापि—परास्ता। मायापदं हि पद्मपुराणादिषु—मायावादमित्यादावविद्यायामेव बादरायणाचार्यैः प्रयुक्तमिति सर्वसम्मतमिदम्। "मायावादिनः" इति परैस्सर्वैरप्यद्वैतिन एव व्यपदिश्यन्त इत्यपि न विप्रतिपन्नम्। "जनकस्य कुले जाता देवमायेव निर्मिता" इत्यादिवाक्येऽपि विनोत्पादक-

सामाग्रीमुत्पन्नानिर्वचनीयस्वरूपमेवेत्येव विवक्षितमिति मायामात्र-पदस्येश्वरसृष्टमित्यर्थवर्णनं श्रीभाष्यकाराणां कथं सूत्रारूढम् ?

भगवद्गीताया श्रीभाष्यमत एवानुकूल्यम्, नाद्वैतमत इति तु श्रीभाष्यकाराणांम् तद्नन्तरो विचारः। अयमाशयः—

भगवद्गीतादिसमालोचनप्रसङ्गे प्रथममद्वैतविरुद्धतया स्पष्ट-तमानि स्वमतानुगुणानि च वाक्यानीमानि श्रीभाष्यकारा उपक्षिपन्ति—

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।
असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते॥"
"मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः।
नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम्॥"
"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय॥"
"मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।"
"विष्टभ्याहमिदं सर्वमेकांशेन स्थितो जगद्॥"
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" इति

अत्र प्रथमश्लोकेन कर्मकृताचित्संसर्ग-हेयगुणसम्बन्धानर्ह-त्वबोधनद्वारा निरस्तसमस्तदोषगन्धत्वं परमात्मनः प्रतिपाद्यते। अनन्तरश्लोकेन स्वनियम्यत्वेन प्रजानां स्वस्य शेषत्वम्, स्वस्य सर्वभूताधीनस्थितिकत्वाभावात् स्वस्य सर्वभूताशेषत्वम्, स्वनिय-म्यानामपि भूतानां न स्वस्मात् पृथगवस्थितिरिति बोधनद्वारा विचित्रशक्तियोगेन समस्तकल्याणगुणत्वम्, अनन्तरेण सार्धेन परमात्मन एव सृष्टिलयकारणत्वेन शेषित्वेन सर्वतो ज्ञानबलादिगुणाभ्तरा-धिक्येन सर्वशरीरित्वेन च जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनिय-

मनादिलीलत्वम्, अनन्तरं श्लोकार्धेन चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया स्वरूपत्वम्, अनन्तरश्लोकद्वयेन च बद्धमुक्तजीवविलक्षणत्वप्रतिपादनद्वारा सर्वभूतनियन्तृत्वं च प्रतिपाद्यते। इदं च सर्वं सविशेषब्रह्मवाद एव युज्यते॥

अत्र "मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः। नच मत्स्थानि भूतानि पश्य मे योगमैश्वरमि"ति श्लोकांशाभ्याम्—चैतन्ये सर्वप्रपञ्चाध्यासः, परमात्मनस्तु परस्पराध्यासेऽपि तत्र संसर्गमात्राध्यासः, अध्यस्तस्य सर्वस्य प्रपञ्चस्य ब्रह्मण्यभावश्च प्रतिपाद्यते, इति निर्विशेषब्रह्मवाद एव स्वारस्यम्। नवमाध्यायो हि—"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे। ज्ञानं विज्ञानसहितं यद् ज्ञात्वा मोक्ष्यसेऽशुभात्।" इति ज्ञानयोगं प्रस्तुत्य तदुदृष्ट्या सर्वप्रपञ्चमिथ्यात्वेऽपि तज्ज्ञानप्राप्तिर्भक्तियोगाधीनेति ज्ञापयितुमेव प्रवृत्तः, इति ज्ञानयोगाङ्गतया प्रतिपाद्यमानसर्वप्रपञ्चमित्थ्यात्वं भगवद्गीतारूढं निर्विशेषवादस्यैवानुकूलम्। "मत्स्थानि सर्वभूतानि" "नच मत्स्थानि" "पश्य मे योगमैश्वरमि"ति वाक्यैर्मयि अविद्यमानानामपि मत्स्थत्वं मदीयैश्वरयोगसामर्थ्याधीनमिति वर्णनेनेश्वरावस्थायामेव सर्वस्य परमात्मनि सत्त्वमिति बोधनद्वारा सर्वप्रपञ्चाध्यासाधिष्ठानसकलजगत्कारणपरमात्मस्वरूपं सगुणस्वरूपमवलम्ब्यैव भक्तियोग इति गम्यते, इति नवमाद्यध्यायेषु सगुणस्वरूपं बोध्यमानमद्वैतवादस्य न प्रतिकूलम्॥

एतेन—"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इति श्लोकत्रयमपि—व्याख्यातम्। अत्र क्षरशब्दस्य जीवपरत्वे मतद्वयस्यापि न विप्रतिपत्तिः, अक्षरशब्देन तु मुक्तो गृह्यत इति

श्रीभाष्यमतम्, माया प्रकृतिर्वा गृह्यत इति त्वद्वैतमतम्। अत्र च कारणं ते मन्यन्ते—"परमात्मेत्युदाहृतः" इत्यनेन "परमात्मा व्यवस्थितः" इति पुरुषसूक्तं स्मार्यते। तत्र—"अक्षरः परमः स्वराट्" इति मुक्तस्य ग्रहणाद् अक्षरशब्दो मुक्तपर इति॥

इदं च श्रीभाष्यानुयायिनाम्—"स ब्रह्म स शिवः स हरिः सेन्द्रस्सोऽक्षरः परमः स्वराट्" इति वाक्येऽध्ययनपरम्परया गृह्यमाणे हरिपदपाठपरित्यागेन पाठमेव साधु मत्वैव विवरणम्; अन्यथा शिवादिभिन्नत्वमिव विष्णुभिन्नत्वमपि भगवत आपद्येतेति तदीयं हृदयम्॥

अद्वैतिनस्तु—अत्राक्षरशब्देन परमात्मन एव पुरुषशब्देन प्रक्रान्तस्य ग्रहणात् तस्यैव स्वप्रकाशस्वरूपं स्वराट्पदेन गृहीत्वा शिव-विष्णवाद्यभेदः प्रतिपाद्यते, यतस्तस्यैव तुरीयस्यांशभूता ब्रह्म-विष्णु-रुद्रादय इति सुबालोपनिषदाद्यनुसारेण मन्यन्ते—"स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराडि"ति पाठस्यैव साधुत्वं मन्वानाः। अत्र 'सोऽक्षरः' इति जगत्कारणतया प्रस्तुततुरीयपुरुषस्य साम्यावस्थापन्नसत्त्वरजस्तमोगुणात्मकप्रकृत्युपहितस्य स्वांशतया शिव-विष्णवाद्यभेद इव निर्विशेषचैतन्यांशत्वात् स्वस्य ततोऽभेद इति प्रतिपादनार्थम्—"सोऽक्षरः परमः स्वराट्" इति वाक्यांशः। तथाच पुरुषापेक्षयाप्युत्तमं निर्विशेषमेव ब्रह्मेति तद्भावः। अत एव—"परमः स्वराट् इति परमपदम्। पुरुषसूक्तं हि स्वप्रतिपाद्यं पुरुषशब्देनैव व्यपदिशति, इति पुरुषादप्युत्तमत्वेन निर्विशेषमेव पुरुषोत्तमपदार्थ इति ज्ञाप्यते; परमपदस्वारस्यात, इति "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यक्षरपदेन प्रकृतेरेव विवक्षा। तथाच चिदचिदतीतः पुरुषोत्तमः। इति जीवाविद्यातीतत्वमेव पुरुषोत्तमत्वमत्र विवक्ष्यते, सर्वभूतमध्ये शिवादीनामिव मुक्तानामपि ग्रहणसंभवेन तस्य पृथग्ग्रहणस्यानपे

क्षितत्वात्। तथाच षोडशाध्यायगतौ ज्ञानयोगस्थाविमौ श्लोकौ निर्विशेषवादस्यैवानुकूलाविति सिद्धम्॥

इतः परं विष्णुपुराणगता अपि केचन श्लोका श्रीभाष्यकारैरालोचिता आलोच्यन्ते। ते यथा—

स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद् भुवनान्तराले॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद् धृतभूतसर्गः
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे॥
स ईश्वरो व्यष्टिसमष्टिरूपः अव्यक्तरूपः प्रकटस्वरूपः।
सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः॥
स ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम्।
संदृश्यते वाप्यधिगम्यते वा तद्ज्ञानमज्ञानमतोऽन्यदुक्तम्॥"

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि पठ्यते।
मैत्रेय! भगवच्छब्दः सर्वकारणकारणे॥
संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः।
नेता गमयिता स्रष्टा गकारार्थस्तथा मुने!॥
ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञान-वैराग्ययोश्चैव षण्णां भग इतीरणा॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि।
स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः॥"
"ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥"
"एवमेष महाशब्दो मैत्रेय! भगवानिति।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥
तत्र पूज्यपदार्थोक्ति परिभाषासमन्वितः।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः॥"

"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यम् रूपमन्यद्धरेमर्हत् ।।
समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ।।
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ।।"
"एवं प्रकारममलम् नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितम् विष्ण्वाख्यं परमं पदम् ।।
"परः पराणां परमः परमात्माऽत्मसंस्थितः ।
रूपवर्णादिनिर्देश विशेषणविवर्जितः ।।
अपक्षय-विनाशाभ्यां परिणामर्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ।।
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ।।"
"तद् ब्रह्म परमं नित्यमजमक्षरमव्ययम् ।
एकस्वरूपं च तदा हेयाभावाच्च निर्मलम् ।।
तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ।।"
"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ।।
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
बिष्णुनामा स वेदेषु वेदान्तेषु च गीयते ।"
"द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ।।
अक्षरं तत् परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा ।
परस्य ब्रह्मणः शक्तिस्तयेदमखिलं जगत् ।"
"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा
अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिला नवाप्नोत्यतिसन्ततान् ।।

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥"
"प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥
तयोः सैव पृथग्भावकारणं संश्रयस्य च ।
यथा सक्तं जले वातो बिभर्ति कणिकाशतम् ।
शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मनः "
"तदेतदक्षयं नित्यं जगद् मुनिवराखिलम् ।
अविर्भावतिरोभाव जन्मनाशविकल्पवत्"—इति ॥

अयमत्र श्रीभाष्यानुयायिनां व्याख्याप्रकारः—अत्र प्रथमश्लोकेन प्रधान-महदादि-सत्त्वरजस्तमोगुणप्रयुक्त क्लेश-ज्ञानसंकोचककर्मवासनादिहेयप्रत्यनीकत्वं निखिलव्याप्त्या निखिलात्मत्वं च प्रतिपाद्यते । द्वितीयश्लोकेन समस्तकल्याणगुणात्मत्वं दिव्यात्मस्वरूपत्वं वक्ष्यमाणषाड्गुण्योपयोगितया दिव्यमङ्गलविग्रहवत्त्वं च बोध्यते । तृतीयश्लोकेन तेजो-बलैश्वर्य-महावबोध-सुवीर्य-शक्त्यादिषाड्गुण्यम्, क्लेशादिराहित्यं च प्रतिपाद्यते । तुरीयश्लोकेन पूर्वोक्तलक्षणसंपन्नस्य परमात्मनः सर्वेश्वरादिशब्दवाच्यस्य योगसिद्धान्ताभिमतादीश्वराद् वैषम्यं निरूप्यते, यतो व्यष्टि-समष्टिशब्दाभ्यां कार्यकारणभावावस्थचेतनाचेतनवर्गस्य रूपशब्देन तदात्मत्वस्य च वर्णनेनाभिन्ननिमित्तोपादानत्वं प्रतीयते । तच्च योगसिद्धान्ते केवलनिमित्तकारणताया एव स्वीकारात् तत्सिद्धान्तप्रतिकूलमिति तु हृदयम् । पञ्चमेन श्लोकेनैवंविधेश्वरविषयज्ञानस्यैव मोक्षसाधनत्वं प्रतिपाद्यते, यत एवंविधस्वरूपाबोधकानामज्ञानत्वमेव मन्यते । तदेवं श्लोकपञ्चके सगुणब्रह्मज्ञानस्यैव मोक्षसाधनत्वव्यवस्थापनात् सविशेषब्रह्मवादस्यैव प्रामाणिकत्वमवगम्यते ॥

अथेदानीं भगवच्छब्दप्रवृत्तिनिमित्तनिरूपणप्रकरणमपि ब्रह्मभावो न मुक्तिरिति सिद्धान्तानुगुणमिति बोधनार्थम्—"शुद्धे महाविभूत्याख्ये" इत्यादयः श्लोकाः । अत्र—"अशब्दगोचरस्ये" त्यादिके पूर्वश्लोके मुक्तात्मनि भगवच्छब्द औपचारिक इत्युक्तं कथमित्याकाङ्क्षायां मुक्तात्मव्यावर्तकं भगवच्छब्दप्रवृत्तिनिमित्तम्—'शुद्धे महाविभूत्याख्ये' इत्यादिभिः—'शब्दोऽयं नोपचारेण ह्यन्यत्रौपचारिकः' 'इत्यन्तैः विष्णुपुराणषष्ठांश पञ्चमाध्यायगत—७२, ७३, ७४, ७५, ७६, ७७ संख्याकैः श्लोकैः प्रतिपाद्यते ।

इदमप्यद्वैतवादप्रतिकूलमेवेति सविशेषवादस्यैवानुकूलम्। "समस्ताः शक्तयः इत्यादीनि"—"चेष्टा तस्याप्रमेयस्ये" त्यन्तानि तस्मिनेव प्रकरणे सविशेषपराण्येवोपसंहारेऽपि वाक्यानि वर्तन्ते, इति निरूपण-द्वारा "प्रत्यस्तमितभेदम्" इति विचारयिष्यमाणवाक्यस्याप्युपक्रमस्थस्य सविशेषपरत्वमेवेति बोधयन्ति ॥

परमात्मवैलक्षण्येऽपि, मुक्तानां गुणाः सर्वे परमात्मनि वर्तन्त इति निरूपणार्थम्—"एवंप्रकारममलमिति" श्लोकः ॥

न केवलं षष्ठांशमात्रपर्यालोचनेन, किन्तु प्रथमांशसमालोचनेनापि विष्णुपुराणस्य सविशेषविषयकत्वमिति निरूपणार्थम्—"परः पराणाम्" इत्यादयः—"तथा पुरुषरूपेणे" त्यन्ताः प्रवृत्ताः। न केवलं विष्णुपुराणोप-क्रमे, किन्तु तदुपसंहारेऽपि सविशेषमेव विष्णुपदेन ब्रह्म बोध्यत इति प्रति-पादनार्थम्, जीव-ब्रह्मणोः शरीर-शरीरिभावेनैवोपक्रमोऽपीति विवेचनार्थं च—"प्रकृतिर्या मयाऽऽख्याता" इत्यादि—"परस्य ब्रह्मणः शक्तिः" इत्यन्तं प्रवृत्तम्।"विष्णुशक्तिः परा प्रोक्ता" इत्यादयः-"आविर्भावतिरोभावे" त्यन्ताः श्लोकाः परमात्मनोऽविद्यानाश्रयत्वम्, सदृष्टान्तं चिदचितोः परमात्मनियम्यत्वम्, सर्वस्य जगतः पारमार्थिकत्वं च विवेचय-न्ति, इति विष्णुपुराणवाक्यान्यपि सविशेषवादस्यैवानुगुणानि—इति ॥

**अद्वैतिनस्तु—प्रथमस्य श्लोकपञ्चकस्य सविशेषविषयत्वे न विप्रतिपद्यन्ते, परन्तु तज्ज्ञानस्यैव मोक्षसाधनत्वमिति तु न तत्प्रकरणार्थः। षष्ठांशो हि विष्णुपुराणस्य नैमित्तक-प्राकृतात्यन्ति-कप्रलयनिरूपणाय प्रवृत्तः प्रमाध्यायचतुष्टये नैमित्तिक-प्राकृतप्रलयौ विवेचयन् "सत्तामात्रात्मके तत्र ज्ञेयज्ञानात्मनः परे। न सन्ति सर्व-भूतेशे नामजात्यादिकल्पनाः। स ब्रह्म परमं धाम परमात्मा स चेश्वरः। स विष्णुः सर्वमेवैतत् यतो नावर्तते मतिः। प्रकृतिर्या मया प्रोक्ता व्यक्ताव्यक्तस्वरूपिणी। पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि।" इति सूक्ष्मचिदचितोरपि ब्रह्मणि लयं प्रतिपादयति। तथाचापृथक्-सिद्धिसम्बन्धेन प्रलयकाले न प्रकृति-जीवयोः परमात्मशरीरभावे-नावस्थानम्। ततश्च प्रकृतेः शरीरत्वं नैमित्तिकप्रलयपर्यन्तमेव, नतु ततः परन्ते प्राकृतप्रलय इति विशदीकृतमेव। यतो व्यक्ताव्यक्त-**

स्वरूपसम्बन्धेन दिवारात्रव्यवहारो भवति, नान्यथेति प्राकृते प्रलये दिवारात्रादिव्यपदेशोऽपि नास्ति। सति चैवं प्रकृतेः संस्कारात्मनाऽवस्थाने प्राकृतः प्रलयः, स्वरूपतस्समावस्थापन्नसत्त्व-रजस्तमोगुणात्मनाऽवस्थाने तु नैमित्तिकः प्रलयः। पञ्चमाध्यायस्त्वात्यन्तिकप्रलयनिरूपणार्थं प्रवृत्तः संस्कारात्मनाऽपि प्रकृत्यनवस्थानलक्षणं मुक्तिस्वरूपमेव प्रतिपादयतीति विशदमिदम्—"आत्यन्तिकमतो ब्रह्मन् निबोध प्रतिसञ्चरम्।" इति चतुर्थाध्यायान्तिमश्लोकतः। ततस्तु—आत्यन्तिकप्रलयस्वरूपविवेचनप्रसङ्गेनाध्यात्मिकाधिभौतिकाधिदैविकत्रिविधदुःखस्वरूपं विविच्य—"निरस्तातिशयाह्लादसुखभावैकलक्षणा। भेषजं भगवत्प्राप्तिरेकान्ताऽऽत्यन्तिकी मते" त्यात्यन्तिकप्रलयस्वरूपं मुक्त्याख्यं प्रतिपादितम्। अत्र च अपरिच्छिन्नानन्दभाव एव ब्रह्मभावाख्यः "ब्रह्मविदाप्नोति परम्" इत्यादौ विवक्षिता ब्रह्मप्राप्तिरिति स्पष्टीकरणाद् अद्वैताभिमतैव मुक्तिर्विष्णुपुराणार्थ इति गम्यते। अत्र भगवत्प्राप्तिपदेन ब्रह्मप्राप्तिविवक्षणाद् ब्रह्मणो निर्विशेषस्य भगवच्छब्दबोध्यत्वं कथं भवतीति शङ्कायां परविद्याप्रतिपाद्यं "यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम्। अनिर्देश्यस्वरूपं च पाणिपादाद्यसंयुतम्। विभुं सर्वगतं नित्यं भूतयोनिमकारणम्" इत्यादि वाक्यगम्यं च स्वरूपं वस्तुगत्या न भगवच्छब्दवाच्यमेव; तथापि—"अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज। पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः॥" इति श्लोकोक्तविधयोपचाराद् भगवच्छब्दवाच्यमिति परिहारोऽपि विष्णुपुराणत एवोक्तप्रकरणादवगम्यते। अनेन च भगवच्छब्दबोध्यत्वमपि लक्षणादिनैव परस्य ब्रह्मण इत्यद्वैतसिद्धान्त एव विशदं प्रतीयते॥

यैस्तु श्रीभाष्यानुयायिनः—'अशब्दगोचरस्यापि'ति श्लोकेन मुक्तस्यैवोपचराद् भगवच्छब्दवाच्यत्वं निरूप्यते, मुख्यार्थस्तु भगव-

च्छब्दस्य—"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते । मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥" इतिवाक्यगम्यं सविशेषस्वरूपमेव । तत्रैव—"संभर्तेति तथा भर्ता इत्यादिश्लोकोक्तषाड्गुण्यादीनामपि संभवः, इति तदारभ्याध्यायसमाप्तिपर्यन्तेन भागेनाप्यवगम्यते। इति सविशेषब्रह्मण्येव विष्णुपुराणषष्ठांशस्य तात्पर्यम्—मन्यन्ते ॥

तत्राद्वैतिनोऽपि "शुद्धे महाविभूत्याख्ये" इत्यादीनां श्लोकानां सविशेषब्रह्मपरत्वे, सविशेषब्रह्मणैवोपसंहारे च न विवदन्ते । इदमपि न विवादास्पदम्—यत् "अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज ! पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः" इति मुक्तात्मपरमिति । इदमेव तु विवादगोचरः—यत् मुक्तात्मायं ब्रह्मभूयमात्यन्तिकं प्राप्तो विगलितान्तःकरणाद्युपाधिकः स्वरूपतो ब्रह्मणः पृथगविद्यमान एवात्र ब्रह्मपदेन विवक्ष्यते, यतः—"निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्ताऽऽत्यन्तिकी मते"ति केवलानन्दभाव एव भगवत्प्राप्तिरिति वर्णितम्, इति तदेकवाक्यतयाऽद्वैताभिमतस्यैवार्थस्य विवक्षणीयत्वे मुक्तस्य ज्ञेयस्य चोभयोरपि न भगवच्छब्दप्रतिपाद्यत्वं मुख्यम्, किन्तु गौणमेवेति प्रकरणसमाप्तौ सत्याम्—भगवत्पदलक्ष्यार्थेनैव शास्त्रार्थसमाप्तावपि मुख्यार्थस्य सविशेषस्य तद्वाच्यार्थस्य श्रोतृजनसौकर्यार्थं तदुपासनादीनामपि यावद्ब्रह्मसाक्षात्कारं तत्साधनतयानुष्ठानमुपयुक्तमेवेति सूचनार्थं च सविशेषभगवच्छब्दवाच्यार्थेनाध्यायोपसंहारः । उपक्रमोपसंहारौ तु—"आत्यन्तिकमतो ब्रह्मन् निबोध प्रतिसञ्चरम् ॥" "निरस्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मते" इति वाक्याभ्यामेव प्रधानतमौ । तदुपोद्बलकौ त्वपरावुपक्रमोपसंहारौ—"द्वे विद्ये वेदितव्ये वै इति चाथर्वणी श्रुतिः । परया त्वक्षरप्राप्तिः ऋग्वेदादिमयाऽपरा ॥" "एवं निगदितार्थस्य सतत्त्वं तस्य तत्त्वतः । ज्ञायते येन तज्ज्ञानं परमन्यत्

त्रयीमयम्। अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज। पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः'' ॥ इति श्लोका एव। एतैर्हि श्लोकैरक्षरविद्यार्थः सूच्यते। यथाचाक्षरविद्याया अद्वैत एव तात्पर्यम्, तथा पूर्वमेव विवेचितम्। "शुद्धे महाविभूत्याख्ये" इत्यादि तु भगवच्छब्दवाच्यार्थनिरूपणपरं विचारान्तरं प्रासङ्गिकमेव, नतु प्रकरणार्थोपसंहारः; प्रकरणार्थात्यन्तिकप्रलयानुपपादकत्वात्, सविशेषस्य भगवच्छब्दवाच्यार्थस्य "पूर्वोक्तात्यन्तिकप्रलयस्वरूपबहिर्भावाच्च। सति चैवम्—"स सर्वभूतप्रकृतिमि''त्यादि—"शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः।'' इत्यन्तं विष्णुपुराणषष्ठांशगतं वचनजातमद्वैतिनामपि सविशेषपरमपि नाद्वैतवादो विष्णुपुराणषष्ठांशप्रकरणार्थ इति सिद्धान्तस्य प्रतिकूलम्। तदेवं षष्ठांशपञ्चमाध्यायो विष्णुपुराणस्याद्वैतिनामेवानुकूलो वस्तुगत्या। प्रासङ्गिकविचारोऽपि सविशेषस्वरूपस्य नाद्वैतिनां प्रतिकूल इति सिद्धम् ॥

एतेन—षष्ठांशसप्तमाध्यायोऽपि—व्याख्यातः। अयं हि—"श्रूयतां चाऽथ विद्यायाः स्वरूपं कुलनन्दन ! अनात्मन्यात्मबुद्धिर्या त्वस्वे स्वमिति या मतिः।............निर्वाणमय एवायमात्मा ज्ञानमयो यतः। दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः। जलस्य नाग्निसंसर्गः स्थालीनिष्ठं तथापि हि। शब्दोद्रेकादिकान् धर्मांस्तत्करोति यथा मुने। तथात्मा प्रकृतेः सङ्गादहंमानादिदूषितः। भजते प्राकृतान् धर्मानन्यस्तेभ्योऽपि सोऽव्ययः ॥'' इत्यादिना विद्याऽविस्वरूपं प्रतिपाद्य, ततः साङ्ख्ययोगस्वरूपमुपक्रम्य, तत्प्रसङ्गेन चित्तस्याश्रयं मूर्तमपरं ब्रह्म, परममूर्तं च ब्रह्म प्रस्तुत्य, तत्र व्यवहारदशायां "विश्वमेतत् परं चान्यद् भेदभिन्नदृशां नृपे''त्यन्तेन कर्मभावनां ब्रह्मभावनां कर्मब्रह्मोभयभावनां च संगृह्य,—अरूपं ब्रह्म—"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं

ब्रह्मसंज्ञितम्। यत्र विष्णोः परं रूपमरूपस्याजमक्षरम्। विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः। न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः॥" इति श्लोकैर्योगायोग्यमुपक्षिप्य, प्रधानादिसर्वप्रपञ्चं ब्रह्मणो रूपम्, यतः "यद्यत् विभूतिमत्सत्त्वं मम तेजोंऽशसम्भवमि"तिन्यायेन भगवदंशत्वं सर्वस्येति निरूप्य च, परमात्मनः—शक्तित्रयम्—"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा। अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते॥" इति निष्कृष्य, अविद्याकर्मशक्त्याघृतक्षेत्रज्ञशक्तौ— सरीसृपादिहिरण्यगर्भान्तमन्तर्भाव्य, ततो विष्णुशक्तिं योगिध्येयममूर्तं ब्रह्म—"द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते" इति "तत्र मूर्तं हरे रूपं यादृक् चिन्त्यं नराधिप! तत् श्रूयतामनाधारे धारणा नोपपद्यते।" इति वक्ष्यमाणं संगृह्णेण प्रस्तुत्य, "अमूर्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैः। समस्तशक्तयश्चैता नृप यत्र प्रतिष्ठिताः।" इति योगिध्येयममूर्तं विष्णो रूपमुमक्षिप्य, तेनैवामूर्तेन रूपेण योगिध्येयेन शुद्धाश्रयत्वेन मनसो धारणा भवतीति विवेचयति। अत्र च भावनात्रययोग्यब्रह्मधारणामात्रेण न मोक्षः, मोक्षस्तु भावनात्रयात्ययेन स्वरूपमात्रप्रकाशावस्थायामित्यपि तत्रैव विवेचितम्—"त्रिभावभावनातीतो मुक्तये योगिनां नृपे"ति श्लोकेन। तथाच धारणावस्थायां परमात्मनो निर्विशेषस्य न प्रतीतिसम्भवः, इति सविशेषस्यैव ब्रह्मणो धारणायोग्यतेति नायमद्वैतिनामपि प्रतिकूलः, इति—"अमूर्तं ब्रह्मणो रूपमि"त्यादिकं समाधियोग्यमेव स्वरूपं प्रतिपादयति, यतः—"तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत्। मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति प्रतिपाद्यते। अतश्च समाध्यवस्थायाममूर्ते रूपे शक्तित्रयस्यापि लयेनामूर्तब्रह्मभाव एवेति बोधनार्थमेव—"समस्तशक्तयश्चैताः" इत्यादिश्लोकाः प्रवृत्ताः, इति नानेनापि सविशेषब्रह्मसिद्धिः; "प्रत्यस्तमितभेदं यत्

सत्तामात्रमगोचरम्'' इत्यनेनैकार्थ्यात्, ''जगत्प्रतिष्ठा देवर्षे पृथिवी'' इत्यादौ प्रतिष्ठाशब्दस्य लये प्रयोगेणात्रापि तदर्थस्यैव युक्तत्वाच्च। सति चैवम्—''तद्विश्वरूपरूपं वै रूपमेतद्धरेर्मम'' इति सार्वात्म्यव्यपदेशोऽप्युपपद्यते। अत्र प्रलयनिबन्धनमेव तादात्म्यं बोध्यमानं शरीर-शरीरिभावनिबन्धनं तदप्रामाणिकं गमयति। सति चैवं सप्तमाध्यायोऽप्यद्वैतवाद एव विशेषतः स्वरसः; यतः—''तद्भावभावमापन्नस्ततोऽसौ परमात्मनः। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्। विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति॥'' इत्युपसंहार उपपद्यते। अत्राज्ञानकृतत्वं भेदस्य स्पष्टमवगतं न मतान्तर उपपद्यते। तदेवम्—''समस्ताः शक्तयश्चैताः'' इत्यादयः ''चेष्टा तस्याप्रमेयस्ये''त्यन्ताः श्लोकाः षष्ठांशसप्तमाध्यायगता अप्यद्वैतवादस्यानुकूला एवेति सिद्धम्॥

अत्र—''प्रसन्नचारुवदनं पद्मपत्रोपमेक्षणम् सुकपोलं सुविस्तीर्णललाटफलकोज्वलम्॥...........चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम्॥ किरीटचारुकेयूरकटकादिविभूषितम्। शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम्॥ चिन्तयेत्तन्मयो योगी समाधायात्ममानसम्। तावद् यावद् स्थिरीभूत्वा तत्रैव नृपधारणा॥ वदतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः। नापयाति यदा चित्तात् सिद्धां मन्येत तां सदा॥ ततः शङ्खगदाचक्रखड्गकै रहितं बुधः। चिन्तयेद् भगवद्रूपं प्रशान्तं साक्षसूत्रकम्॥ सा यदा धारणा तद्वदवस्थानवती ततः। किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत्।'' इत्यादिक्रमेणैकैकांशत्यागेन धारणायाः—''तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत्'' इति स्वरूपमात्रसमाश्रयणेनैव समाधिनिष्पत्तिरिति विवेचनाद् ज्ञायते —सविशेषस्य शङ्खचक्रादिकं सर्वं चापरं रूपं धारणार्थं कल्पितमेव, परमार्थतस्तु तद्रहितमेव परमात्मनः पारमार्थिकं स्वरूपम्, इति

सविशेषब्रह्मवादः सर्वोऽपि विष्णुपुराणगतः कल्पितं विशेषमादायैवेति विशदमिदं सर्वेषाम्। तथाच कुत्रचन प्रह्लादस्तुत्यादौ नृसिंहावतारस्य सविशेषत्वेन स्तुत्यादिकमपि नाद्वैतवादस्य विरुद्धम् ॥

एतेन—विष्णुपुराणप्रथमांशद्वाविंशाध्यायोऽपि—व्याख्यातः; यतस्तत्रापि—"आत्मानमस्य जगतो निर्लेपमगुणामलम्। बिभर्ति कौस्तुभमणिस्वरूपं भगवान् हरिः॥ श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम्। प्रधानं बुद्धिरप्यास्ते गदारूपेण माधवे॥ भूतादिमिन्द्रियादिं च द्विधाऽहंकारमीश्वरः॥ शङ्खरूपेण तथा शार्ङ्गरूपेण च स्थितम्॥ बलस्वरूपमत्यन्तं जवनान्तरितानिलम्। चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम्॥ पञ्चरूपा तु या माला वैजयन्ती गदाभृतः। सा भूतहेतुसंघातभूतमात्रा च वै द्विजा॥ यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै। शररूपाण्यशेषाणि तानि धत्ते जनार्दनः। बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम्। विद्यामयं तु तज्ज्ञानमविद्या चर्म सस्थितम्॥ इत्थं पुमान् प्रधानं च बुद्ध्यहंकारमेव च। भूतानि च हृषीकेशे मनः सर्वेन्द्रियाणि च। विद्याऽविद्ये च मैत्रेय सर्वमेतत् समाश्रितम्। अस्त्रभूषणसंस्थानस्वरूपं रूपवर्जितः। बिभर्ति मायारूपोऽसौ श्रेयसे प्राणिनां हरिः॥" इति भूषणास्त्राण्यपि केवलमुपासनार्थं रूपरहितस्यैव परमात्मनः कल्पितान्येव रूपाणीति प्रतिपाद्यते। सति चैवं परमार्थतः सविशेषत्वे प्रथमांशद्वाविंशाध्यायोऽपि प्रतिकूल एव ॥

एतेन—"एवंप्रकारममलं नित्यं व्यापकमव्ययम्। समस्तभेदरहितं विष्ण्वाख्यं परमं पदम्॥" इति प्रथमांशद्वाविंशाध्यगतोऽपि श्रीभाष्योदाहृतः श्लोको व्याख्यातः। अत्र हि "समस्तहेयरहितमि" ति श्रीभाष्यकारादृतः पाठः। मुद्रिते तु पुस्तक उपलभ्यमानः पाठः—"समस्तभेदरहितम्" इति। अद्वैतमतरीत्या तु समस्तस्य

ब्रह्मव्यतिरिक्तस्य हेयत्वेन "समस्तभेदरहितमि" ति पाठेनैकवाक्यता श्रीभाष्यादृतपाठस्वीकारेऽपि न विरुद्धा। श्रीभाष्यकाराणां परं समस्तभेदरहितमिति पाठ स्वमतदृष्ट्या निःसंकोचं व्याख्यायमानः तन्मतविरोधायैव स्यात्। सर्वथा तु नाद्वैतविरुद्धोऽयमपि श्लोकः, प्रत्युत "समस्तभेदरहितमि" ति मुद्रितपुस्तकेषूपलभ्यमानपाठस्यैव सर्वत्रान्यत्रेव श्रीभाष्यानुयायिभिरपि स्वीकारे त्वद्वैतवादस्यैवानुकूल्यम् ॥

तथाच—"प्रत्यस्तमितभेदं यत्" इत्यस्य कतिपयभेदराहित्यपरतया विवरणं श्रीभाष्यानुयायिनामुक्तप्रकरणविरुद्धत्वादपि नादरणीयमिति सूचितम् ॥

"परः पराणां परमः परमात्माऽऽत्मसंस्थितः। रूपवर्णादिनिर्देशविशेषणविवर्जितः। अपक्षय-विनाशाभ्यां परिणामर्द्धिजन्मभिः। वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम्। सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते। तद् ब्रह्म परमं नित्यमजमक्षरमव्ययम्। एकस्वरूपं च सदा हेयाभावाच्च निर्मलम्। तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत्। तथा पुरुषरूपेण कालरूपेण च स्थितम्।" इति प्रथमांशद्वितीयाध्यायगताः श्लोकास्तु—यद्यपि प्रश्नोत्तरोपक्रमश्लोकाः; तथापि—परमोपक्रमाणाम्—"अविकाराय शुद्धाय नित्याय परमात्मने। सदैकरूपरूपाय विष्णवे सर्वजिष्णवे। नमो हिरण्यगर्भाय हरये शङ्कराय च। वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥ एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः। अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥ सर्ग-स्थिति-विनाशानां जगतो यो जगन्मयः। मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ आधारभूतं विश्वस्याप्यणीयांसमणीयसाम्। प्रणम्य सर्वभूतस्थमच्युतं पुरुषोत्तमम् ॥ ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्।

..."कथयामि यथा पूर्वं दक्षाद्यैर्मुनिसत्तमैः। पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः। तैश्चोक्तं पुरुकुत्साय भूभुजे नर्मदातटे। सारस्वताय तेनापि मम सारस्वतेन च।" इति श्लोकानामनन्तरं प्रवृत्तत्वाद् मङ्गलश्लोकेनैकवाक्यतामर्हन्ति। तेषां च सविशेषपरत्वादेवैषामपि सविशेषपरत्वमेव युक्तमिति श्रीभाष्यानुयायिनां श्रुतप्रकाशिकाकारादीनामाशयः। मङ्गलश्लोकानां सर्वेषां तदीयपरमोपक्रमानुसारेण सविशेषपरत्वमेव युक्तम्, इति "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितमि"त्यस्यापि कथंचन सविशेषपरत्वमेवेत्यपि श्रुतप्रकाशिकायां व्यक्तम्॥

अद्वैतिनस्तु मन्यन्ते—"अविकाराय शुद्धाय नित्याय परमात्मने। सदैकरूपरूपाय विष्णवे सर्वजिष्णवे। नमो हिरण्यगर्भाय हरये शङ्कराय च। वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे॥ एकानेकस्वरूपाय" इति परमोपक्रमे प्रथमेन श्लोकेनाविकार-निरतिशय-सद्रूप-सर्वभासकस्वरूपाय सर्वदाऽध्यारोपानन्तरं कार्यभावानन्तरमपि कल्पितेन धर्मेण वस्तुनोऽधिष्ठानस्य सधर्मकत्वस्य पारमार्थिकस्यासंभवात् सर्वदैकरूपाय च परोक्षरूपेणानुसन्धाय नमस्करकरणाद् निर्विशेषस्यैव ग्रहणम्। द्वितीयश्लोकस्तु हिरण्यगर्भ-हरि-शङ्करादिसविशेषरूपेण परमात्मस्वरूपानुसन्धानपरः कारणरूपेणैव तं नमस्कार्यतया मन्यते, इति सत्यं सविशेषपरः; परंतु कारणरूपं न पारमार्थिकमिति बोधनार्थमेव—"एकानेकस्वरूपाये"ति तृतीयश्लोकारम्भः। तथाच कल्पितमनेकरूपत्वं पारमार्थिकमेकरूपत्वमित्येकमेवाद्वितीयमिति वाक्यार्थ एव संगृह्यते, तत्रापि हि 'सदेवेदमि'त्यनेकरूपतया प्रतीतस्यैवैकरूपत्वं व्यवस्थापितम्। श्रीभाष्यमते तु—एकरूपत्वं सूक्ष्मचिदचिच्छरीरकस्य कथमपि नोपपद्यते। पुनस्तृतीयशेषतुरीयपञ्चमश्लोकैः संगृहीतं सविशेषं रूपं स्पष्टमेवापारमार्थिकमिति—षष्ठेन श्लोकेन "ज्ञानस्वरूपमि" त्युप-

क्रमेण प्रतिपादितम्, इति परमोपक्रमस्यापि निर्विशेषपरत्वस्यैव योगेन तदेकवाक्यतयैव—"परः पराणामि" त्यादीनामपि नयने कर्तव्ये रूपवर्णादिनिर्देशशून्यत्ववत् सर्वविशेषणान्तरशून्यत्वस्यापि "रूपवर्णादिनिर्देशविशेषणविवर्जितः" इति श्लोकार्धेन प्रतिपादनेन चिदचितोः शरीरशरीरिभावस्यापि निषेधाच्च निर्विशेषपरत्वमेव प्रतीयते। "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते" इत्यादिकमपि सर्वत्र परमात्मनोऽनुस्यूतत्वादिनैव वासुदेवादिशब्दव्यवहारः, नतु परमार्थतः कस्यापि शब्दस्य तत्र प्रवृत्तिः; षष्ठांशे वक्ष्यमाणरीत्या सर्वेषां शब्दानां ब्रह्मण्यौपचारिकत्वात्, कल्पितेनैव धर्मेण सविशेषत्वाच्चेति बोधयदद्वैतवादस्यैवानुगुणम्। तथाच नाद्वैतवादिनः सविशेषब्रह्मवादस्य विरोधिनः, किन्तु तन्मात्रेण शास्त्रपर्यवसानपक्षस्यैवेति तत्र सविशेषवाक्यानां बहूनां संग्रहणं नाद्वैतवादविरोधायालम्। यतस्सर्वेषु प्रकरणेषु श्रीभाष्यसंगृहीतेषु निर्विशेषवादोऽपि दृश्यत एव। अयमत्र निष्कर्षः—सविशेषवाक्यमात्रं प्रमाणम्। निर्विशेषवाक्यं त्वप्रमाणमिति श्रीभाष्यमतम्, उभयोरपि यथासम्भवं प्रामाण्यमिति त्वद्वैतमतम्। अन्यानि तु वाक्यानि श्रीभाष्यकारोद्धृतानि समालोचितप्रायाण्येवेति सिद्धमिदम्—न किमपि तादृशं विष्णुपुराणतः प्रमाणमुपलभ्यते, यत् सविशेषब्रह्मवादस्यैवानुकूलमिति, प्रत्युताद्वैतमतानुयायिभिर्विष्णुपुराणत उद्धृतानां श्रीभाष्यकारानूदितानां च बहूनां निर्विशेषब्रह्मवादस्यैवानुकूलानां विद्यमानत्वाद् निर्विशेषवाद एव विष्णुपुराणतात्पर्यम्—इति॥

तानि यथा—

"प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥"
"परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।"
"यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते जगतीतले ॥
येतु ज्ञानविदः शुद्धचेतसोऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥"
"तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥"
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदेषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥"
"वेणुरन्ध्रविभेदेन स्वरः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥"
"सोऽहं स च त्वं स च सर्वमेतत्
आत्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यः ।
तत्याज भेदं परमार्थदृष्टिः ॥"
"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
अत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति ॥" इति ।

अत्र श्रीभाष्यकाराः—"प्रत्यस्तमितभेदम्" इत्यत्र देवमनुष्यादिप्रकृतिपरिणमविशेषसंसृष्टस्यात्मनः स्वरूपं तद्गतभेदरहितत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुक्तमनसो न गोचर इच्यते । अनेन च न प्रपञ्चापलापः । कथमिदमवगम्यत इति चेत्, तदुच्यते; अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा, धारणासिद्ध्यर्थं शुद्धाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य, तृतीयशक्तिरूपकर्माख्याविद्यावे-

ष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया स्वतः शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदममूर्तमपरशक्तिरूपं क्षेत्रज्ञाख्यमूर्तं च परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम्—"आदित्यवर्णम्" इत्यादिवेदान्तसिद्धं मूर्तरूपं शुभाश्रय इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुम्—प्रत्यस्तमितभेदम्" इत्युच्यते ॥

"न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः। द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम्। समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्मतमि"ति वदतीति—वदन्ति। अत्र वक्तव्यं सर्वं पूर्वमेवोपवर्णितम्। एवमप्येतावन्मात्रमत्र सूच्यते—यत् "प्रत्यस्तमितिभेदम्" इति भेदसामान्यनिषेधपरस्य कतिपयभेदमात्रनिषेधे तात्पर्यग्राहकप्रमाणाभावात्, स्पष्टमेव तत्रैव प्रकरणे पूर्वोक्तविधया भेदस्याज्ञानकृतत्वबोधनेन ब्रह्माभेदस्यैव मोक्षत्वप्रतिपादनात्, प्रकरणस्यास्य निर्विशेषस्वरूपमात्रप्रकाशपरसमाधिनिरूपण एव तात्पर्यम्, नतु सविशेषब्रह्मविषयधारणामात्रनिरूपण इत्यङ्गीकर्तव्यत्वेन निष्पन्नध्येयपरामूर्तस्वरूपेणैव फलभूतेन प्रकरणपर्यवसानात्, शक्तित्रयविशिष्टस्यापरामूर्तस्य मनआश्रयतास्वीकारेऽपि प्रकरणस्य मनोनिवृत्तिरूपयोगनिरूपणपरस्य तत्र तात्पर्याभावाच्च "प्रत्यस्तमितभेदम्" इत्यादेर्यथाश्रुतार्थस्वीकार एव युक्तं इति। "प्रत्यस्तमितभेदमि"ति वाक्यप्रतिपाद्यं न योगयुजा चिन्तयितुं शक्यम्। द्वितीयं विष्णो रूपं तु योगिध्येयम्" इति वैलक्षण्यात् "समस्तशक्तयश्चैताः" इति ध्येयविष्णुस्वरूपनिरूपणपरमेव, नतु समाधौ भासमानस्वप्रकाशचैतन्यपरम्। तथाच

धारणावस्थायां सर्वशक्तिविशिष्टममूर्तमेव भगवतो रूपं मूर्तरूपेणाश्रयणीयम्, तदेव समाध्यवस्थायां सर्वकल्पनाराहित्ये परामूर्तभावं प्राप्नोतीत्येव तात्पर्यम्। अत एव—"न तद्योगयुजा शक्यम्" "तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप ! चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम्" "अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः। अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः। मूर्तं भगवतो रूपं सर्वापाश्रयनिस्पृहम्।" "तस्यैव कल्पनाहीनस्वरूपग्रहणं हि यत्। मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति वाक्यानां सर्वेषां सामञ्जस्यं भवति; अन्यथा—"द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामुने। अमूर्तं ब्रह्मणो रूपं यत् सदित्युच्यते बुधैरि"त्यत्र परामूर्तस्यैवाश्रयत्वविवक्षायां "मूर्तं भगवतो रूपं सर्वापाश्रयनिस्पृहमि"त्यनेन—"न तद्योगयुजा शक्यमि"त्यनेन च विरोधः स्यात्॥

अयमत्र निष्कर्षः—चित्ताश्रयश्चतुर्विधः—परमूर्तम्, अपरमूर्तम्, परामूर्तम्, अपरामूर्तं चेति। तत्र परमूर्तं प्रसन्नचारुवदनादिविशिष्टम्, अपरमूर्तं हिरण्यगर्भादि, परामूर्तम् निर्गुणम्, अपरामूर्तं सगुणं ब्रह्मेति "आश्रायश्चेतसो ब्रह्मन् द्विधा तच्च स्वभावतः। भूप मूर्तममूर्तं च परं चापरमेव च" इति वाक्येनावगम्यते। तत्र च भावनात्रयप्रसङ्गः परमूर्तापरमूर्तापरामूर्तेष्वेव। परामूर्ते तु भावनात्रयात्ययात् ज्ञानमात्रेण मोक्षः। तथाचामूर्तस्य ध्येयत्वं तदभावश्चोभावप्युपपद्येते। तत्र परामूर्तदृष्ट्या ध्येयत्वम्—"द्वितीयं विष्णुसंज्ञस्ये"त्यनेनोक्तम्, 'प्रत्यस्तमितमि'त्यनेन न योगिनो ध्येयं—परामूर्तमित्युक्तमिति विषयभेदाद् न "समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।" इत्यनेन "प्रत्यस्तमितभेदम्" इत्यस्य विरोधः, इति "प्रत्यस्तमितभेदम्" इत्यादीनां प्रपञ्चापलापेऽपि तात्पर्यमूरीकर्तव्यम्॥

एतेन—"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थ-

स्वरूपेण भ्रान्तिदर्शनः स्थितम्" इति श्लोकोऽपि—व्याख्यातः; तेन ज्ञानातिरेकेणार्थस्य भ्रान्तिरेवेति स्पष्टमर्थसामान्यज्ञानस्य भ्रमत्वप्रतीत्या ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्याकारेण प्रतिभासमात्रस्यानुपस्थितस्य भ्रान्तिदर्शनतापरतया नयनस्याप्राप्तकालत्वात्। यथा हि शुक्तिकाया रजततयाऽवभावो मिथ्येत्युक्ते तद्रूपेण प्रतिभासमानरजतमिथ्यात्वमवगम्यते, एवमर्थाकारेणावभासो मिथ्येत्युक्ते ज्ञानसम्बद्धतया प्रतीयमानस्य सर्वस्य मिथ्यात्वमगम्यते। इयान् विशेषः— यत् शक्तिरजतज्ञाने रजतस्य प्रातिभासिकत्वाद् व्यावहारिकरजतान्तरमिथ्यात्वं न विषयीक्रियते, प्रकृते तु सर्वमिथ्यात्वावगमाद् नार्थान्तरसत्त्वम्। यथाच भ्रमेणापि भ्रमो भवति, नतु प्रमाजनितसंस्कार एव कारणमिति नियमः—तथा शारीरकमीमांसाभाष्ये शङ्करभगवत्पादैरपि—"अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्याहमिदमिति नैसर्गिकोऽयं लोकव्यवहारः" इत्यत्र सूचितमेव। सति चैवम्—"सन् घटः" इत्यादि बाधायामेव सामानाधिकरण्यम्, नतु विशेषणविशेष्यभावादिनिबन्धनम्। अधिकं चान्यत्र व्यक्तम्॥

वचनान्तराणि तु महापूर्वपक्षावसरेऽद्वैतमतानुकूलतया श्रीभाष्योल्लिखितानि न तैरेवालोचितानि विशिष्य। यतो भेदमिथ्यात्वपराणां वाक्यानां सर्वेषां कतिपयभेदनिरासपरतैवेति नीतेरनुसरणव्यवस्थापनमेव तन्मतदृष्ट्या समुचितं समालोचनम्, इति न ब्रह्मव्यतिरिक्तसर्वप्रपञ्चबाधोऽद्वैतिनामप्रामाणिकः॥

अयमाशयः—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यती"ति वचनात् वेदार्थोपबृंहकत्वेन पुराणेतिहासयोः प्रामाण्यम्, तत्र च विष्णुपुराणस्यैव प्राधान्यम्; स्वयोगमहिमसाक्षात्कृतवेदान्ततत्त्वार्थपराशरोपज्ञत्वात्। सति चैवम्—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति" इति श्रुत्यर्थमुपबृंहयितुं प्रवृत्तानां प्रश्नप्रतिवचनानां ब्रह्म-प्रपञ्चयोः शरीर-

शरीरिभावनिबन्धनं सामानाधिकरण्यम्, न बाधायामिति स्पष्टमवगमात् निर्विशेषब्रह्मवादे न विष्णुपुराणस्य नवा "यतो वा इमानि भूतानि" इत्यादिसृष्टिवाक्यानां तात्पर्यम्। तत्र विष्णुपुराणस्योपक्रमे "यन्मयं च जगद् ब्रह्मन् यतश्चैतच्चराचरम्। लीनमासीद्यथा यत्र लयमेष्यति यत्र च" इति ब्रह्मस्वरूपविषयाः प्रश्ना दृश्यन्ते। तत्र "यतश्चैतत् चराचरम्" इति निमित्तोपादानयोः पृष्टत्वात् 'यन्मयमि'ति स्थिति-लयकर्मभूतं जगत् किमात्मकमित्येव पृच्छ्यते। उत्तरं च तस्य—'जगच्च सः' इति सामानाधिकरण्यावगाहिना वाक्येन दीयमानम्—'यन्मयमि'ति मयटो विकारार्थत्वे "यतश्चैतच्चराचरमि"त्यनेनैव सिद्ध्या प्रश्नान्तरवैयर्थ्यापत्तेः "जगच्च सः" सामानाधिकरण्यविरोधेन स्वार्थिकत्वायोगाच्च तत्प्राचुर्यार्थकत्वमेव स्वीकर्तव्यम्। संभवति हि प्राचुर्यार्थत्वं कृत्स्नस्य जगतो भगवद्व्याप्तिकृतशरीरशरीरिभावेन। निर्विशेषब्रह्मवादे तु सर्वाणि प्रश्नप्रतिवचनानि तद्विवरणभूतं शास्त्रं च न संगच्छेरन्; अन्यथा प्रपञ्चभ्रमस्य किमधिष्ठानम्? इत्येकेनैव प्रश्नेन "निर्विशेषज्ञानमात्रम्" इत्येकेनैव प्रतिवचनेनेष्टसिद्ध्यापत्तिः, सविशेषवाक्यानां बहूनामप्रामाण्यमपि समापद्येत। अतः—"विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः"॥ इतिसंग्रहेणोक्तमेवार्थं विस्तरेण वक्तुम्—भगवन्तं विष्णुं स्वेनैव रूपेण—"अविकाराय शुद्धाये"ति प्रणम्य तमेव हिरण्यगर्भस्वावतारत्रिमूर्ति-प्रधान-काल-क्षेत्रज्ञ-समष्टि-व्यष्टिरूपेणावस्थितं च नमस्करोति। तत्र—"ज्ञानस्वरूपम्" इत्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः स्वभावमाह। तस्माद् न निर्विशेषवस्तुप्रतीतिः। अत एव—"निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते" इति चोद्यम्—"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः। यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥" इति परिहारश्च घटते, अन्यथा—निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वम्? न पारमार्थिकः सर्गः, अपितु भ्रान्तिपरिकल्पित इति-चोद्यपरिहारौ स्याताम्। सविशेषब्रह्मवादे तु—लोके सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येष्वेव कारणत्वं दृष्टमिति निर्गुणस्य तत् कथमिति चोद्यम्, दृष्टसकलविजातीयस्य ब्रह्मणो जलादिविजातीयस्याग्नेरिवौष्ण्यादिशक्तियोगः सर्वशक्तियोगो न विरुद्ध्यत इति परिहारश्चोपपद्यते, इति "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः

स्थितमि” ति श्लोकः सविशेषवादस्यैवानुकूलः, न निर्विशेषब्रह्मवादस्य—इति ॥

अद्वैतिनस्तु मन्यन्ते—सत्यमितिहासपुराणयोर्वेदार्थोपबृंहकत्वम्। तदुपबृंहकत्वं स्मृत्यादीनामवष्टब्धवेदार्थेऽविरोधेनैव स्मृतित्वेनैव पुराणानां प्रामाण्यम्, तत्राप्यर्थवादविधया विधेयार्थस्तावकत्वेनोपाख्यानांशेन, अन्यत्र च तदर्थसंग्रहणद्वारेति “स्मृत्यनवकाशदोषप्रसङ्गादिति चेत्, नान्यस्मृत्यनवकाशदोषप्रसङ्गादि” ति न्यायेन पुराणविशेषप्राधान्यादिकल्पनाया नात्रावसरः, यतो वेदामूलस्मृत्यपेक्षया वेदमूलस्मृतिप्रामाण्यव्यवस्थापन एव तस्य न्यायस्य तात्पर्यम्। नहि पराशरेणैव योगमहिम्ना वेदार्थः साक्षात्कृतो नान्येन वामदेवादिना, कपिलादिना वेति कल्पनायां प्रमाणमस्ति। स्तुतिस्तु वेदे पराशरस्येव कपिलादीनामपि दृश्यत एवेति स्मृतित्वेन प्रामाण्याविशेषे वेदाविरोधेऽपि पुराणविशेषमात्रप्राधान्यादिकल्पनं पुराणविशेषमात्रमवलम्ब्य न युक्तिसहम्। यथाच सात्त्विकत्वराजसत्वादिविभागो न कर्तृदोषनिबन्धनः, किन्तु प्रतिपाद्यवस्तुस्वरूपविभागनिबन्धनः, तत्रापि त्रिमूर्त्यन्तर्गतशिवप्राशस्त्यपरभागस्यैव तामसत्वम्, नतु तुरीयसदाशिवस्वरूपनिरूपणपरभागस्य, तस्य वस्तुगत्या निर्गुणत्वेन सात्विकत्वादिविभागासम्भवात्, तथाऽन्यत्र व्यक्तम्। सन्ति हि बहूनि वचनानि श्रुतावपि शिवस्यैव परमात्मत्वनिरूपणपराणि, तुरीयस्य सर्वशब्दवाच्यत्वेन शिवशब्दवाच्यत्वमिव विष्णुशब्दवाच्यत्वमपि भविष्यतीति न कोऽपि विरोधः। सर्वथा तु विष्णुपुराणस्यापि प्रामाण्ये परं न कस्यापि विप्रतिपत्तिः, इति तस्य “यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति” इति वेदान्तवाक्योपबृंहकत्वेऽपि न कस्यापि विप्रतिपत्तिः ॥

इदमेवात्रालोचनीयम्—यद् विष्णुपुराणोपक्रमगतप्रश्नोक्त-

राणि कस्य वा मतस्यानुकूलानीति। तत्रेदं प्रतिभाति—यत् "यतो वा इमानि भूतानि जायन्ते" इत्यस्योपपादनार्थम्—"यन्मयं च जगद् ब्रह्मन्नि" ति वाक्यम्, "येन जातानि जीवन्ति" इत्यस्योपपादनार्थं "यतश्चैतत् चराचरमि" ति वाक्यम्, "यत् प्रयन्त्यभिसंविशन्ती" ति वाक्यार्थोपबृंहणार्थम्—"लीनमासीत् तथा यत्र लयमेष्यति यत्र चे" ति वाक्यमिति। प्रतिवचनं च—"विष्णोः सकाशादुद्भूतं जगदत्रैव च स्थितम्। "स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः" इति प्रथमेन पादेन "यतो वा इमानि भूतानि जायन्ते" इत्येतदर्थसंग्रहपरम्, द्वितीयतृतीयपादौ तु "येन जातानि जीवन्ति" इत्येतदर्थसंग्रहपरौ, "जगच्च सः" इति "यत्प्रयन्त्यभिसंविशन्ति" इत्येतदर्थसंग्रहपरमिति स्वीकर्तव्यम्। सति चैवं न केवलं प्रश्नत्रयमपि समाहितम्, किन्तु श्रुत्यर्थोऽपि सम्यगुपबृंहितो भवति। सति चैवम्—"यन्मयमि" ति विकारार्थ एव मयट्, यतो "विष्णोः सकाशादुद्भूतमि" ति जगतो विष्णोः सकाशादुत्पत्तिवर्णनेनैव—यन्मयमितिप्रश्नः प्रत्युच्यते; अन्यथा—यन्मयमित्यस्यैव प्रतिवचनं "जगच्च सः" इत्यङ्गीकारे प्रश्नप्रतिवचनयोः क्रमभङ्गोऽपि भवति, यतो हि स्वोपबृंहणीयवाक्यगतक्रमोऽप्युल्लङ्घितो भवति, इति "यतो वा इमानि भूतानि जायन्ते" इति वाक्योपबृंहकत्वमपि पुराणस्य बाधितं स्यात्॥

एतेन—'यतश्चैतत् चराचरमि"त्यनेन निमित्तोपादानयोः पृष्टत्वात् "यन्मयमि"ति सृष्टि-स्थिति-लयकर्मभूतं जगत् किमात्मकमिति पृष्टम्, तस्य चोत्तरम् "जगच्च सः" इति—निरस्तम्; "लीनमासीत्तथा यत्रे"ति पृथग् लयकर्मभूतप्रश्नस्य दर्शनेन "जगदत्रैव च स्थिनम्। स्थितिसंयमकर्ता चे"ति स्थितिप्रश्नस्य पृथक् प्रतिवचनदर्शनेन च—"जगच्च सः" इत्यस्य "लीनमासीत् तथा यत्र" इत्यनुच्चरितावशिष्टप्रश्नप्रतिवचनरूपत्वस्यैव स्वीकारात्। तथाच—

जगद्ब्रह्मणोस्तादात्म्यं ब्रह्मणोऽभिन्ननिमित्तोपादानत्वेनैव, नतु शरीरशरीरिभावेनेति स्पष्टमवगम्यते। उपादानत्वं हि लयकारणत्वेन यथा स्पष्टमवगम्यते, न तथोत्पत्तिकारणत्वेन। नहि यत्र यल्लीयते, तत् तच्छशरीरकमिति व्यपदेशः, कारणरूपापत्तिर्हि लयो नाम। तथाच कारणरूपव्यतिरेकेण कार्यरूपान्तराभावनिबन्धनमेव जगद्ब्रह्मणोस्तादात्म्यम्, इत्यभिप्रायेणैव "जगच्च सः" इति वाक्यं प्रवृत्तम्। इदं च निर्विशेषब्रह्मवाद एवोपपद्यते; तत्रैव ब्रह्मव्यतिरेकेण कार्यान्तराभावसिद्धान्तस्वीकारात्। तथाच—"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति नीतिमवलम्ब्यैव कार्यकारणभाव इति बोधनार्थमेव—"जगच्च सः" इति वाक्यं प्रवृत्तम्। तथाच बाधायां सामानाधिकरण्यमेवात्र प्रतीयते। प्रतीतं चेदं पुनरुपबृंहयितुमेव प्रवृत्तम्—"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्" ॥ इति, इति "ज्ञानस्वरूपमि"ति वाक्यं निर्विशेषवादस्यैवानुगुणम्, सविशेषवादस्य तु तत्प्रतिकूलमेव। सृष्टिवाक्यानि सर्वाण्याध्यारोपविधया सविशेषं ब्रह्म बोधयन्ति, अपवादविधया च निर्विशेषमिति हि वस्तुस्थितिः। तथाच भ्रमत्वनिर्णयपर्यन्तमधिष्ठानमिति प्रश्नस्योत्थितिरेव प्रपञ्चप्रतीतिदशायां न भवति, तद्बाधानन्तरं तु ज्ञातत्वादेवाधिष्ठानस्य, न तत्प्रश्न उदेति ॥

एतेन—निर्विशेषब्रह्मवादस्यैव शास्त्रार्थत्वे प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषं ज्ञानमित्येवमुत्तरस्य चापत्तिरिति शङ्कापि निरवसरेति—सूचितम्। यथाच सगुणवाक्यानां निर्विशेषवाक्यानां च न विरोधः, विरोधेऽपि सगुणवाक्यानामेव बाधोऽपच्छेदन्यायेन, तथा पूर्वमेव विवेचितम्। "अविकाराय शुद्धाये"त्यपि निर्विशेषवादमेवोपबृंहयति। "यन्मयमि"ति प्रश्नोत्तरत्वेन "विष्णोः सकाशादुद्भूतम्", इति

विष्णुकारणत्वे वर्णिते हि जगतो ब्रह्मकार्यत्वे ब्रह्मणोऽपि विकारित्वापत्तिरिति शङ्का ह्यवश्यमेव समाधेयेति तदर्थम्—"अविकाराये"ति। अविकारत्वं चानाधेयातिशयस्वरूपत्वेनेति बोधनार्थम्—"शुद्धाये"ति। ततश्च फलितमनित्यत्वं वारयितुम्—"नित्याये"ति पदम्। तर्हि कथं वा कारणत्वमिति शङ्कायां निर्विशेषाभूतचैतन्यस्वरूपत्वात कारणस्याज्ञानवशात् सर्वमुपपन्नमिति बोधनार्थम्—"परमात्मने" पदम्। तथाच प्रपञ्चरूपेण परिणममानाविद्याविषयत्वमेवाधिष्ठानत्वरूपं कारणत्वं नाम ब्रह्मणः, नतु स्वयं परिणममानत्वमित्युक्तशङ्कापरिहारः। तदेवापरिणामित्वं स्पष्टयितुम्—"सदैकरूपरूपाये"ति पदम्। अविद्याविषयत्व आवरणस्य स्वरूपनाशरूपत्वाद् ब्रह्मस्वरूपनाशापत्तिशङ्कायां तद्वारणार्थम्—"सर्वजिष्णवे"पदम्। स्वयंप्रकाशमानस्यापि जीवदृष्ट्याऽऽवरणं वृत्त्यभावदशायामुपपद्यत इति तु तदाशयः। हिरण्यगर्भमारभ्य स्थूलभूतपर्यन्तं तस्यैव विवर्त इति परमार्थ इति तु निष्कर्षः। तमेव स्पष्टीकर्तुम्—"नमो हिरण्यगर्भाये"त्यादि "सूक्ष्मात्मने नमः" इत्यन्तम्। इदं च विवर्तत्वम्—व्यक्ताव्यक्तस्वरूपस्यैव भवति, ब्रह्म तु कथं स्वप्रकाशं विवर्तोपादानं स्यात्? इति शङ्कावारणार्थम्—"व्यक्ताव्यक्तस्वरूपाय"। तर्ह्यनिर्मोक्षोपत्तिरिति शङ्कावारणार्थम्—"जिष्णवे"पदम्। तथाचाखण्डाकारवृत्त्या समूलबन्धनाशे मुक्तिरिति भावः। तमेवाह—"मुक्तिहेतवे" इति। सति चैवम्—"जगच्च सः" इति वाक्यबोधितं तादात्म्यं ब्रह्मणि प्रपञ्चस्याध्यारोपेण ब्रह्मविवर्तत्वाभिप्रायेणैव, नतु शरीरशरीरिभावेनेति फलितार्थः। "इदं रजतमि"त्यादावध्यारोपनिबन्धनतादात्म्यस्थले परस्पराध्यासो दृश्यते, परिणामिपरिणामभावस्थले तु मृन्मयो घट इतिवत् घटमयी मृदिति व्यवहाराभावान्न स दृश्यते, प्रकृतेऽपि जगन्मयः परमात्मेति व्यवहारापत्त्या नाध्यारोपवादो युक्त इति

शङ्कावारणार्थम्—"सर्ग-स्थिति-विनाशानां जगतो यो जगन्मयः। मूलभूतो नमस्तस्मै" इति वाक्यम्। परस्परतादात्म्येऽपि रज्जुरेव सर्पस्याधारः, नतु सर्पो रज्ज्वाः; आरोपितस्यानधिष्ठानत्वात्, एवमेवात्रापि परमात्मैवाधारो जगतः, न जगत् परमात्मनः, इति बोधयितुम्—उत्तरः प्रपञ्चः; "मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थितः" इत्युक्तेः। तथाचात्मन्यन्तःकरणादीनां स्वरूपतः संसर्गतश्चाध्यासः, आत्मनस्तु संसर्गत एवान्तःकरणेऽध्यास इत्यद्वैत-सिद्धान्तस्यैव विवेचनार्थम्—"आधारभूतं विश्वस्यापी"ति। एव-मपि तत्र तत्र सर्वभूतस्थत्वादिव्यपदेशोऽपि न विरुद्धः; संसर्गमात्रा-ध्यासात्, इति निरूपणम्, न केनाप्युपाधिना तस्य संसर्ग इति निरूपणं च कर्तव्यमिति तदर्थमुक्तम्—"अणीयांसमणीयसाम्" "प्रणम्य सर्वभूतस्थम्" इति। तथाच परमात्मस्थत्वेऽपि जगतः पर-मात्मसाक्षात्कारनिवर्त्यत्ववत् जगत्स्थत्वेन परमात्मनोऽपि जगत्सा-क्षात्कारेण न नाशापत्तिः; परमात्मनः स्वरूपतोऽनध्यासात्, इति न विरोध इति सूचनार्थम्—"अच्युतमि"ति। तदेवं तत्तद्विशेषण-वशात् सूचितपरमात्मविवर्तवादस्यैव स्वशब्देनापि विशदीकरणार्थ-मेव—"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्ति-दर्शनतः स्थितमि"तिश्लोकः प्रवृत्तः, इति "यन्मयं च जगद् ब्रह्मन् यतश्चैतच्चराचरम्। लीनमासीत् तथा यत्र लयमेष्यति यत्र च।" इति प्रश्नप्रतिवचनानि—"विष्णोः सकाशादुद्भूतं जगदत्रैव च स्थितम्। स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च सः।" इति प्रश्नप्रतिवचनानि—"अविकाराय शुद्धाये"त्यादयः "ज्ञानस्वरूप-मत्यन्तनिर्मलमि"त्यन्ता; प्रणामश्लोकाश्च "यतो वा इमानि भूतानि जायन्ते" इत्यादिकारणवाक्यानां निर्विशेषब्रह्मवादानुगुणतया प्रवृत्तिमेवोपबृंहयन्ति। सविशेषब्रह्मवादे हि—न केवलं प्रश्नोत्तर-भिन्नक्रमत्वम्, लयकारणाप्रदर्शनेन पृष्टोत्तरादानेन न्यूनता वा,

किन्तु ब्रह्मप्राचुर्यस्यैव जगतो विवक्षणेन विकारित्वशङ्काद्यनुत्थानात् "अविकाराये"त्यादिवैयर्थ्यमपि ॥

एतेन—"ज्ञानस्वरूपम्"इत्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनाऽवस्थितस्य परमात्मनः सद्वारकभ्रमान्वयपर इति—परास्तम्; न ह्यद्वैतिनः परमात्मनो भ्रान्तिदर्शनं मन्यन्ते, किन्तु जीवस्यैवाविद्याप्रतिबिम्बस्य। तथाच परमात्मैव जीवानां भ्रान्त्याऽर्थवदवभासत इत्येवोक्तवाक्यार्थः। नहि जीवद्वारकभ्रमेणापि परमात्मनोऽर्थात्मना प्रतीतिः सविशेषब्रह्मवादे। ततश्च नात्र सविशेषवस्तुप्रतीतिः, किन्तु निर्विशेषस्यैव वस्तुनः प्रतीतिः। "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः। कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते॥" इति प्रश्नोऽपि निर्विशेषब्रह्मवाद एवोपपद्यते। सर्गादिकर्तृत्वप्रयोजकं हि सगुणत्वं सत्त्वरजस्तमोगुणवत्त्वं वा? उत गुणान्तरवत्त्वं वा? आद्ये सविशेषब्रह्मवादे ब्रह्मणो निर्गुणत्वस्य सर्गादिकर्तृत्वस्य चोभयस्य श्रुतिप्रमाणसिद्धस्य पर्यनुयोगासम्भवः, अद्वैतवादे तु वेदान्तानां सर्गादिकर्तृत्वे तात्पर्याभावात यावद्व्यवहारमनुवर्तमानं सर्गादिकर्तृत्वं प्रमाणान्तराविरोधेनैव स्वीकर्तव्यम्; समबलत्वादिति पर्यनुयोगो न विरुद्धः? द्वितीये तु न ब्रह्म निर्गुणमिति "निर्गुणस्ये"त्यसिद्धोऽयं हेतुः। तथाच ब्रह्मण एव सत्त्वरजस्तमोगुणवत्त्वं विनापि जगत्कर्तृत्वं शक्तीनामचिन्त्यज्ञानगोचरत्वेन समाधानान्यथानुपपत्त्या ब्रह्मणोऽनिर्वचनीयमित्येव बोध्यते, इति वस्तुगत्याऽसम्भवेऽपि कल्पनया तत्सम्भवतीत्येव शास्त्रार्थः। सति चैवम्—"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः" इत्यनेनापि न पारमार्थिको ब्रह्मणः सर्ग इत्येव बोध्यते। अत एव "नारायणाद्धो भगवान् ब्रह्मा लोकपितामहः। उत्पन्नः प्रोच्यते विद्वन् नित्य एवोपचारतः॥" इति सृज्यत्वं ब्रह्मणो लोकपितामहस्यौपचारिकमिति वर्णनविषया

परमात्मनो जगज्जन्मादिकर्तृत्वमप्यौपचारिकमेव, न पारमार्थिकमिति प्रतिपाद्यते; अन्यथा ब्रह्मणोऽनन्तकल्याणगुणस्य त्रिगुणमायादिशरीरकत्ववत् निर्गुणत्वमपि कथं विरोधि? यदि निर्गुणश्रुतिवशात्, तर्हि तद्वशेन सर्वविशेषशून्यत्वमेवोरीकृत्यौपचारिकमेव सर्गादिकर्तृत्वं श्रुतिप्रामाण्यात् स्वीक्रियताम् ॥

एतेन—उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य कथं सर्गादिकर्तृत्वमिति चोद्यम्, दृष्टसकलविजातीयस्य ब्रह्मणः सर्वशक्तियोगो न विरुद्ध इति परिहारः इति—परास्तम्; लोकविलक्षणत्वेन परिहारस्य सर्गादिकर्तृत्वस्यापारमार्थिकत्वपक्षेऽप्यविशेषात् ॥

वस्तुतस्तु ब्रह्मणो द्वितीयाध्याये "अविकाराये"त्यारभ्य "ज्ञानस्वरूपमि" त्यन्तेन द्वितीयमिथ्यात्वनिरूपणपूर्वकं सर्वविशेषराहित्यमेव प्रतिपादितम्, नतु सत्त्वादिगुणशून्यत्वम्। तथाच "निर्गुणस्ये" त्यस्य तृतीयाध्यायारम्भगतस्य सत्त्वादिगुणराहित्यमात्रपरतां गृहीत्वा प्रश्न एवाप्राप्तकालः, अन्यथा 'अप्रमेयस्ये'त्यनुपपन्नं स्यात्। नहि सत्त्वादिगुणमात्ररहितं ब्रह्माप्रमेयमिति सविशेषवादिनो वदन्ति ॥

एतेन—"परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते। तवैव महिमा येन व्याप्तमेतत् चराचरम् ॥ यदेतद् दृश्यते मूर्तमेतद् ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥" इति श्लोका अपि—व्याख्याताः; "अविकाराय शुद्धाये"त्यादिवाक्यार्थस्यैव पूर्वोक्तस्य ज्ञानस्वरूपं ब्रह्म सत्यम्, जगन्मिथ्येति स्पष्टं प्रतिपादनात् ॥

अत्र "तवैव महिमे"ति वाक्यं विलक्षणत्वेऽपि प्रपञ्चस्य केवलं विवर्तमानतयैव सर्वत्र परमात्मनोऽनुवृत्तिरित्येव बोधयति। यतः परमात्मातिरिक्ताभावप्रतिपादनम्, तत्र तद्व्याप्तिप्रतिपादनम्, तथा पुनरपि सर्वेषां ज्ञानव्यतिरेकेण दर्शनमयोगिनां

मोहमात्रनिमित्तो भ्रम इति निर्देशनं च नान्यस्मिन् पक्षे सम्भवति। इदं तु मतद्वयसम्प्रतिपन्नम्—यत् परमात्मव्यतिरेकेणावस्थितस्य प्रपञ्चस्यापारमार्थ्यमिति। इदमेव तु विप्रतिपन्नम्—यत् परमार्थाव्यतिरेकेणापि प्रपञ्चसत्त्वम्। तत्र श्रीभाष्यमते—परमात्मव्यतिरेकेण प्रपञ्चाभावमात्रं विवक्ष्यते, नतु रूपान्तरेण प्रपञ्चसत्त्वमपि; तत्र परमात्मव्यतिरेकेण प्रपञ्चस्यानवस्थानात्। यदि तद्व्यतिरेकेण प्रपञ्चोऽपरमार्थः, तर्हि प्रपञ्चव्यतिरेकेण परमात्मनोऽप्यनवस्थानात् तद्व्यतिरेकेण परमात्माप्यपरमार्थ इत्येव स्वीकर्तव्यम्। सति चैवम्—"परमार्थस्त्वमेवैकः" इति श्रीभाष्यमते कथमुपपद्यते? वस्तुतस्तु—"नान्योऽस्ति जगतः पते" इति परमात्मव्यतिरिक्तस्यासत्त्वमेव बोध्यते, नतु रूपान्तरेण सत्त्वमपि। एतेन प्रपञ्चात्मत्वमपि परमात्मनः परास्तम्; तदात्मकस्य स्वभावत एव तद्व्याप्त्या—"तवैव महिमा येन व्याप्तमेतच्चराचरमि"ति माहात्म्यनिबन्धना व्याप्तिरिति वादो निस्सार एव स्यात्। अद्वैतमते तु मिथ्याभूतेऽप्यनुवृत्तौ किमपि कारणं वक्तुं न शक्यते, इति चैतन्यस्यैव महिमेत्यवश्यमेव स्वीकर्तव्यम्। एतेन—तवैषा व्याप्तिर्भ्रान्तिरित्येव वर्णनीयमिति—व्याख्यातम्; मिथ्याभूतेऽपि प्रपञ्चे ब्रह्मणोऽनुवृत्तिरियमधिष्ठानब्रह्मतादात्म्यनिबन्धनैवेति हि "तवैव महिमा" इति वाक्यार्थः। सति चैवं ब्रह्मणः प्रपञ्चेन तादात्म्यप्रतीतिरियमयोगिनां भ्रान्तिरित्येवोक्तवाक्यार्थः॥

अयमाशयः—रजतस्य शुक्ताविव ब्रह्मणि प्रपञ्चस्याध्यासात् प्रपञ्चस्य ब्रह्मात्मत्वे ब्रह्मणा साकं सम्बन्धेन ब्रह्मणि व्याप्तिरुपपद्येत कथंचन, ब्रह्मणस्तु प्रपञ्चे नाध्यासः; प्रपञ्चस्यापरमार्थस्यानधिष्ठानत्वात्। सति चैवं कथं ब्रह्मणस्तत्रानुवृत्तिर्व्याप्तिर्वेति शङ्कावारणार्थम्—"तवैव महिमे"ति श्लोकः। यदि कल्पितत्वाद् प्रपञ्चो मिथ्या, तर्हि प्रपञ्चे ब्रह्मणो व्याप्तिनिर्वाहार्थं ब्रह्मणोऽपि प्रपञ्चे

कल्पितत्वापत्त्या—परमार्थस्त्वमेवैक इति नानुपपन्नमिति शङ्कानिष्कर्षः। परिहाराशयस्तु—"इदं रजतमि"त्यादावपि रजतेऽपीदंतादात्म्यं प्रतीयत एव। तत्र च कारणमिदमंशाज्ञानमेव। इयान् विशेषः—यदिदमंशाज्ञानमिदमि रजतं तत्संसर्गं च जनयति, रजते तु तत्तादात्म्यमात्रम्; विनापि तदुत्पत्तिं प्रत्यक्षत्वनिर्वाहादिति हि वस्तुस्थितिः। अयमेव न्यायो यदि प्रपञ्चाध्यासस्थलेऽपि योज्यते, तर्हि ब्रह्मणोऽधिष्ठानत्वाविशेषात् संसर्गाध्यासमात्रमेव विवक्ष्यते, न स्वरूपाध्यासोऽपि; अधिष्ठानमाहात्म्यस्यैतादृशस्य शुक्त्यादौ दृष्टत्वादिति न दोषः। तथाच ब्रह्मणो व्याप्तिरपि प्रपञ्चेऽनिर्वचनीयैवेत्येवोक्तवाक्यार्थः, इति ब्रह्मणोऽन्यत्र व्याप्तिज्ञानमपि सर्वेषां भ्रान्तिरेव, यत् प्रपञ्चं पश्यन्तीति फलति। अयमेवार्थः—"यदेतद् दृश्यते मूर्तमि"त्युत्तरश्लोकेनापि विशदीक्रियते॥

स्तुतिर्हि नाम सति सम्भवे गुण्यभिधानं सगुणस्य कल्पितान् गुणानादाय पारमार्थिकगुणिस्वरूपमादाय वा भवतीति पारमार्थिकज्ञानस्वरूपादिवर्णनं न स्तुतिप्रकरणविरुद्धम्। अस्मिन् श्लोके—भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमि"ति सर्वप्रपञ्चतादात्म्यप्रतीतेरेव भ्रान्तित्वं व्यवस्थाप्यते, नतु मनुष्याद्याकारत्वमात्रस्य। अतो मनुष्याद्याकारत्वमिव सर्वतादात्म्यमपि बाधित मित्येव तात्पर्यम्; सङ्कोचे कारणाभावात्। तथाच ज्ञानव्यतिरेकेणार्थाभावाभिप्रायेणैव प्रकरणार्थो निकर्षणीयः, इति प्रथमांशाध्यायचतुष्टयमपि पूर्वोक्तप्रकारेणाद्वैतवाद एव स्वरसम्। अत एव—"सर्गस्थित्यन्तकालेषु त्रिधैवं संप्रवर्तते। गुणप्रवृत्त्या परमं पदं तस्यागुणं महत्। तत्त्वज्ञानमयं वाऽपि स्वसंवेद्यमनौपमम्। चतुःप्रकारं तदपि स्वरूपं परमात्मनः।" इति चतुःप्रकारैः प्रस्तुतेषु चतुर्थं प्रकारम्—"विज्ञानमद्वैतमयं तद्भागोऽन्यो मयोदितः। ज्ञानत्रयस्य चैतस्य विशेषो यो महामुने। तन्निराकरणद्वारदर्शितात्म-

स्वरूपभृत्। निर्व्यापारमनाख्येयं व्याप्तिमात्रमनौपमम्। आत्मसम्बोधविषयं सत्तामात्रमलक्षणम्। प्रशान्तमभयं शुद्धमविभाव्यमसंश्रयम्। विष्णोर्ज्ञानमयस्योक्तं तद् ज्ञानं परमं पदम्॥" इति "तद्विष्णोः परमं पदमि"त्यादावपि प्राप्य-प्रापकभावभेदरहितं स्वरूपमेव परमार्थ इति विवेचितमुपपद्यते॥

"परमार्थस्तु भूपाल संपेक्षात् श्रूयतां मम" ॥ इत्युपक्रम्य "एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः। जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः। परज्ञानमयोऽसद्भिर्नाम-जात्यादिभिर्विभुः। न योगवान् न युक्तोऽभूत् नैव पार्थिव योक्ष्यति।" इति च प्रस्तुत्य प्रवर्तितौ श्लोकौ—"तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्। विज्ञानं परमार्थो यत् द्वैतिनोऽतथ्यदर्शिनः। वेणुरन्ध्रविभेदेन भेदः षड्जादि संज्ञितः। अभेदव्यापिनो वायोस्तथा तस्य महात्मनः" इति। अत्र द्वैतिनोऽतथ्यदर्शिन इति द्वैतदर्शनस्य भ्रान्तित्वं निर्दिश्यमानं द्वैतसामान्यस्य परमात्मव्यतिरेकेणाभावमेव बोधयति। "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः।" इत्यपि सर्वत्रैकरूपत्वेनानुवर्तमानत्वेन वा परमात्ममात्रसत्यतामेव बोधयति। तथाच—"तस्यात्मपरदेहेषु सतोऽपि" इत्यनेन देहादिषु संसर्गमात्राध्यासेन प्रतीयमानस्यापि परमात्मनो न स्वरूपतो भेदः, यथा पुरुषभेदेन समयभेदेन वा स्वरूपतोऽध्यस्यमानानां रज्जुसर्पादीनाम्, यतः परमात्मसंसर्गाध्यासोऽपि परमात्माज्ञानमात्रप्रयुक्तः, नतु देहाद्यज्ञानप्रयुक्तः; तस्याज्ञानाश्रयविषयभावानुपपत्तेः॥

एतेन—यद्यन्योऽस्ति परः कोऽपि" इत्यपि—व्याख्यातम्; तस्याप्यात्मैक्य एव पर्यवसानात्। मदधिकसत्ताकं ममाप्यधिष्ठानभूतमपरं किमपि नास्तीति बोधनद्वाराऽऽत्ममात्राधिष्ठानतावादस्यैवोपबृंहणेनाधिष्ठानव्यतिरेकेणारोप्याभावसिद्धान्तानुसरणेन चार्थान्तरपर्यवसानासम्भवात्। तथाचात्मभेदप्रतीत्यादिकं सर्व-

मौपाधिकमेव, न स्वरूपकृतमिति बोधनार्थमेव "वेणुरन्ध्रविभेदेने" ति श्लोकः प्रवृत्तः। एक एव हि वायुरुपाधिविशेषाद् रूपभेदमिवैक एवात्मा तत्तदन्तःकरणाद्युपाधिसम्बन्धाद् रूपभेदं प्राप्नोतीव ॥

एतेन—दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम्, किन्त्वाकारसाम्यमेव, अत्र वायुत्वेनैकाकाराणां षड्जादिसंज्ञाभेद इव प्रकृतेऽप्यात्मनां देवादिसंज्ञामात्रभेद इत्येवात्र विवक्षितम्, नतु स्वरूपैक्यमित्यादि—परास्तम्; षड्जादिस्वराणां रन्ध्रभेदनिष्क्रमणात् पूर्वं वायवायत्वमात्रेण स्वरूपैक्यस्यैव सार्वजनीनत्वात्, अन्यथा तत्तद्वायवीयांशानां स्वरूपभेदे षड्जादिभेदोऽपि स्वरूपकृत एव स्यात्, इति वेणुरन्ध्रभेदकृतो न भेदः स्यात्। अनेन हि सर्वेभ्यो वेणुरन्ध्रेभ्यो निर्गच्छतां स्वराणां भेदो रन्ध्रभेदनिबन्धन इति बोध्यते, नतु संज्ञाभेदमात्रम्। न ह्याकारसम्ये संज्ञाभेदो मिथ्येति नियमः; समानाकारणां युग्मापत्यादीनां संज्ञाभेदस्य सत्यत्वात्। स्वरूपैक्ये तु संज्ञाभेद औपाधिक एव दृश्यत इति न दोषः। तथाच विष्णुपुराणप्रकरणमिदमपि न सविशेषवादस्यानुकूलम्, किन्तु निर्विशेषवादस्यैव। यतः स्पष्टमेव विष्णुपुराणद्वितीयांशः—"तदेतदुपदिष्टं ते संक्षेपेण महमते। परमार्थसारभूतं यत् तदद्वैतमशेषतः। निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत्। सर्वभूतान्यभेदेन ददृशे स तदात्मनः। सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तिदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक्। एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत्।" इति स्वरूपत एकस्यैवौपाधिको भेद इत्यद्वैतमतनिर्विशेषात्मस्वरूपेणैवोपसंह्रियते। अत्राकाशदृष्टान्तादिकं स्पष्टमद्वैतपदप्रयोगादिकम्, आत्मभेदस्य भ्रान्तिकृतत्वोपक्षेपादिकं च सर्वमद्वैतमतस्यैव तदभिप्रेतत्व उपपद्यते, नतु स्वरूपत आत्मभेदोऽपीति श्रीभाष्यमते। स्पष्टं हि—परमात्मव्यतिरेकेणेतराभनवनि

रूपणानन्तरम्—स्वरूपैक्यमात्मनस्तत्र प्रतिपाद्यते—"सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहमि"ति। निदाघोऽपि राजवर्यः भेददर्शनत्यागेन तत्रैव जन्मनि मुक्तिं प्रापेत्यपि तत्रैव प्रतिपाद्यते—"इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः" इति॥

एतेन—"सोऽहं स च त्वम्" इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं तच्छब्देन परामृश्य, तत्सामानाधिकरण्येनाहं त्वमित्यादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन् देहाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह; अन्यथा देहातिरिक्तात्मोपदेशस्वरूपे 'अहम्' 'त्वम्' सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते। अहं त्वमादिशब्दानामुपलक्ष्येण सर्वमेतदात्मस्वरूपमित्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न संगच्छते। कुतश्चैष निर्णय इति चेत्, देहात्मविवेकविषयत्वादुपदेशस्य। तच्च "पिण्डः पृथक् यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्रक्रमादिति श्रीभाष्योक्तिरपि—निरस्ता॥

आत्मनो नाहं पदार्थत्वम्, यतो—"शब्दोऽहमिति दोषाय नात्मन्येष तथैव च। अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः।......पिण्डः पृथग् यतः पुंसः शिरःपाण्यादिलक्षणः। ततोऽहमिति कुत्रैतां संज्ञां राजन् करोम्यहम्। यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते। यदा समस्तदेहेषु पुमानेको व्यवस्थितः। तदा हि को भवान् सोऽहमित्येतद्विफलं वचः।" इत्यादिना वागादीनां केषामपि नाहंपदव्यवहारयोग्यता, न वाऽऽत्मनः; तस्य समस्तदेहेष्वेकरूपेण स्थितस्य केवलाहंपदार्थत्वासम्भवात्, इति स्वरूपैक्यमेवात्मन उपक्रान्तम्, यस्यैव—"सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्" इत्युपसंहारोऽपि दृश्यते। सति चैवं न देहात्मविवेकविषयत्वमुपदेशस्य, किन्त्वात्मैक्यविषयत्वमेव। तच्च स्वरूपत एव, नत्वाकारसाम्यमात्रेणेत्यपि तत्रैव प्रकरणे व्यक्तम्; अहम-

र्थानात्मत्वेनोपक्रमात्, "सोऽहं स च त्वमि"त्यादिसामानाधिकरण्यं परमात्मजीवात्मनोस्तत्त्वमसीत्यादाविव स्वरूपैक्यनिबन्धनमेव; यतः स्वरूपत्वमेवोपक्रान्तम्। "स च सर्वमेतत्" इति भेदनिर्देशो हि कल्पितं भेदमादायैवेत्यपि प्रकृत एव प्रकरणे बहुशो भेदमिथ्यात्वव्यवस्थापनादुपपद्यमानस्तत्त्वमसीति वाच्यार्थदृष्ट्या भेदनिर्देश इवाकिञ्चित्करः, भ्रान्तिप्रसक्तभेदानुवादपरत्वाद्वा। तथाचोपक्रमोपसंहारादितात्पर्यग्राहकप्रमाणानुसारेणात्रापि तत्त्वमसीत्यादीनामिव स्वरूपैक्यपरत्वमेव युक्तम्; "सामानाधिकरण्यं च विशेषणविशेष्यता। लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनामि"ति न्यायात्॥

अत एव—"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यती"ति विष्णुपुराणवचनमपि षष्ठांशसप्तमाध्यायगतम्, यत्र पूर्वोक्तप्रकारेण—"भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्।" इति स्वरूपतः परमात्मनो जीवात्मनां चाभेदः प्रतिपादितः, निर्विशेषं च ब्रह्म शास्त्रार्थ इति व्यवस्थापितम्, स्वरूपैक्यमेव प्रमाणयति; अन्यथा विभेदस्याज्ञानकृतत्वोक्त्ययोगात्॥

एतेन—"विभेदजनकेऽज्ञाने" इति नात्मस्वरूपैक्यपरम्, नापि जीवेश्वरयोरात्मस्वरूपैक्यमुक्तरीत्या सिद्धम्। यतो जीवपरयोः शरीरशरीरिभावस्यैव शास्त्रार्थत्वात् देहात्मनोरिव जीवपरयोरपि न स्वरूपैक्यं सम्भवति। तथाच श्रुतिः—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति"। "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः।" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति। "भेदव्यपदेशात्" "उभयेऽपि हि भेदेनैनमधीयते" "भेदव्यपदेशाच्चान्यः" "अधिकं तु भेदनिर्देशात्"

इति जीवेश्वरभेदनिरूपणपराणि सूत्राण्यप्यत एवोपपद्यन्त इत्यादिश्रीभाष्योक्तिरपि—परास्ता ; भावानवबोधात् ।

न ह्यद्वैतिनोऽपि जीवानां जीवेश्वरयोर्वा भेदं सर्वथा न स्वीकुर्वन्ति; शरीरात्मनोरिव कल्पितभेदस्य जीवेश्वरयोरद्वैतिभिरपि स्वीकारात्। तथाच द्वा सुपर्णादिवाक्यं कल्पितभेदानुवादेन निर्विशेषचैतन्यस्वरूपबोधनार्थमेव । वरत्रयातिरेकेण प्रश्नकल्पनाया अयोगेन "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीत्येके ।" इति पृष्टवरोत्तरतयैव निर्विशेषचैतन्यमात्रोपदेशस्यापि प्रक्रान्तताया अवश्यमूरीकर्तव्यत्वेन विनोत्क्रमणं मुक्तिमर्हतो जीवस्वरूपस्यैव—"अनश्नन्नन्यः" इत्यादिना प्रतिपादनात्, जीवेश्वरयोः शरीरशरीरिभावस्य कठवल्लीतात्पर्याभावात्, अन्यथा 'छायातपौ' 'गुहां प्रविष्टौ' इत्यादिनिर्देशासांगत्याच्चात्मस्वरूपभेदे पारमार्थिके न किमपि प्रमाणमस्ति। एतेन—सूत्राण्यपि—व्याख्यातानि। सति चैवम्—जीवानां स्वरूपभेदे जीवेश्वरस्वरूपभेदे वा "विभेदजनकेऽज्ञाने" इति वाक्यत एवाज्ञाननिबन्धनतयाऽवगम्यमानेऽद्वैतिनामप्यविवादात् "जीवब्रह्मणोर्भेदस्यासत्कल्पता विष्णुपुराणोक्ता न कथमपि बाधितुं शक्यते। यथाच शरीर-शरीरिणोरपि भेदोऽज्ञानकृत एव; अज्ञाननाशे शरीरस्यापि बाधेन शरीरशरीरिभेदव्यपदेशासम्भवात्, तथाऽन्यत्र व्यक्तम् ॥

स्वरूपैक्यं हि जीवेश्वरयोर्मुक्त्यवस्थामादायैव मन्यते, नतु बन्धावस्थामपि। तथाच यावत् श्रीभाष्यकारास्तदनुयायिनो वा मुक्तावपि जीवस्येश्वरात् परमात्मनो वा पृथगवस्थाने प्रमाणं न प्रदर्शयन्ति, तावत् तत्त्वमसीत्यादिवाक्यसिद्धं स्वरूपैक्यमेव वेदान्तार्थ इति सिद्धम् ॥

एतेन—नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसम्भवः; अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासम्भवात्। यथोक्तम्—"पर-

मात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद् द्रव्यं हि नैति तद्-द्रव्यतां यतः ।'' अत एव—''इदं ज्ञानमुपाश्रित्य मम साधर्म्यमाश्रिताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।'' ''जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ।'' ''भोगमात्रसाम्यलिङ्गाच्च ।'' ''मुक्तोपसृप्यव्यपदेशाच्च ।'' ब्रह्मविदाप्नोति परम्'' ''सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति'' ''एतमानन्दमयमात्मानमुपसंक्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्'' ''स तत्र पर्येति'' ''रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति'' ''यथा नद्यः स्यन्दमानाः समुद्रं प्राप्यास्तं गच्छन्ति नाम-रूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ।'' ''तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'' इत्यादि श्रुति-स्मृति-सूत्राण्युपपद्यन्ते । एतानि हि वाक्यानि न स्वरूपैक्यं मुक्तिः, किन्तु ब्रह्मभोगसाम्येन ब्रह्मसाधर्म्यमेव मुक्तिरिति गमयन्ति । नहि स्वरूपैक्ये ''जीव-परमात्मनौ नाम, येन तयोर्योगः परमार्थ उपपद्येत । तथाच—''निरञ्जनः परमं साम्यमुपैती''ति जीवात्मपरमात्मनोः परमार्थयोगमाश्रित्यैव, इति सर्गादावनुत्पत्त्यादिकमेव साधर्म्यं जीवपरमात्मनोर्मुक्तौ स्वीकरणीयम् । फलाध्यायोऽप्यनेनैवार्थेन ''जगद्व्यापारवर्जमि''त्युपसंह्रियमाणोऽद्वैतमते कथमपि नोपपद्यते । तैत्तरीयोपनिषदोऽपि—''एतमानन्दमयमात्मानमुपसंक्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन्'' इति परमात्मसाधर्म्यमेव भोगसाम्यरूपं ''सोऽश्नुते'' इति प्रक्रान्तमुपसंहरतीत्यादिश्रीभाष्याशयोऽपि—चिन्त्योपपत्तिकः; दत्तोत्तरत्वात् ॥

**परमात्मात्मनोर्योगो हि तदैक्यरूपत्वाद् निर्गुणब्रह्मस्वरूपमेव, नान्यत्; यतो—''मिथ्यैतदन्यद् द्रव्यं हि'' इति सर्वस्य ब्रह्मेतरस्य मिथ्यात्वं प्रतिपाद्य ''परमार्थस्तु भूपाल संक्षेपात् श्रूयतां मम। एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ।'' इति निर्गुणस्यैवैकस्य परमार्थत्वं व्यवस्थाप्यते । स्वरूपेण कार्याणामपरमार्थत्वं कारणरूपेण च परमार्थत्वमिति निरूपणप्रसङ्गे एव हि—''परमात्मात्मनोर्योगः परमार्थ इतीष्यते'' इति वाक्यं प्रवृत्तम्, इति कथमिदं प्रकरणं विष्णुपुराणस्याद्वैतवादस्यैव नानुकूलम् ? व्याख्यानमपि**

विष्णुपुराणस्य विशदमद्वैतवादानुगुणमेव सर्वत्र दृश्यते। "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।" इति भगवद्गीतावाक्यमपि मुक्तस्येश्वरभावं प्राप्तस्य बहुभवनसंकल्पपूर्वकानुप्रवेशादिनिबन्धन-जीवभावनिरासपरं स्वरूपैक्यमादायैवोपपद्यते; सगुणस्य हि भगवतो वासुदेवस्य साधर्म्यं येन चैतन्यांशेन जीवानाम्, तादृशचैतन्य-मात्रतैवात्र साधर्म्यपदार्थः। नहि चैतन्यमात्रस्य निरुपाधिकस्य जीवस्वरूपस्य पारमार्थिकसर्गादिकमिति हि वस्तुस्थितिः। अत एव—"इदं ज्ञानमुपाश्रित्ये"त्युपपद्यते। अत्रेदं ज्ञानम्—"क्षेत्रज्ञं चापि माम्" इति प्रतिपादितप्रत्यगभिन्नपरमात्मस्वरूपज्ञानमेव, नतु सत्यकामत्वादिविशिष्टसगुणब्रह्मज्ञानम्; अन्यथा द्वादशा-ध्यायैरेव शास्त्रार्थसमापनात् तृतीयषट्कवैयर्थ्यमापद्यते। एतेन—योगत्रयविभागानुपपत्तिरपि—व्याख्याता। श्रीभाष्यमतरीत्या दर्शनसमानाकारध्यानस्यैव मोक्षसाधनत्वात् भक्तियोगातिरिक्त-ज्ञानयोगस्याप्रसिद्धिः सर्वविदितैव। ध्यानस्यैवावस्थाविशेषमादाय योगविभागे योगत्रैविध्यनियमानुपपत्तिः। तथाच सगुणब्रह्मज्ञाना-धीनं भोगमात्रसाधर्म्यं नात्र साधर्म्यपदार्थः। अन्यथा—"भोग-मात्रसाम्यलिङ्गाच्चे"ति भोगमात्रेण साधर्म्यस्यैव सगुणब्रह्मज्ञाना-धीनत्वात् "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति वाक्यशेष एवानुपपन्न स्यात्। सति चैवम्—"परमात्मात्मनो-र्योगः" इति वाक्यस्य यदि श्रीभाष्याभिमतदिशा "इदं ज्ञान-मुपाश्रित्य मम साधर्म्यमागताः" इति भगवद्गीतावाक्यैकवाक्य-तयैवार्थो वर्णनीयः, एवमप्यद्वैतवादस्यैवेदमनुकूलम्॥

एतेन—आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं प्रति। विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा॥" इति विष्णुपुराणवचनमपि—व्याख्यातम्। इदं हि वाक्यं श्रीभाष्यकारैरित्थं व्याख्यातम्। आत्मभावम् आत्मनः स्वभावम्। न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्येति॥

विष्णुपुराणव्याख्यायां तु आत्मभावम्...आत्मैक्यम् । विकाराहं लोहं स्वशक्त्याऽयस्कान्त आकर्षको यथेति दृष्टान्तः संयोगमात्रे, नतु तदैक्य इति व्याख्यातम् । न ह्ययस्कान्तेन लोहे स्वस्वरूपं सम्पाद्यते, किन्तु संयोगमात्रमित्ययस्कान्तदृष्टान्तोऽयं संयोगमात्र एवेति सर्वैरपि वक्तव्यम् । स च संयोगः सम्बन्धापरनामा यद्यभेदः, तर्हि तदैक्यम्, अन्यथा तु भेदः । अत्र तु... "आत्मभावम्" इति तद्भावशब्दप्रयोगोऽभेद एव सुष्टु लगति, इति कथमिदमपि प्रकरणं नाद्वैतवादस्यैवानुकूलम् ?

सति चैवम्..."जगद्व्यापारवर्जमि"त्यादिकमपि सगुणोपासनफलमेव विषयीकरोतीत्यत्र नास्माकमपि विप्रतिपत्तिः । इदमेवात्र विप्रतिपन्नम्...यद् जगद्व्यापारवर्जं ब्रह्मभाव एव किं मुक्तिः, उत जगद्व्यापारेण साकं तद्भाव एव मुक्तिरिति । "ब्राह्मेण रूपेण जैमिनिरुपन्यासादिभ्यः" "उत्तराच्चेदाविर्भूतस्वरूपस्तु" इत्यादिसूत्रस्वारस्यात् तत्सार्थक्यस्यान्यथाऽनुपपत्तेश्च जगद्व्यापारेण साकं ब्रह्मभाव एव मुक्तिरिति प्रतीयते । अत एव..."मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादि"ति सूत्रे जीवस्यास्रष्टुत्वेऽनभिव्यक्तस्वरूपत्वं कारणमुक्तमुपपद्यते ; अन्यथाऽभिव्यक्तस्वरूपस्याप्यकारणत्वेऽनभिव्यक्तस्वरूपत्वमप्रयोजकं स्यात् । तथाच "अविभागेन दर्शनात्" इत्यन्तेनैव ब्रह्मविद्यामुख्यफलोपसंहारः, तदनन्तराणि तु "आधिकारिकाणां जीवन्मुक्तानां वाऽवस्थानिरूपणार्थान्येव, येषाम् "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥" इति कार्यब्रह्मणा साकं मुक्तिः' प्रतिपादिता । अनेन च ब्रह्मात्मभावे जातेऽपि केषांचन प्रारब्धकर्मशेषेणाधिकारविशेषमधितिष्ठतां कार्यब्रह्मणश्च मुक्तिस्वरूपमप्युपपादितं भवति । अत एव "अनावृत्तिः शब्दात्" इत्यनावृत्त्यैवोपसंहार उपपद्यते; उत्क्रान्तानां प्राप्तकार्यब्रह्मकाणामेव

त्वावृत्तिप्रसक्तिस्तन्निषेधश्च सम्भवति, न त्वत्रैव विनोत्क्रमणं ब्रह्मभावं प्राप्तस्य। तथाचोत्क्रान्तिनिरपेक्षा साक्षाद् मुक्तिः, तत्सापेक्षा क्रममुक्तिरिति मुक्तिद्वयं सूत्रकारेण सूचितमस्ति। तत्र द्वितीयमुक्तौ कार्याधिकरणं प्रमाणम्, प्रथममुक्तौ तु "सम्पद्याविर्भाव इत्यधिकरणम्, इति मुक्तिद्वयोपसंहारोऽयं कथं नाद्वैतवादस्यैवानुकूलः ?

यथाच "सोऽश्नुते सर्वान् कामान् सहे"त्यस्य वाक्यस्य "आनन्दमयमात्मानमुपसंक्रम्ये"त्यस्य चाद्वैतवाद एवानुकूल्यम्, तथा बहुशोऽन्यत्रात्रैव निबन्ध उपपादितम् ॥

एतेन "तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परम साम्यमुपैती"ति मुण्डकवाक्यमपि "व्याख्यातम्; यतोऽनेन विद्वान् साम्यमुपैति इति भोगमात्रसाम्येन गौणमुक्तिः, यदा न सर्वपुण्यपापविधूननं सम्भवति; आरब्धकर्मशेषानुवृत्तेः श्रुतिसूत्रसिद्धत्वात् प्रथमं प्रतिपाद्यते, अनन्तरं तु सर्वपुण्यपापविधूनने जगद्व्यापारादिभिः साकं ब्रह्मभावाख्यं परमसाम्यं मुख्यमुक्तिः प्रतिपाद्यते ; अन्यथा परमं साम्यमिति परमपदवैयर्थ्यस्यापरिहरणीयत्वात्, इत्युक्तश्रुतिरपि मुक्तिस्वरूपं विषयीकरोत्येव। अधिकं चात्र वक्तव्यं पूर्वमेव प्रकरणार्थसमालोचनपूर्वकमालोचितम्। तथाच नेयमपि श्रुतिरद्वैतवादस्य प्रतिकूला, यतो निर्गुणं ब्रह्म प्रक्रम्यैवेयं श्रुतिः प्रवृत्तेति परमतात्पर्यं ब्रह्मभावाख्यमुक्तावेव। यथाच सर्वासामुपनिषदां निर्गुणब्रह्मसाक्षात्कारनिबन्धनतद्भावाख्यमुक्तावेव तात्पर्यम्, तथा बहुश आलोचितमन्यत्र ॥

एतेन—परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्; फलं चैकरूपमेव, अतो विद्याविकल्प इति सूत्रकारेणैव—"आनन्दादयः प्रधानस्य" "विकल्पोऽविशिष्टफलत्वात्" इत्यादिषूक्तमिति श्रीभाष्योक्तिरपि—चिन्त्योपपत्तिका ॥

परविद्यायाः ज्ञेयैक्यात् प्रयोजनैक्याच्च सर्वत्राभेद एव, न कुत्रापि भेदः, अपरविद्यानामेव तु यथासम्भवं भेदभेदौ, इति विकल्पोऽविशिष्टफलत्वादित्यपरविद्यारूपोपासनापरमेव । सति चैवं परविद्यास्वपि विकल्पव्यवस्थापनं नोपपद्यते, नवा सगुणमेव परविद्यास्वपि प्रतिपाद्यमिति । व्यक्तं चैतत् परविद्याया निर्गुण-विषयकत्वं पूर्वमेव विवेचितम्, इति स्वरूपैक्यमुक्तिवाद एव साम्प्रतम् । अत एव—"ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्म-स्वरूपापत्तिप्रतिपादनपरं वाक्यमुपपद्यते, इति तदैकार्थ्यात् "निरञ्जनः परमं साम्यमुपैती"त्याद्यपि पूर्वोक्तयुक्तेश्च स्वरूपैक्यपरमेव, नतु ज्ञानैकाकारतया ब्रह्मप्रकारतापरम्; ब्रह्मैव भवतीत्येवकार-विरोधात्, मुक्तौ जीवब्रह्मणोः पृथक्सत्त्वस्य प्रमाणासिद्धत्वाच्च । "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव यथा भावा युगादिषु ॥" इति वचनं विनश्वराणां कारणभावं प्राप्तानां च पुनरुत्पत्तिकालीनामवस्थां बोधयति, नहि मुक्तौ जीवस्य कारणावस्थां प्राप्तस्य पुनरभिव्यक्तिः केनापि मन्यते । अतः "सोऽयं देवदत्तः" "सेयं गौः" इत्यादिवत् स्वरूपैक्यमेव "ब्रह्म वेद ब्रह्मैव भवती"त्यत्रापि वाक्यार्थः । प्रकारैक्यं हि प्रकारिभेद एव दृश्यते—सिंहो देवदत्त इत्यादौ, न तु प्रकार्यैक्ये । प्रकार्यैक्यपरं तु वाक्यं प्रकारांशत्यागेन स्वरूपैक्यमेव गोचरयति; अन्यथा "नीलो घटः" इत्यपि प्रकारैक्यमेव गोचरयेत्, नतु प्रकार्यैक्यम् ॥

एतेन—प्रकारैक्ये च तत्ताव्यवहारो मुख्य एव; यथा सेयं गौरिति श्रीभाष्योक्तिरपि—परास्ता ; दृष्टान्तासम्प्रतिपत्तेः ॥

नहि जीवब्रह्मणोः प्रकारिणोः पारमार्थिके भेदे किमपि प्रमाणमस्ति; प्रत्युत—"उदरमन्तरं कुरुते । अथ तस्य भयं भवति ।" इति भेदनिषेध एव प्रामाणिकः । अत एव—"तद्भावभावमपन्नस्त-दाऽसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ।"

इयि भेदस्याज्ञानकृतत्वेन मिथ्यात्वोपपादनपूर्वकमात्यन्तिकाभेदो मुक्तौ प्रतिपाद्यमान उपपद्यते। अत्र तद्भावशब्देन स्वरूपैक्यं विवक्ष्यते, द्वितीयेन भावशब्देन स्वरूपं विवक्ष्यते। तथाच ब्रह्मैक्य-स्वरूपमापन्न इति वाक्यार्थः। इयं चापत्तिर्न शरीरशरीरिभाव-प्रकारैक्यादिनिबन्धना, किन्त्वत्यन्ताभेदनिबन्धनैव; भेदस्यापार-मार्थिकत्वादिति विवेचनार्थम्—असौ परमात्मनाऽभेदो भवति, तस्याज्ञानकृतो भेद इति वाक्यशेषः। यथाचात्र भेदपदस्य सामा-न्यतः प्रवृत्तस्य देवादिभेदपरत्वासम्भवः, तथा पूर्वमेव विवेचितम्। इदं च स्वरूपैक्यं ज्ञाननिबन्धनं नित्यप्राप्तमप्यप्राप्ततया ज्ञायमानम-ज्ञाननिवृत्तौ प्राप्तमिव मन्यत इत्यद्वैतसिद्धान्त एव "विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः।" इति वाक्येन प्रतिपाद्यते; "भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्" इति वाक्यशेषात्। अत एव—मुक्तौ सत्याम्—"क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत्" इति कर्तृ-कर्मक्रियादिसर्वनिषेध उपपद्यते; "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इति श्रुत्यैकार्थ्यात्। अत्र हि श्रुतौ मुक्तावात्मभाव एव, नतु प्रकारैक्यमिति बोध्यते; अभे-दप्रतिपादनात्। तथाच—"विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव। प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः।" इति वाक्यम-प्यभेदप्रतिपादनपरमेवेति वस्तुस्थितिरिति निरूपणार्थमेव—"तद्भा-वभावमापन्नः" इति श्लोकः॥

एतेन—तद्भावभावमापन्न इति मुक्तस्य स्वरूपमाह। तद्भावः—ब्रह्मणो भावः, स्वभावः, नतु स्वरूपैक्यम्। तद्भावभावमापन्न इति द्वितीयभावशब्दानन्वयात्, पूर्वोक्तार्थविरोधाच्च। यद् ब्रह्मणः प्रक्षीणा-शेषभावनत्वं तदापत्तिस्तद्भावभावापत्तिः, यदैवमापन्नः तदाऽसौ पर-मात्मनाऽभेदी भवति, भेदरहितो भवति; ज्ञानैकाकारतया परमात्म-

नैकप्रकारस्यास्य तस्माद् भेदो देवादिरूपः, तदन्वयोऽस्य कर्मरूपाज्ञानमूलः, न स्वरूपकृतः। सतु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावाद् निवर्तते, इत्यभेदी भवति। तदुक्तम्—"एकस्वरूपभेदस्तु बाह्यकर्मप्रवृत्तिजः। देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः।"—इति। एतदेव विवृणोति—"विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यति" ॥—इति। विभेद'—विविधो भेदः देवतिर्यङ्मनुष्यस्थावरात्मकः। यथोक्तं शौनकेनापि—"चतुर्विधोऽपि भेदोऽयं मिथ्याऽज्ञाननिबन्धनः" इति॥ "अविद्या कर्मसंज्ञाऽन्या।" इति ह्यत्रैव विष्णुपुराण उक्तमिति श्रीभाष्योक्तिः—परास्ता; पूर्वोक्तप्रकारेण स्वरूपैक्यपरताया एव युक्तत्वात्॥

अत एव—"मिथ्याज्ञाननिबन्धनो भेद इति शौनकोक्तिरुपपद्यते; कर्मरूपाज्ञानं तु न मिथ्याऽज्ञानम्, अतो न श्रीभाष्याभिमतार्थसिद्धिः। "आत्मनो ब्रह्मणा भेदमसन्तं कः करिष्यती"ति भेदस्य स्वरूपतो निषेधोऽप्यत एवोपपद्यते। ब्रह्मात्मभेदो हि मिथ्याऽज्ञाननिबन्धनदेवादिजीवभावनिबन्धन एव, इति तत्त्वज्ञानेन मिथ्याज्ञान-तन्निबन्धनसर्वोपाधिविरहेण देवादिभावप्रयुक्तभेदोऽपि वार्यते, इति सूष्ठूक्तम्—"देवादिभेदेऽपध्वस्ते नास्त्येवावरणो हि सः।" इति। तथाच जीव-ब्रह्मणोरभेद आत्यन्तिक एव शास्त्रार्थः॥

अत एव—"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।" इति जीवब्रह्माभेदप्रतिपत्तिरुपपद्यते; न ह्यत्रान्तर्यामिरूपेण सर्वस्यात्मतयैवैक्याभिधानम्; तस्य सर्वात्मताप्रयोजकतया "क्षेत्रज्ञं चापि मां विद्धि" इति क्षेत्रज्ञमात्रात्मताबोधनवैयर्थ्यापत्त्याऽत्र विवक्षणासम्भवात्। सर्वान्तिर्यामित्वं हि यदि शुद्धस्य निर्गुणस्यैव चैतन्यस्य स्वीक्रियते, तर्हि चैतन्यरूपेणाभेदबोधनं नास्माकमपि विरुद्धम्। सगुणत्वे त्वन्तर्यामिणो "नान्यदतोऽस्ति द्रष्टे" त्यादिवाक्यशेषो विरुद्ध्यते, इति पृथिव्यादिशरीरकत्वम्—"तस्यैष एव एव शारीर आत्मे"त्यादाविव काल्पनिकमेव; अन्यथा तु जीवेश्वर-

योर्भेदस्य श्रुतिशतसिद्धस्य विरोधापत्त्याऽगत्या नान्तर्यामिरूपेणाभेदः, किन्तु स्वरूपत एवेत्येव फलिष्यति। सर्वथा तु जीवब्रह्मणोः शरीरशरीरिभावमादाय—क्षेत्रज्ञं चापि मां विद्धि" इति वाक्यं न योजयितुं शक्यते। क्षराक्षरातीतं हि ब्रह्मस्वरूपम्—"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः॥"इति वाक्येन बोध्यते, नतु क्षराक्षरशरीरकम्। सति चैवम्—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।" "अहमात्मा गुडाकेश सर्वभूताशयस्थितः।" इत्यादिवाक्यान्यपि स्वरूपतो जीवब्रह्माभेदप्रतिपादनपराण्येवेति युक्तम्, नतु शरीरशरीरिभावपराणि। "यद्यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।" इत्यादिकं तु सर्वेषां ब्रह्मव्यतिरिक्तानां सच्चिदानन्दान्यतमादिरूपेण ब्रह्मतादात्म्यनिरूपणद्वारा सर्वेषां ब्रह्मण्यध्यास इति निरूपणार्थमेव, न सर्वशरीरकत्वं ब्रह्मणो बोधयितुम्। तथाच शास्त्राणां परमं तात्पर्यं निर्विशेष एव वस्तुनि, यतोऽन्यस्य—"अतोऽन्यदार्तमि" त्यादिश्रुतिमहिम्ना मिथ्यात्वमवगम्यते। मिथ्यात्वं च सर्वस्य ब्रह्मव्यतिरिक्तस्य ब्रह्माश्रयविषयप्रत्यक्षादिप्रमाणसिद्धानिर्वचनीयज्ञाननिवर्त्य-भावरूपाज्ञानपरिणामत्वेन ब्रह्मविवर्तत्वेन च, अथवा जीवाश्रिताविद्यावृतब्रह्मविवर्तमात्रत्वेन॥

श्रीभाष्यकारास्तु—नोक्तरूपमज्ञानं स्वीकर्तुं शक्यते; अनुपपद्यमानत्वात्, इति निरूपणप्रसङ्गेनाज्ञाने सप्तानुपपत्तीरुपक्षिपन्ति (१) आश्रयानुपपत्तिः, (२) विषयानुपपत्तिः, अथवा तिरोधानानुपपत्तिः, (३) स्वरूपानुपपत्तिः, (४) प्रमाणानुपपत्तिः, (५) अनिवर्चनीयत्वानुपपत्तिः, (६) निवर्तकानुपपत्तिः, (७) निवृत्त्यनुपपत्तिः—इति॥

तत्राज्ञानस्य न जीव आश्रयः; अविद्याकल्पितत्वाद् जीवभावस्य। तथाचाविद्यानिमित्तो जीवो नाविद्याश्रयः; अन्योन्याश्रयापत्तेः। नापि ब्रह्माविद्याश्रयः; तस्य स्वप्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्। तथाच नाथमुनयः—

ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् ।
अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने ॥
ज्ञानं ब्रह्मेति चेद् ज्ञानमज्ञानस्य निवर्तकम् ।
ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम् ॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् स्यात् प्रमेयता ।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते" ॥—इति, इत्याश्रयानुपपत्तिं संगृह्णन्ति ॥

अयमत्र जीवाज्ञानाश्रयतापक्षाभिप्रायः—अज्ञानं हि नाग्रहणम्, न वाऽन्यथाग्रहणम्, किन्त्वावरणशक्तिमात्रविशिष्टं भावरूपमनिर्वचनीयं किञ्चिदेवाज्ञानं नाम। अस्य चाहमज्ञ इति प्रतीत्यनुसारेण जीवाश्रयत्वमेव। न ह्यत्र मते विक्षेपशक्तिरप्यविद्यायाः स्वीक्रियते, इति न जीवोपादानताप्रसङ्गः ; जीवाज्ञानावृतब्रह्मविवर्तमात्रत्वात् तद्विलक्षणस्य प्रपञ्चस्य। नहि सदृशमेव विवर्तोपादानमिति नियमः; मधुरे तिक्तभ्रमदर्शनात्, विशेषदर्शनसामग्र्यभावस्यैव भ्रमकारणत्वेनोपपत्तौ सादृश्यज्ञानस्याकारणत्वाच्च। तस्य च जीवस्यान्तःकरणाद्युपलक्षितचैतन्यकोटेरेवाज्ञानाश्रयत्वाद् ब्रह्माज्ञानाश्रयतापक्षात् फलतो न विशेष इति प्रदीपेऽस्मदीये विशदं निरूपितम् । "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः।" इत्यविद्याया इव तदुपहितजीवस्याप्यनादित्वात्तु नान्योन्याश्रय इति तु ब्रह्मसिद्ध्यादौ व्यक्तम्। तथाचाविद्याकल्पितत्वेऽपि जीवस्यानादित्वाद् नोत्पत्तावन्योन्याश्रयः, जीवज्ञानस्याविद्याज्ञानाधीनत्वम्, अविद्याज्ञानस्य जीवज्ञानाधीनत्वमिति तु न केनापि स्वीक्रियते, इति ज्ञप्तावपि नान्योन्याश्रयः। अतोऽविद्याया जीवाश्रयत्वपक्षोऽयं न कथमपि दुष्टः। तदिदमविद्याया आवरणशक्तिमात्रम्, तस्या निमित्तमात्रत्वम्, नोपादानत्वमिति मतेन ॥

यदितु "मायां तु प्रकृतिं विद्याद् मायिनं तु महेश्वरम्" इति वचनेनाविद्याया विक्षेपशक्तिरुपादानत्वं च स्वीक्रियते, तर्हि त्वविद्याविषयत्वमिव तदाश्रयत्वमपि ब्रह्मण एव स्वीक्रियते; उक्त-श्रुतिवशादेव; वृत्त्यवच्छिन्नचैतन्यस्य वृत्तेरेव वाऽज्ञाननिवर्तकत्वेन तद्विरोधित्वेन स्वप्रकाशचैतन्यरूपस्य ब्रह्मणोऽज्ञानविरोधित्वस्याद्वैतिभिरनङ्गीकारेण "स्वप्रकाशचैतन्यस्वरूपत्वेनाविद्याविरोधित्वादि"त्यस्यानुक्तोपालम्भनत्वात् ॥

एतेन—"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्। अज्ञानं चेत् तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने ॥" इति समाहितम्; वृत्त्यवच्छिन्नचैतन्यस्य वृत्तिमात्रस्य वाऽज्ञाननिवर्तनप्रभुत्वात्। तथाचाहं ब्रह्मास्मीत्यखण्डाकारवृत्तिरेवाज्ञाननिवर्तिका, नतु ब्रह्मरूपमेव ज्ञानं तन्निवर्तकम्। यथाचाखण्डाकारवृत्तिविषयत्वेऽपि फलव्याप्यत्वाभावाद् न ब्रह्मणोऽनुभाव्यत्वापत्तिः, नवाऽनभूतित्वप्रसङ्गः, तथा पूर्वमेव विवेचितम्। एतेन—"ज्ञानं ब्रह्मेति चेद् ज्ञानमज्ञानस्य निवर्तकम्। ब्रह्मवत् तत्प्रकाशत्वात् तदपि ह्यनिवर्तकमि" त्याद्यपि—परास्तम्; वृत्तिरूपस्य ज्ञानस्याज्ञाननिवर्तनमात्रोपक्षीणस्य ब्रह्मप्रकाशत्वाभावेन ब्रह्मतुल्यत्वाभावाच्च। नहि वृत्तिर्नाम मुख्यं ज्ञानम्, ज्ञानावच्छेदकत्वाद् वृत्तौ ज्ञानत्वोपचारमेव ह्यद्वैतिनो मन्यन्ते ॥ अथवा—इदं रजतम् इत्यादाविवाधिष्ठानातिरिक्ता तदाकारा वृत्तिरेवाज्ञाननिवर्तिका। तदेव ज्ञानमज्ञानविरोधि, यत्राज्ञानकार्याभावो ज्ञायते; यथा शुक्तौ रजताभावज्ञानं शुक्त्यज्ञानस्य बाधकम्। यथाहि शुक्तित्वं शुक्तेर्विशेषः, एवं रजताभावोऽपि; रजताभावव्याप्यत्वादेव हि शुक्तित्वं विशेषः। इयान् विशेषः—यत् शुक्तिज्ञानमपि शुक्त्यज्ञानविरोधि, रजताभावज्ञानमपि; शुक्तित्वाज्ञानदशायामपि शुक्तिमेवाजानतः रजताभावज्ञानमात्रेणापि रजतज्ञानाभावात्, तद्वत्ताज्ञानस्येव तद्व्याप-

कतदभावज्ञानस्यापि तदज्ञानविरोधित्वात्, ब्रह्मज्ञाने तु ब्रह्मणो निर्विशेषत्वाद् द्वितीयाभावत्वोपलक्षितब्रह्मसिद्धिरूपत्वादद्वैतसिद्धेर्द्वितीयाभावज्ञानमेवाज्ञानविरोधि ॥

एतेन—ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं न तावद् ब्रह्मयाथात्म्याज्ञानविरोधि ; अतद्विषयत्वात्, ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः, प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुद्ध्यते। तेन तु प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितम्, ब्रह्मस्वरूपाज्ञानं तिष्ठत्येवेति श्रीभाष्योक्तिरपि—परास्ता ॥

अद्वितीयत्वस्यैव ब्रह्मयाथात्म्यरूपत्वेन तदज्ञाननिबन्धनत्वात् सद्वितीयत्वस्य, द्वितीयमिथ्यात्वज्ञानस्याप्यद्वितीयत्वविषयकत्वेन च ज्ञानाज्ञानयोः समानविषयकत्वाव्याघातात्। इदमेवाभिप्रेत्याद्वैतिनो मन्यन्ते—यद् ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव, तत्तु मिथ्यात्वज्ञानेन निवृत्तम्, स्वरूपं तु स्वानुभवसिद्धमिति ॥

अयमाशयः—शुद्धं चैतन्यं स्वप्रकाशमज्ञानेनावृतमपि वेदान्तप्रमाणादिनाऽद्वितीयत्वेन ज्ञानदशायामेवानावृतं भासते। तथाचाद्वितीयत्वाकारेण ब्रह्मज्ञानमेव ब्रह्माज्ञानविरोधि, नतु स्वतः प्रकाशमात्रम्। अद्वितीयत्वरूपेण प्रकाशस्तु यावत्तदाकारवृत्तिसत्त्वमेव। तदनन्तरं तु ज्ञातत्वेनेवाविद्यानिवृत्तित्वेनाप्युपलक्षितात्मस्वरूपमात्रं ब्रह्मानावृतमेव प्रकाशते। तथाच संसारदशायां स्वदृष्ट्या स्वयं प्रकाशमानमपि कल्पितजीवदृष्ट्याऽऽवृतं वर्तते ब्रह्म, साक्षात्कारानन्तरं तु तत्तज्जीवस्वरूपाणां कल्पितानां बाधात् तत्तज्जीवदृष्ट्याऽऽवृतत्वं जहाति ब्रह्म ॥

एतेन—ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धम्, इति तद्विरोधिसद्वितीयत्वज्ञानं तद्बाधश्च न स्याताम्। अद्वितीयत्वं धर्म इति चेत्, न; अनुभवरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात्।

अतो ज्ञानरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वमिति श्रीभाष्यमपि—परास्तम्; उपलक्षणतया द्वितीयाभावज्ञाने बाधकाभावात् ॥

तदुक्तम्—"निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः" इति। इदं तु भावाद्वैतमतेन यदि मन्यते, तर्हि द्वितीयाभावत्वं ब्रह्मणो धर्म इति स्वीकारोऽपि न विरुद्धः; यतोऽनुभाव्यभावरूपधर्मराहित्यमेव तन्मतेऽद्वैतं नाम, नाभावरूपधर्मराहित्यमपि; "भावरूपा एव धर्मा अद्वैतं निघ्नन्ति, नाभावरूपा धर्माः" इति वचनात्। अस्मिंश्च पक्षे—"अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य" इति भगवत्पादभाष्यं मूलम् ॥

एतन्मतरीत्या तु—श्रीभाष्याभिमतनिर्विकल्पकस्वरूपमपि न विरुद्धम्; यतोऽद्वैतिनामपि सत्यादिवाक्येनासत्यादिव्यावृत्तिविशिष्टं ब्रह्म बोध्यत इति स्वीकारेऽपि न हानिरित्याद्यन्यत्र ब्रह्मसिद्ध्यादौ व्यक्तम् ॥ सर्वथा तु ज्ञानरूपं ब्रह्म नाज्ञानविरोधि, इति ब्रह्मणोऽज्ञानाश्रयत्वं न कथमप्यनुपपन्नम् ॥

अथ श्रीभाष्यकाराः—अविद्यया प्रकाशस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात्। प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो वा? विद्यमानस्य प्रकाशस्य नाशो वा? प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एवेति वदन्तो विषयोप्यविद्याया दुर्निरूप इति—मन्यन्ते ॥

इदमत्राद्वैतिनो मन्वते—किञ्चिद्रूपावच्छेदेन प्रकाशाभाव एवावरणं नाम। अखण्डाकारसाक्षात्कारपर्यन्तं हि किञ्चिद्रूपावच्छेदेन प्रकाशाभावो ब्रह्मणो वर्तत एव। यतो नाधिष्ठानयाथात्म्यं संसारदशायां भासते, सर्वात्मनाऽप्रकाशाद् ब्रह्मणः। सत्त्वचित्वानन्दत्वादिकं तु धर्मोऽनाद्यज्ञानकल्पितोऽपि यावद्ब्रह्मसाक्षात्कारमेव धर्मतयाऽनुवर्तते। तथाच यथा धर्मभूतज्ञानस्यात्मासाधारणधर्माकारस्यात्मासाधारणधर्मत्वादर्शनाद् देहात्म-

भ्रमो देहात्मभ्रमेण च तस्यासाधारणधर्मत्वाग्रहण-मित्यन्योन्याश्रयोऽनादित्वादज्ञानस्य श्रुतप्रकाशिकोक्तरीत्या न दोषः, एवमेकस्यापि ब्रह्मणोऽज्ञाननिबन्धनसत्त्वचित्त्वाद्यनादि-धर्माध्यासोऽपि न विरुद्धः; अज्ञानविषयत्वस्याप्यनादित्वात्। तथाचासत्त्वापादकत्वमभानापादकत्वमनानन्दनापादकत्वं वा तिरोधानमज्ञानेन मन्यते, इति सद्रूपमात्रेण ज्ञानेऽभाना-पादकमनानन्दतापादकं चाज्ञानम्, सच्चिद्रूपेण ज्ञानेऽनानन्दता-पादकमज्ञानम्, इत्यादि क्रमेणावरणमस्त्येव। तथाच सच्चिदानन्द-रूपेणाज्ञानं न कदापि ब्रह्मणः, नवानेन रूपेण ज्ञानमखण्डसाक्षा-त्कारावस्थां विहाय ब्रह्मणः, इति नाविद्यातिरोधाने स्वरूप-नाशानत्तिः॥

वस्तुतस्तु—श्रीभाष्यमते क्षेत्रज्ञानां ज्ञानस्वरूपाणां नित्यं स्फुरणात् तेषां स्वरूपतिरोधानेन देहात्मभ्रमो यो वक्तव्यः, स एव तेषां स्वरूपतिरोधानम्, इति संभवान्नोपपत्तिः। अतः स्वरूपस्फुरणं न भ्रम-विरोधीत्यवश्यमेव स्वीकर्तव्यम्। अभ्युपगतं चैवमेव श्रुतप्रकाशि-कादिकारैरपि। सति चैवं स्वरूपस्फुरणस्याज्ञानाविरोधित्वस्य मतद्वय सम्मतत्वाद् ब्रह्मणोऽज्ञानाश्रयत्व-विषयत्वाक्षेपः श्रीभाष्य-काराणां स्वमतेऽप्यविशिष्ट एव। एतेन—तिरोधानस्वरूपमपि—व्याख्यातम्; नित्यस्फुरणरूपस्य जीवस्य स्वयं संकोचविकासान-ङ्गीकारेण तत्प्रसरणाभावो हि न तिरोधानम्, यदितु—तदणुत्व-नित्यत्वादिधर्मभूतज्ञानप्रसराभाव एव तिरोधानम्, तर्हि शास्त्रतो जीवाणुत्व-नित्यत्वादिज्ञानवतां परमात्मसाक्षात्कारा-भावेऽपि देहात्मभ्रमो नानुवर्तेत, अनुवर्तते तु तेषामपि कर्म-क्षयपर्यन्तं देहात्मभ्रमादिकमिति श्रीभाष्यकारा अपि नात्र विप्रति-पन्नाः, इति स्वरूपतिरोधानमेवाज्ञानस्य स्वीकर्तव्यम्। यत्र हि शुक्तिरजतादौ शुक्तित्वादेः शुक्त्यसाधारणतया ज्ञातस्य तिरोधा-

नाद् भ्रमः, शुक्तित्वस्योक्तविधस्य ज्ञानादेव बाधश्च, तत्र भ्रमस्य रजतादेश्च बाधो व्यवहारदशायामेव दृश्यते, इति देहात्मभ्रमस्यापि परमात्मसाक्षात्कारात् पूर्वमेव बाध आपद्यते शुक्तिरजतभ्रमादिवत्, यद्यसाधारणधर्मतिरोधाननिमित्त एव देहात्मविभ्रमः स्यात् ॥

वस्तुतस्तु—सत्त्वचित्वाद्यसाधारणधर्माज्ञानमेवब्रह्मणोऽप्यावरणमिति स्वीकाराद् न कोऽपि विरोधः। सत्त्वचित्त्वाद्यग्रहणादध्यासः, अध्यासात् सत्त्वचित्त्वाद्यग्रहणमित्यन्योन्याश्रयापत्तिस्तु—"असाधारणधर्मादर्शनादध्यासः, अध्यासादसाधारणधर्माग्रहणम्" इत्यन्योन्याश्रयापत्तेः श्रुतप्रकाशिकोक्तरित्या श्रीभाष्यमतेऽपि समानैव। अनादित्वेन यदि मन्यते परिहारः—तर्ह्यद्वैतमतेऽपि समानम्।

एतेन—धर्मभूतज्ञानस्य स्वरूपातिरेकेण संकोचविकासात्मकमवस्थाद्वयमभ्युपेयम्, अतस्तत्तिरोधानं कर्मणा तत्संकोचः, तन्निवृत्तिस्तु तत्प्रसरः, स एव प्रकाश इत्यादिश्रुतिप्रकाशिकापि—परास्ता ॥

नहि ज्ञानप्रसरो नाम भावरूपः पदार्थो निवृत्तिपदार्थतामर्हति, नवा ज्ञानप्रसरस्यैव प्रकाशत्वे धर्मभूतज्ञानस्य स्वप्रकाशत्वमुपपद्यते। स्वतः सर्वदा प्रकाशमानत्वेन हि स्वप्रकाशत्ववादः, नतु प्रसरार्हत्वमात्रेण; अन्यथाऽऽत्मस्वरूपस्य ज्ञानस्य तदनङ्गीकारात् स्वप्रकाशत्वमेव न स्यात्। प्रसरणयोग्यधर्मभूतज्ञानस्वरूपत्वादात्मनोऽपि स्वप्रकाशत्वे स्वस्यैव स्वधर्मत्वायोगाद् धर्मत्वासिद्धिः, स्वरूपत्वासिद्धिर्वा; अन्यथा धर्मभूतज्ञानस्येवात्मनोऽपि संकोचविकासापत्त्या जैनमताविशेषापत्तिः ॥

एतेन—अवस्थाद्वयस्यागमापायित्वात् द्रव्यं नित्यमेवेति वादोऽपि—परास्त; "एवं चात्माकात्स्न्र्यम्" इति सौत्रन्यायविरोधापत्तेः ॥

तथाच—असत्त्वाभानाद्यापादकत्वमेव तिरोधानम्, नतु प्रकाद्यनाशः ॥

एतेन—प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो वा विद्यमानस्य प्रकाशस्य नाशो वा प्रकाशस्यानुत्पत्त्यभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव स्यादिति—परास्तम् ॥

तदिदं सिद्धम्—शुद्धचैतन्याश्रया तद्विषया चाविद्या, यया स्वप्रकाशाप्यनुभूतिरनन्ताश्रयमनन्तविषयं चात्मानमनुभवतीति ॥

इयं चाविद्या न पारमार्थिकी; अनभ्युपगमात्, इति ब्रह्मज्ञानबाध्यत्वाविशेषादपारमार्थिकीत्येव स्वीकर्तव्यम्। सा च न दृशिः, नवा द्रष्टा, किन्तु दृश्यैव। दृश्यत्वं हि फलव्याप्यत्वेन साक्षिभास्यत्वेन वा, नतु काल्पनिकत्वेन। तथाच न मूलदोषान्तरापेक्षयाऽनवस्थाप्रसङ्गः। सत्यं घटादीनां दृश्यानां मूलदोषान्तरापेक्षासंभवः। जीवोऽप्यनादिरप्यविद्यापेक्ष एव, अविद्या तु न दोषान्तरापेक्षैव स्वरूपं भजते। अत एव ब्रह्मणोऽप्यनादेर्नाविद्यापेक्षा, तथाचेतरानपेक्षानादिस्वरूपं स्वत एव वर्तत इति स्वीकर्तुं योग्यमेव, इति ब्रह्मण इवाविद्याया अपि नाविद्यापेक्षा। ब्रह्मवत्पारमार्थिकत्वापत्तिस्तु श्रुतौ ब्रह्ममात्रसत्यत्वस्याविद्याबाध्यत्वस्य च प्रतिपादनाद् नापतति। शून्यं तु माध्यमिकानां न किञ्चिद्रूपेण ज्ञातत्वे सति किञ्चिद्रूपेणाज्ञातत्वलक्षणमधिष्ठानत्वं भजते। बाध्यत्वं हि तदधिकसत्ताकार्थविषयकज्ञानेनैव भवति, नतु स्वसमानसत्ताकार्थविषयकज्ञानेन। प्रपञ्चाभावस्तु प्रपञ्चाभावत्वोपलक्षिताभावरूपब्रह्मरूपत्वेनैव बाधकज्ञानविषयः, न त्वभावत्वविशिष्टेन व्यावहारिकेण रूपेणेति मते अपरमार्थस्याधिष्ठानत्वशङ्का न सावसारा। नहि वयमधिष्ठानस्यापारमार्थिकत्वेऽनवस्थां दूषणं मन्यामहे, किन्तु तत्रारोपितस्य प्रपञ्चस्य बाध्यत्वासिद्धिम्, तदपरमार्थत्वसाधकबाधकज्ञानान्तराभावं च ॥

एतेन—अपारमार्थ्येन स्वरूपानादित्वमपि नानवस्थापरिहारः; तथासति माध्यमिकपक्षविजयप्रसङ्गात् । तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वे तस्याः भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात्, तस्यापि भ्रान्तिसिद्धत्वेऽनवस्था स्यादित्यनवस्थया ह्यधिष्ठानपारमार्थ्यं साधितम्। माध्यमिकेनापारमार्थ्या-दधिष्ठानस्य स्वरूपानादित्वे स्वीकृतेऽनवस्था परिहृता, इत्यधिष्ठानापार-मार्थ्यमेव स्यात्। किञ्च स्वरूपानादित्वेऽप्यविद्यापेक्षाऽस्त्येव; जीव-स्यानादित्वेऽप्यविद्यापरिकल्पितत्वस्याद्वैतिभिरङ्गीकारादित्यादि श्रुतप्रका-शिकोक्तम्—परास्तम् ॥

नहि परमार्थब्रह्मज्ञानबाध्यत्वमिवाविद्यायाः, शून्यस्य स्वा-तिरिक्तपरमार्थज्ञानबाध्यत्वं शून्यज्ञानबाध्यत्वं प्रपञ्चस्य वा वर्तते, अन्यथा प्रपञ्चज्ञानबाध्यत्वमेव शून्यस्य कथं न स्यात्; उभयोरपार-मार्थिकत्वाविशेषादिति न माध्यमिकपक्षाविशेषोऽत्र संभवति। यथाचानादिरपि जीवो नाविद्यानिरपेक्षस्वरूपः, तथा पूर्वमेव विवेचितम् ॥

वस्तुतस्त्वनिर्वचनीयत्वेनैवाविद्याया अपारमार्थिकत्वम्; सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यत्वात्,दुर्घटत्वेनाविद्याया अपारमा-र्थिकत्वम्। इदं च दुर्घटाविद्यामूलकत्वेन, अविद्यायास्तु स्वत एव। तथाचापरमार्थत्वे समानेऽपि प्रपञ्चोऽविद्यापेक्षः; अविद्या तु न तत्सापेक्षेति विशेषस्तु न वारयितुं शक्यते ॥

एतेन—दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वम्, सा च परमार्थत्वप्रयुक्तोपपत्तिर्नामान्तरेण दोषापेक्षैव। सा च प्रपञ्च इवाविद्याया-मपि समानैव, इत्यनवस्थाशङ्का दुष्परिहरेत्यादिश्रुतप्रकाशिकोक्तिरपि—परास्ता; सदसत्त्वादिप्रयुक्तोपपत्तिनिरपेक्षत्वस्यैव दुर्घटत्वरूपत्वात् ॥

इदं हि दुर्घटत्वं प्रतीतिबाधप्रयुक्तमेव, नतु दोषापेक्षत्वम्। तथाच प्रपञ्चस्य "मायां तु प्रकृतिं विद्यात्" इति वाक्यानुसारेण ज्ञाननिवर्त्याविद्यामूलकत्वनिर्णयवद् अविद्याया ज्ञाननिवर्त्याया एव दोषान्तरमूलकत्वनिर्णायकप्रमाणाभावाद् अविद्याया अपि दोष-

मूलकत्वकल्पनं न सावसरम्। सति चैवमविद्यायामपि प्रतीति-बाधयोरविशेषाद् दुर्घटत्वेनाप्यपरमार्थत्वमविद्यायाः स्वीक्रियते, इति नानवस्थादिदोषोऽद्वैतमते समापतति, यत्रानिर्वचनीयं स्वरूपमविद्यायाः स्वीक्रियते ॥

अनिर्वचनीयत्वं चाविद्यायाः—ना सा सती; बाध्यत्वात्, नाप्यसती; प्रतीयमानत्वात्, नापि सदसद्रूपा; विरोधात्, इत्यगत्या सदसद्विलक्षणत्वादिस्वरूपत्वात्। "इदं रजतम्" "अयं सर्पः" इत्यादिप्रतीतिविषया रजतादयो हि सदसद्विलक्षणा एव, न सदसद्रूपाः ; व्याप्तिविरोधात्। सद्विलक्षणस्यासत्त्वम्, सतश्चासद्विलक्षणत्वं दृष्टम्, न त्वेकस्योभयविलक्षणत्वं दृष्टमिति शङ्का तु शुक्तिरूप्यादौ सदसद्विलक्षणत्वस्य दर्शनाद् नावसरति। क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वं ह्यसत्वम्, तदभावः सत्त्वम्, शुक्तिरूप्यादौ सद्रजतमिति भासते, न च तत्राबाध्यत्वलक्षणं सत्त्वम्। तथाचासद्भिन्नत्वं बाध्यत्वमुभयं च शुक्तिरूप्यादौ दृष्टम्, इति न सदसद्विलक्षणं वस्तु न सिद्धम्; ख्याति-बाधान्यथानुपपत्तिप्रमाणसिद्धत्वात्। एतेन—ब्रह्मणोऽपि सदसद्विलक्षणत्वापत्तिशङ्कापि—परिहृता ; अबाधात् ॥

अयं भावः—शुक्तिरूप्यादीनां त्रिकालाबाध्यत्वरूपे सत्त्वे न —"इदं सद् रजतम्" इति ज्ञानं प्रमाणम्; तस्य भ्रमात्मकस्य प्रमाणत्वाभावात्। सत्तादात्म्यं प्रतीतिकालमात्रवृत्तिसत्त्वं वाऽऽदाय प्रतीत्युपपत्तौ त्रैकालिकसत्त्वविषयीकरणासंभवात्। तथाच भ्रमकालेऽस्तीतिप्रतीतिविषयस्य बाधज्ञानाद् नास्तीतिप्रतीतिविषयत्वमपि न विरुद्धम्; पारमार्थिकत्वाभावस्यैव नास्तीतिप्रतीतिविषयत्वात्, सत्तादात्म्येऽपि ब्रह्मवत् सद्रूपत्वाभावविषयत्वाद्वा। अधिकमद्वैतसिद्ध्यादौ व्यक्तम्। तदिदं सिद्धम्—यत् चैतन्याश्रयविषयमनिर्वचनीयं भावरूपमज्ञानमेव दोषविधया प्रपञ्चोपादानम्, इत्य-

विद्यामूलकत्वाद् ब्रह्मव्यतिरिक्तस्य सर्वस्य प्रपञ्चस्य, निर्गुणमेव ब्रह्म वेदान्तशास्त्रार्थ इति ॥

अत्र चानिर्वचनीये भावरूपेऽज्ञाने "अहमज्ञ इति प्रत्यक्षम्, विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वविषया-वरण-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावद् इत्यनुमानम्, मिथ्याभूतस्य मिथ्यैवोपादानं भवितुमर्हतीत्यर्थापत्तिः, "तमसैवेदमावृतमासीत्" इत्यादिश्रुतिवाक्यानि च प्रमाणम् ॥

"अहमज्ञः" "मामन्यं च न जानामि" इति प्रत्यक्षं हि न ज्ञानप्रागभावविषयकम्; अभावस्यानुपलब्धिप्रमाणविषयत्वेन प्रत्य क्षाविषयत्वात्, अहंज्ञानस्य धर्मिज्ञानस्य ज्ञानज्ञानस्य च प्रतियोगि-ज्ञानस्य—"अहमज्ञः" इति प्रतीतिदशायां सत्त्वावश्यकत्वेन ज्ञानसा-मान्याभावविषयीकरणासंभावात्। नहि धर्मि-प्रतियोगिज्ञानं विना ज्ञानाभावानुभवः संभवद्युक्तिकः, भावरूपत्वे त्वज्ञानस्य तस्य धर्मि-प्रतियोगिज्ञानानपेक्षत्वात् प्रत्यक्षोपपत्तिः। भावरूपं ह्यज्ञानं "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि"ति सिद्धान्ताद् नाज्ञानविरोधि। अखण्डाकारवृत्तिर्हि वस्तुयाथात्म्यावगाहिनी, न शुद्धं चैतन्यं साक्षिचैतन्यं वा। तथाच विनापि प्रमाणाधीन-विषयाकारवृत्तिं साक्षिचैतन्येनाज्ञानं भातुं शक्यत एव, इति न भावरूपाज्ञानवादेऽपि धर्मिविषयज्ञानावश्यकत्वेऽपि "अहं जानामि" इत्यादौ भावरूपाज्ञानप्रतिभासायोगः। स्वयंप्रकाशस्यैव चैतन्यस्याज्ञानेन विषयीकरणेन तद्भानार्थं प्रमाणापेक्षाया अभावात्॥

एतेन—भावरूपाज्ञानवादेऽपि विरोधस्तुल्यः; विषयत्वेनाश्रयत्वेन च ज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा ? नवा ? प्रतिपन्नश्चेत्, तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति ?

अप्रतिपन्नश्चेत्, व्यावर्तकाश्रय-विषयज्ञानशून्यमज्ञानं कथमनुभूयेत ? इति श्रीभाष्योक्तिरपि—परास्ता; वृत्त्याऽऽवरणनिवृत्तावनावृतचैतन्यस्यैवाज्ञानविरोधित्वेन यावदखण्डाकारवृत्ति स्वयंप्रकाशमानस्यापि चैतन्यमात्रस्याज्ञानविरोधित्वेन पूर्वोक्तविधया शुद्धचैतन्यविषयाज्ञानावस्थानाविरोधात्॥

**इदमेवाभिप्रेत्योच्यते— विशदस्वरूपावभासोऽज्ञानविरोधी, अविशदस्वरूपं तु प्रतीयते, इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोधः। अत्राविशदाभासत्वमावृतत्वे सति स्वयं प्रकाशमानचैतन्यत्वम्, विशदावभासत्वं त्वानावृतस्वयंप्रकाशचैतन्यत्वमित्यद्वैतिनो मन्यन्ते। तथाच नाद्वैतमतरीत्या भावरूपस्याज्ञानस्य चैतन्यभानेऽपि साक्ष्यधीनेऽनुभवविरोधः, मतान्तरे तु धर्मिज्ञानाप्रत्यक्षतायामभावप्रत्यक्षानुपपत्त्या ज्ञानाभावविरोधो दुरपह्नवः॥**

**अयमर्थः—यथाहि मतान्तरे "मामहं न जानामि" इत्यादौ प्रमाणजन्यज्ञानाभावो विषयः, न तथाऽद्वैतमते; तत्र प्रत्यगर्थाज्ञानस्यैव विषयीकरणात्। सत्यमद्वैतमतेऽपि प्रत्यगर्थाज्ञानं प्रत्यगर्थविषयप्रमाणजन्यज्ञानाभावादेव भवति; तथापि प्रमाणजन्यप्रत्यगर्थवृत्तेरविद्यानिरासेनैवोपक्षीणत्वेन प्रतिफलितचैतन्यद्वारा चैतन्यभानाप्रयोजकत्वेन प्रमाणजन्यज्ञानं न चैतन्यभानम्, किन्तु चैतन्यमात्रमेव, इति चैतन्याभावस्य चैतन्याकारवृत्त्यभावस्य वा नाज्ञानत्वं वक्तव्यम्; तत्र चैतन्यस्य नित्यत्वात् तदभावो नाज्ञानं भवितुमर्हति, अहंभानदशायामेव 'मां न जानामी'ति प्रत्ययानुपपत्त्या न वृत्त्यभावोऽप्यज्ञानम्। साक्षिणो वृत्तिं विनापि भानात्तु नाद्वैतमतेऽज्ञानानुभवविरोध इत्यनुपदमेवोक्तम्। अतश्चैतन्यमात्रावरणमेवाज्ञानमिति वक्तव्यम्। तत्र चाश्रयविषययोश्चैतन्यस्वरूपत्वादविशदावभासो न विरुद्धो वृत्त्यभावदशायाम्। इदं साक्षिभास्येषु वृत्त्यनङ्गीकारपक्षेण। तत्रापि वृत्तिस्वीकारपक्षे तु अखण्डाकारवृत्त्यभावादावरणोपपत्तिः॥**

एतेन—आश्रय-प्रतियोगिज्ञानमप्यविशदस्वरूपविषयमित्यविशेषः । तथाहि—प्रतियोगिज्ञानं स्मरणात्मकमेव न जानामीत्यादिस्थले विवक्ष्यते, इति स्मर्यमाणस्य स्मृतिसमानकालवर्तित्वानियमाद् निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगित्वविरोध इत्यादि—परास्तम् ; आत्मसाक्षात्कारस्य वेदान्तप्रमाणाधीनत्वेन वेदान्तप्रमाणविचारात् पूर्वं तस्यैवासम्भवे तत्स्मरणस्यासम्भवदुक्तिकत्वात् , "अहं मामन्यं च न जानामी"ति ज्ञानदशायां धर्मिज्ञानस्यापि प्रत्यक्षत्वेन विशदत्वेन स्मरणरूपत्वाभावेनाश्रयज्ञानस्य विशदत्ववर्णनासम्भवाच्च ।।

**अद्वैतमते तु—अहमर्थः साक्षिचैतन्यमेवाज्ञानोपहितमिति न विरोधः। वस्तुतस्तु—अभावस्य प्रतियोग्यवच्छिन्नत्वेन भाननियमवद् भावरूपस्याज्ञानस्य घटादेरिवाश्रय-प्रतियोगिज्ञानापेक्षानियमाभावाद् विनाऽप्याश्रय-विषयज्ञानमज्ञानज्ञानं न विरुद्धमद्वैतमते, इति न भावरूपाज्ञानवादस्याभावरूपाज्ञानवादेनाविशेषः ।।**

यत्तु श्रीभाष्यकाराः—भावरूपस्याप्यज्ञानस्य ह्यज्ञानमिति सिद्ध्यतः प्रागभावसिद्धाविव सापेक्षत्वमस्त्येव । तथा ह्यज्ञानमिति ज्ञानाभावस्तदन्यस्तद्विरोधी वा ? त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽऽश्रयणीयेति—वर्णयन्ति ।।

**अत्र—तमःस्वरूपप्रतिपत्तौ, प्रकाशविरोधित्वेऽपि तमसः, प्रकाशस्वरूपानपेक्षावद् वृत्त्यवच्छिन्नचैतन्यविरोधित्वेऽप्यज्ञानस्य न ज्ञानापेक्षा वर्तते । तथा चाप्रकाशादिपदेनापि क्वचित्तमसः प्रतीतावपि भावरूपत्वात् तस्य प्रकाशानपेक्षावत् नञ्घटितमायातमआदिपदबोध्यस्याज्ञानस्यापि कदाचिदज्ञानादिपदबोध्यस्यापि न ज्ञानापेक्षेत्येव स्वीकर्तव्यम् । तथा च यथा तमो नाभावपदार्थः, आवरणशक्तिमत्त्वात्, एवमज्ञानमपि भावरूपमेव स्वीकर्तव्यम् । अधिकं चोत्तरत्र स्पष्टीभविष्यति ।।**

एतेन—भवदभिमतमज्ञानं न कदाचित् स्वरूपेण सिद्ध्यति, अपि त्वज्ञानमित्येव । तथाच ज्ञानाभाववत् तदपेक्षत्वं समानम् । ज्ञानप्राग-

भावस्तु भवताप्यभ्युपगम्यते, प्रतीयते च, इत्युभयाभ्युपेतो ज्ञानप्रागभाव एव---"अहमज्ञः" मामन्यं च न जानामी'त्यनुभूयत इत्यभ्युपगन्तव्य-मिति श्रीभाष्योक्तिरपि—परास्ता; अज्ञानस्यापि मायातमआदिभाव-शब्देन सिद्ध्यमानत्वात्, प्रतियोगिपूर्वकालावच्छिन्नोऽभावः प्रागभावः, प्रतियोग्युत्तरकालावच्छिन्नः प्रध्वंसाभावः, कालत्रयावच्छिन्नोऽभावोऽत्यन्ता-भाव इत्येकस्यैवाभावस्यावच्छेदभेदेनैव भेदेन स्वरूपतो भेदाभावेन प्रागभावानङ्गीकारात्, अभ्युपगमेऽपि पूर्वोक्तरीत्या ज्ञानदशायामेव ज्ञान-प्रागभावविषयीकरणासम्भवाच्च ॥

अयं भावः—'मामन्यं च न जानामी' त्यादावज्ञानानुभवो हि जीवस्यैव, न ब्रह्मणः; तिरोहितस्वरूपस्यैव ब्रह्मणोऽविद्याप्रति-बिम्बरूपस्याज्ञानानुभवः। अविद्याप्रतिबिम्बत्वमेव ब्रह्मणोऽविद्या-तिरोधानं नाम जीवभावप्रयोजकम्, न त्वप्रकाशितस्वरूपत्वा-दिकम्; स्वयंप्रकाशस्य तस्य तत्त्वासम्भवात्। अज्ञानानुभवो हि तस्य वृत्त्यभावप्रयुक्तो यावद्वृत्ति स्वत एव वर्तते; मतान्तरे तु कर्मा-धीनो धर्मभूतज्ञानसङ्कोचः। एतेन—मतान्तरे सङ्कोचातिरिक्त-ज्ञानाभावानङ्गीकारेण संकुचितज्ञानमेवाज्ञानपदार्थः। तत्र चानुत्प-त्ति-तिरोधानयोरुभयोरपि सङ्कोचत्वाविशेषात् ज्ञानप्रागभावप्रध्वं-साभावादिव्यवहारः स्वरूपभेदमादाय न सम्भवतीति सूच्यते। अनादिरप्यज्ञानानुभवोऽखण्डाकारवृत्तौ नश्यतीति स्वीकारात्तु नानिर्मोक्षप्रसङ्गोऽद्वैतमते। यथाच अनुभूतिस्वरूपं ब्रह्मैव नाज्ञाना-नुभवस्वरूपम्, तथा बहुश उपपादितं पूर्वत्र, इति न कोऽपि विरोधः। जीवेश्वरादिकमिवाज्ञान-तच्चियोगादिकमप्यनादीति स्वरूपतिर-स्कारस्याप्यनादित्वाद् न हेत्वन्तरापेक्षा। अनादितिरस्कारेण हि सच्चिदानन्दांशास्सर्वेऽपि तिरस्कृता एव सृष्टेः पूर्वम्। सृष्ट्यनन्तरं तु तत्तत्कर्माधीनमंशविशेषमात्रस्फुरणात्—घटोऽस्ति भातीष्ट इत्यादिव्यवहारोपपत्तिः। अविद्यायोग इव सत्त्वचित्त्वाद्यंशा अपि कल्पिता जीवदृष्ट्यैवेति स्वीकाराद् न तुच्छत्वापत्तिः। तथाच स्वयं-

प्रकाशस्यापि ब्रह्मणोऽविद्यया तिरोधानाद् जीवदृष्ट्याऽविशदत्वं नानुपपन्नमविद्यादशायाम्। विशदावभासो नामाखण्डस्वरूपावभासः, अविशदावभासस्तु खण्डस्वरूपानुभवः, इति अखण्डाकारवृत्तितः पूर्वं खण्डावभासः, तदनन्तरं त्वखण्डावभास इति फलति ॥

एतेन—सकलावभासो विशदावभासः, कतिपयाकारावभासोऽविशदाभास इति श्रीभाष्योक्तिरपि—व्याख्याता ॥

यथाच निर्विशेषेऽपि ब्रह्मणि सत्त्वचित्त्वादिखण्डानां कल्पनया खण्डानुभव उपपद्यते, तथा पूर्वमेवोक्तम् ॥

अयं च खण्डानुभवोऽखण्डसाक्षात्कारानन्तरं कदाऽपि न भवति, इत्यविद्याकार्यमिदमवैशद्यं तत्त्वज्ञानोदयाद् निवर्तत एव। निवृत्ते च तस्मिन् निर्विशेषस्वरूपमात्रमवतिष्ठते, इति तदेव विशदस्वरूपमिति मन्यते। इदं च विशदस्वरूपं परमार्थगत्या सर्वदा स्वतो वर्तत एव, परं तु तत्त्वज्ञानोदयात् प्राग् जीवानामपि स्वरूपतो विद्यमानत्वाद् अविशदरूपेण भासते, तत्त्वज्ञानोदयानन्तरं तु तदतिरिक्ताविशदतादात्म्याभावाद् विशदरूपमेव भासते, इति विशदस्वरूपे सत्यपि नाविद्याकार्यमवैशद्यम्, तन्निवृत्तिश्चोपपद्यते। तथाच—"मामन्यं च न जानामि" इति प्रत्यगर्थस्याविशदावभासे सत्येव जायमानोऽज्ञानानुभवोऽज्ञानस्य भावरूपत्व एव युज्यते, न त्वभावरूपत्वे। यथाच—अपरमार्थदोषमूलप्रपञ्चभ्रमवादिनां मते निरधिष्ठानभ्रमासंभवः सूपपादः, तथा पूर्वमेवोपपादितम्, इति न सर्वशून्यतावादापत्तिः। तदिदं सिद्धम्—यद् भावरूपाज्ञानवाद एव—'अहमज्ञः' इत्यादि प्रत्यक्षोपपत्तिरिति ॥

"एतावन्तं कालं न किञ्चिदहमज्ञासिषम्" इति प्रबुद्धस्य स्मरणान्यथाऽनुपपत्त्या भावरूपमेवाज्ञानमङ्गीकर्तव्यम्। इदं हि न स्मरणं ज्ञानाभावविषयकं संभवति; सुषुप्तौ ज्ञानाभावज्ञाने प्रमाणाभावात्। ज्ञानाभावानुभवे हि सुषुप्तौ प्रतियोगिज्ञान-

**स्मरणमप्यङ्गीकर्तव्यम्, ज्ञानाभावज्ञानं च। सति चैवं सुषुप्ति-व्याघातः। अद्वैतमते तु—अज्ञानस्य तत्परिणामवृत्त्या भानात् स्मरणोपपत्तिः ॥**

एतेन—सुषुप्तौ निर्विकल्पेन सविकल्पेन वा मनोव्यापारेण भावरूपाज्ञानानुभवः ? प्रथमे स्वाभिमतनिर्विकल्पकस्य साक्षिचैतन्यावभासरूपस्य संस्काराधायकत्वानभ्युपगमात् प्रमात्रनुसन्धानमनुपपन्नम्, द्वितीये सुषुप्तिविरोधेन मनोव्यापारासभवः; अतो "न किञ्चिदहमज्ञासिषमि" ति न स्मरणम्, किन्त्वस्मरणलिङ्गकं ज्ञानाभावविषयकमनुमितिरूपमिति श्रुतप्रकाशिकोक्तिरपि—परास्ता; आविद्यकवृत्त्युपहितत्वेन साक्षिचैतन्यस्यापि नाशाभ्युपगमेन प्रथमपक्षस्यादुष्टत्वात्, अनभूतानां स्मरणनियमाभावेनास्मरणेनानुमित्यसम्भवाच्च ॥

**एतेन—विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वादित्यनुमानमपि—व्याख्यातम् ॥**

यत्तु—इदमनुमानमसाधकम्; अज्ञानेऽप्यनभिमताज्ञानान्तरासाधनेन विरुद्धत्वाद् हेतोः, तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम्, साधने तदज्ञानमज्ञानसाक्षित्वं निवारयति। ततश्चाज्ञानकल्पना निष्फलेति श्रीभाष्यकाराः—वर्णयन्ति ॥

तस्यायमाशयः—अज्ञानसाधकमनुमानमपि प्रमाणं स्वविषयाज्ञानावरणाज्ञानान्तरसाधकमिति मन्यते वा ? न वा ? आद्येऽज्ञानविषयकाज्ञानान्तराङ्गीकारेऽज्ञानस्य साक्षिणा भानम्, सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमि'ति सिद्धान्तश्च विरुद्ध्येत। अज्ञानविषयं ह्यज्ञानं यदि ब्रह्मस्वरूपाच्छादकमज्ञानमावृणोति, तदा ब्रह्मणा सक्षिणा वा न तज्ज्ञानम्, नवा ब्रह्मज्ञाननिवर्त्यत्वं तस्य स्यात्; ज्ञानाज्ञानयोः समानविषयकत्वेनैव निवर्त्य-निवर्तकभावात्, इति कारणतयाऽनभिमताज्ञानान्तरसाधकत्वं स्यात्, अन्यथा तु तद्विरोधादेव द्वितीयपक्षे स्वीक्रियमणे प्रकृत एवानुमाने व्यभिचारः। परोक्षज्ञानस्याप्यसत्त्वापादकाज्ञाननिवर्तकत्वात् परोक्षज्ञानमात्रे व्यभिचारशङ्का तु नाद्वैतसिद्धान्ते सम्भवतीति प्रकृतानुमान एव व्यभिचारापादनम्। यद्यपि प्रकृतानु-

मानेनाज्ञानान्तरासाधनेऽप्रकाशितार्थप्रकाशकत्वं व्याहतम्, इति न हेत्वनैकान्त्यम्; साध्यस्येव हेतोरप्यभावात्। न ह्यप्रकाशितमज्ञानमनेनानुमानेन प्रकाश्यते, किन्त्वज्ञानभावत्वमेव साध्यते, साक्षिसिद्धस्याज्ञानस्याभावत्वव्यावर्तनमात्रे प्रकृतानुमानतात्पर्ये तु साध्य-हेत्वोरुभयोरपि सत्त्वाद् न व्यभिचारशङ्कापि; तथापि स्वप्रकाशसाक्षिचैतन्येनाज्ञानसिद्धावनुमानप्रामाण्यम्, अनुमानप्रामाण्येन भावरूपाज्ञानसिद्धिः, तत्सिद्धौ ज्ञातुरपि कल्पितत्वात् तादृशाहमर्थभूतस्यागन्तुकज्ञानस्यानाद्यज्ञानभासकत्वायोगेनानाद्यज्ञानसाधकनित्यसाक्षिचैतन्यसिद्धिरिति चक्रकापत्तिस्तदवस्थैव ॥

परमार्थतस्तु—जडविषयज्ञानमात्रे जडावारकाज्ञानस्य परैरस्वीकाराद् व्यभिचारो दुरपह्नवः, घटादिज्ञानेनापि घटाद्यवच्छिन्नचैतन्यमेव भास्यते, "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति सिद्धान्तादित्यद्वैतिनां कल्पना तु "न संदृशे तिष्ठति रूपमस्य" इत्यादिश्रुतिविरुद्धा; अन्यथा घटादिज्ञानमात्रेण मुक्त्यापत्तेरिति नोक्तानुमानं भावरूपाज्ञानसाधकं भवितुमर्हति ॥

एतेन—दृष्टान्तोऽपि—व्याख्यातः; सर्वत्र ज्ञानस्यैव प्रकाशकत्वेन दीपप्रभायाः प्रकाशकत्वाभावात्। तथाहि—प्रकाशकत्वं हि किं साक्षाद् विवक्ष्यते? उत परम्परया? उत स्वविषयावरणनिरासकत्वमात्रम्? तत्र प्रथमे कल्पे दृष्टान्तः साधनविकलः, द्वितीये तु पक्षे हेत्वसिद्धिः, तृतीये त्विन्द्रियेष्वनैकान्त्यम्। तुरीये तु साध्याविशेषेण हेतुसाध्ययोरैक्यम्। स्वविषयावरणनिरसनपूर्वकार्थप्रकाशकत्वमेव प्रकाशकत्वम्, नतु स्वविषयावरणनिरासकत्वमात्रमिति स्वीकारे तु ज्ञानस्यैवार्थपरिच्छेदकत्वाद् दृष्टान्ते साध्यवैकल्यमेव। दीपप्रभा हि प्रकाशोपकारिकैव, न प्रकाशिकापि; प्रकाशोपकारकत्वमात्रेण प्रकाशकत्वे त्विन्द्रियाणामुपकारकतमानां स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्वन्तरपूर्वकत्वाभावात् तत्रानैकान्त्यं दुष्परिहरमेवेति दृष्टान्ताभावोऽपि वज्रलेपायितः ॥

न केवलं व्यभिचार-दृष्टान्ताभावमात्रम्, किन्तु सत्प्रतिपक्षितत्वमप्युक्तानुमाने वज्रलेपायितम्। तथाच प्रतिप्रयोगाः—(१) विवादाध्यासितमज्ञानम्, न ज्ञानमात्रब्रह्माश्रयम्, अज्ञानत्वात्; शुक्तिकाद्यज्ञानवत्, ज्ञात्राश्रयं हि तत्। (२) विवादाध्यासितमज्ञानम्, न ज्ञानमात्रब्रह्मावरणम्, अज्ञानत्वात्; शुक्तिकाद्यज्ञानवत्, विषयावरणं हि तत्।

( ३ ) विवादाध्यासितमज्ञानम्, न ज्ञाननिवर्त्यम्, ज्ञानविषयानावरणत्वात्, यद् ज्ञाननिवर्त्यमज्ञानम्, तद् ज्ञानविषयावरणम्, यथा शुक्तिकाद्यज्ञानम्। ( ४ ) ब्रह्म, नाज्ञानास्पदम्, ज्ञातृत्वविरहात्; घटादिवत्। ( ५ ) ब्रह्म, नाज्ञानावरणम्, ज्ञानाविषयत्वात्, यदज्ञानावरणम्, तद् ज्ञानविषयभूतम्, यथा शुक्तिकादि, यद् ज्ञाननिवर्त्याज्ञानम्, तद् ज्ञानविषयभूतम्; यथा शुक्तिकादि। ( ६ ) विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्; भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्। ( ७ ) ज्ञानम्, न वस्तुनो विनाशकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्, यद्वस्तुनो विनाशकम्, तच्छक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टम्; यथेश्वरयोगिप्रभृतिज्ञानम्, यथा च मुद्गरादि। ( ८ ) भावरूपमज्ञानम्, न ज्ञाननाश्यम्, भावरूपत्वात्; घटादिवत्—इति। रज्जुसर्पादिज्ञानजन्यभयादिकं तु क्षणिकत्वात् स्वयमेव नश्यति, नतु बाधकज्ञानेन, येन ज्ञानेनापि वस्तुनो नाशः शङ्क्येत। सर्वथा तु विवादाध्यासितं प्रमाणज्ञानम्, स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वदेशगत-वस्त्वन्तरपूर्वकम्, अप्रकाशितार्थप्रकाशकत्वादि'ति विवरणानुमानं नाज्ञाने भावरूपेऽनिवर्चनीये प्रमाणम्—इति ॥

विवरणानुयायिनस्तु—पूर्वोक्तमनुमानमनादिभावरूपेऽज्ञाने प्रमाणमेव। अनेन हि नाज्ञानस्वरूपं साध्यते; साक्षिसिद्धस्य तस्य प्रमाणव्यापारानपेक्षणात्, किन्त्वभावविलक्षणत्वमेव। अभावविलक्षणत्वं हि पूर्वमज्ञातमेवानेनाज्ञानस्य साध्यते, इति न प्रकृतानुमानस्याप्यज्ञानसाधकत्वम्, अतो नास्यानुमानस्य प्रकृत एवानुमाने व्यभिचारः। न ह्यन्यथाऽप्रकाशितार्थप्रकाशकत्वरूपहेतुरन्वियात् ॥

एतेन—स्वरूपचैतन्येनाज्ञानसिद्धावनुमानप्रामाण्यम्, तत्प्रामाण्येन भावरूपाज्ञानसिद्धिः, तत्सिद्धौ ज्ञातुरपि कल्पितत्वात् साक्षिचैतन्येनाज्ञानसिद्धिरिति चक्रकापत्तिरपि—परास्ता; अज्ञानस्वरूपस्यानानुमानिकत्वेन साक्षिसिद्धस्य तस्याभावविलक्षणत्वमा-

ग्रस्यानुमानिकत्वेन च भावरूपाज्ञानसिद्धौ साक्षिचैतन्येनाज्ञानसिद्धरित्यंशस्याभावात्, साक्षिसिद्धं ह्यज्ञानं भावाभावविलक्षणमिति ह्यद्वैतिनां सिद्धान्तः; तृतीयप्रकाराऽविद्येति तत्सिद्धान्तात्। व्यक्तं चैतदद्वैतसिद्धौ। सति चैवं स्वरूपे विप्रतिपत्त्यभावात् स्वरूपसिद्धिं प्रति साक्षिण एव कारणत्वेन नोक्तदोषः। जडविषयकज्ञानमात्रे व्यभिचारस्तु भावप्रकाशिकापादितः केवलजडाज्ञानस्य ब्रह्माविषयकस्याद्वैतिभिरनङ्गीकारात्, सर्वात्मनाऽनावृतब्रह्मज्ञानस्यैव मुक्तिकारणत्वेन 'सन् घटः' इत्यादिज्ञानेन सच्चिदात्ममात्रेण ब्रह्मविषयकेण मूलाज्ञानानिवृत्त्या मोक्षानापत्तेश्च नावसरति। एतेन—'दण्डी देवदत्तः' इति ज्ञानेन विशिष्ट विषयकेण विशेष्यदेवदत्ताज्ञानर्निवृत्तिरपि—व्याख्याता; विशिष्टज्ञानस्य विशेष्यविषयकत्वस्यापि स्वीकारेण देवदत्तस्वरूपाज्ञाननिवृत्तावपि 'सन् घटः' इतिप्रतीतिकालेऽखण्डात्मना ब्रह्माज्ञानेन मुक्तेरप्रसङ्गात्॥

एतेन—दृष्टान्तोऽपि—व्याख्यातः; आवरणनिरसनपूर्वकार्थप्रकाशोपयोगित्वस्यैव प्रकाशकत्वरूपत्वेन प्रदीपप्रभायामपि तत्सत्त्वेन साधनवैकल्याप्रसरात्, चक्षुरादीनामिन्द्रियाणामपि प्रकाशोपयोगित्वं यद्यपि वर्तते; तथापि चक्षुरादीनामावरणनिरसनेऽसामर्थ्येनोक्तरूपप्रकाशोपयोगित्वाभावाद् न तत्र व्यभिचारः। एतेन—यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतम्, तर्हीन्द्रियाणामुपकारकतमत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्। तथासति तेषु व्यभिचार इति—परास्तम्; स्वविषयावरणनिरासकत्वविशिष्टप्रकाशोपकारकत्वस्य चक्षुरादावभावेन व्यभिचाराप्रसरात्॥

एतेन—पूर्वोपक्षिप्ताः प्रतिप्रयोगा अपि—व्याख्याताः। तत्र प्रथमेऽनुमाने दृष्टान्तासिद्धिः; एकसत्तावादे शुक्तिकाद्यज्ञानस्यापि ब्रह्माश्रयत्वेन पक्षसमत्वात्। सत्तात्रैविध्यवादे तु शुक्त्य-

ज्ञानं मूलाज्ञानाद् विलक्षणमेव पुरुषाश्रितम्, इति पल्लवाज्ञानत्वमुपाधिः, इति पल्लवाज्ञानत्वेन प्रथमानुमानं सोपाधिकम् ॥

एतेन—द्वितीयानुमानप्रयोगोऽपि—व्याख्यातः। नहि सत्तात्रैविध्यमते शुक्त्यवच्छिन्नचैतन्याश्रितमज्ञानं मूलाज्ञानं नाम। यत्तु—"विषयावरणं हि तत्" इति शुक्त्यज्ञानस्य विषयावरणत्वं वर्णितम्, तदिदमद्वैतमते शुक्त्यज्ञानस्यापि चैतन्यावरकत्वस्यैव स्वीकारात् शुक्तिरूपविषयावरकत्वस्यानङ्गीकाराददूषणम् ॥

एतेन—तृतीयानुमानमपि—परास्तम्; शुक्त्यज्ञानस्यापि ज्ञानविषयानावरणत्वेन व्यतिरेके शुक्त्यज्ञानस्यादृष्टान्तत्वात्, ज्ञानपदेन चैतन्यग्रहणे चैतन्यानिवर्त्यत्वस्याद्वैतिभिरपि स्वीकारेण सिद्धसाधनम्, वृत्तिरूपज्ञानविवक्षायां तु विवादाध्यासितस्याज्ञानस्यापि वृत्तिविषयब्रह्मचैतन्यावरणत्वस्यैव स्वीकारेण हेत्वसिद्धिः। शुक्त्यज्ञानस्य वृत्तिविषयशुक्त्यवच्छिन्नचैतन्यावरणस्यैवेयं शुक्तिरिति ज्ञाननिवर्त्यत्वेन विवादाध्यासितमज्ञानम्, ज्ञाननिवर्त्यम् ज्ञानविषयावरणत्वात्; शुक्त्यज्ञानवत्, इति सत्प्रतिपक्षोऽपि ॥

एतेन—ब्रह्म, नाज्ञानास्पदम्, ज्ञातृत्वविरहात्, घटादिवत्, इति तुरीयानुमानमपि—व्याख्यातम्; हेतुरस्तु साध्यं मास्तु इत्यप्रयोजकशङ्काकलङ्कात्। "आश्रयत्व-विषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥" इति वचनाद् घटादीनामज्ञानानास्पदत्वमज्ञानप्रयुक्तत्वानिबन्धनमेव, नाज्ञातृत्वनिबन्धनम्। अतोऽज्ञातृत्वेऽपि ब्रह्मणोऽज्ञानास्पदत्वं न विरुद्धम्। ब्रह्म, नाज्ञानावरणम्, नवा ज्ञाननिवर्त्याज्ञानम्; ज्ञानाविषयत्वादिति पञ्चम-षष्ठानुमानयोस्तु पूर्वोक्तप्रकारेण ज्ञानपदेन चैतन्यस्य ग्रहणे न केवलमप्रयोजकत्वम्, किन्तु शुक्तिकादीनां चैतन्यतादात्म्येन चैतन्यविषयत्वाद् दृष्टान्ते साधनवैकल्यमपि। ज्ञानपदेन वृत्तिविवक्षायां तु न केवलं हेत्वसिद्धिः; ब्रह्मणोऽपि

वृत्तिविषयत्वात्, किन्तु शुक्तिकादीनामपि नाज्ञानेनावरणं ज्ञानविषयाणामपि स्वीक्रियते ; जडत्वात् , इति व्यतिरेके दृष्टान्तोऽपि दुर्लभः, इति दृष्टान्तासिद्धिरपि ॥

सप्तमानुमानं तु पूर्वोक्तप्रकारेणाज्ञानानुमानस्याप्यज्ञानसाधकत्वस्योरीकरणाद् दृष्टान्तासिद्धिग्रस्तम् । एतेनाष्टमानुमानमपि—व्याख्यानम् ; शक्तिरूप्यादौ व्यभिचारात् । नहि भयकम्पादिकमिव शुक्तिरूप्यादिकमपि क्षणिकं स्वयमेव विनाश्यम्, ज्ञानातिरिक्तविनाश्यं नित्यं वा स्वीकर्तुं शक्यते ; प्रातिभासिकसत्ताभ्युपगमात्, दृष्टान्ते चानिर्वचनीयमज्ञानमपि ज्ञानमात्रनाश्यमिति स्वीकर्तव्यम्; स्वविषयविवर्तोपादानताप्रयोजकत्वात् ॥

विवरणानुमाने हि—वस्तुपदेन यद्यपि भावरूपत्वं ज्ञातुं शक्यते, यदि भावस्यैव वस्तुत्वम्, अभावस्याप्यतिरिक्तपदार्थतावादे त्वभावव्यतिरिक्तेति विशेषणं सार्थकमेव; अन्यथा सिद्धसाधनतापत्तेः । एतेन—स्वशब्दोऽपि—व्याख्यातः ; प्रागभावोऽज्ञानमिति मतविशेषनिरसनाभिप्रायत्वात् तस्य, प्राक्शब्दस्य च । सर्वथा तु भावाभावविलक्षणेऽज्ञानेऽनुमानमपि प्रमाणमेव; निर्दुष्टत्वात् । न केवलमनुमानेन, किन्त्वनिर्वचनीयत्वव्यपदेशानुपपत्त्याऽपि भावाभावविलक्षणमज्ञानं सिद्ध्यति ॥

अनिर्वचनीयत्वं ह्यज्ञानस्यानिर्वचनीयरजताद्युपादानत्वनिर्वाहार्थमवश्यं स्वीकर्तव्यम् । 'न विलक्षणत्वाधि'करणं हि यत्र विलक्षणयोः कार्य-कारणभावः प्रमाणान्तरसिद्धः, तत्र वैलक्षण्यमात्रं कार्य-कारणयोर्दृश्यमानं न प्रमाणान्तरबाधायालमित्येव बोधयति; नतु विलक्षणयोरेव कार्य-कारणभाव इति । सति चैवम्—कार्य-कारणयोः सालक्षण्यं न नियतम्, किन्त्वौत्सर्गिकमित्येवोक्ताधिकरणतात्पर्यम् । तथाच यावत् शुक्तिरूप्याद्युपादानस्य सत्यताग्राहकं प्रबलं प्रमाणं न प्रदर्श्यते, तावदनिर्वचनीयकार्य-कारणत्वान्यथानुप-

पत्त्याऽनिर्वचनीयत्वमेवाज्ञानस्येत्येव 'नविलक्षणत्वा' धिकरणन्याये-नापि स्वीकर्तव्यम् ॥

एतेन—मिथ्यार्थस्य मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि—"नविलक्षणत्वात्" इत्यधिकरणन्यायेन परिह्रियते; अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्तीति—परास्तम् ॥

शुक्त्यादिषु रजतप्रतीतिः प्रतीतिकालेऽपि तन्नास्तीति बाधः, अन्यस्यान्यथाभानायोगश्च सदसदनिर्वचनीयमेवेदं रजतं दोषवशात् प्रतीयत इति कल्पयतीति खल्वद्वैतिनो मन्यन्ते। इदं चानिर्वचनीयस्यैवानिर्वचनीयरूपेण भानं सम्भवतीति पूर्वोक्तविधयाऽनिर्वचनीयाज्ञानं विना नोपपद्यते। इदं चानिर्वचनीयत्वं ख्याति-बाधाभ्यामुभाभ्यां ज्ञायते, नतु ख्यातिमात्रेण। तथाच प्रतीतिकालेऽनिर्वचनीयताभानाभावेऽपि न क्षतिः, न वा भ्रान्ति-बाधयोः प्रवृत्तेरप्यसम्भवः। तथाच नाद्वैतिनोऽप्यन्यस्यान्यथा भानं स्वीकुर्वन्ति, किन्तु तदनुपपत्त्याऽनिर्वचनीयाज्ञानसाधनमेव ॥

एतेन—अन्यस्यन्यथाभानाभ्युपगमादेव ख्याति-बाध-भ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टकारणवस्तुकल्पनायोग इति—परास्तम्, विना कारणं कार्याभ्युपगमे शून्यवादप्रसङ्गात् ॥

नचेष्टापत्तिः; सत्ख्यातिस्वीकारात्। शुक्त्यादेरेव रजताद्याकारेण भानमिति हि श्रीभाष्यसिद्धान्तः;। इदमेवात्रालोचनीयम्—यत् शुक्तेरेव रजताद्याकारेण भानं किमन्यस्यान्यथा भानम्, उत नेति ॥

श्रीभाष्याकारास्तु मन्यन्ते—अन्यस्यान्यथाभानविरहे शुक्तिरेव रजताकारेणावभासत इति। ख्यात्यन्तरवादे ह्यन्यस्यान्यथा भानम्, न त्वस्माकं सत्ख्यातिवादिनामपीति हि श्रीभाष्यकाराः प्रतियन्ति। यदि त्वन्यस्यान्यथा भानमित्येव पक्षो भ्रमस्थले स्वीकर्तव्य इत्याग्रहः, तर्हि सुदूरं गत्वाऽप्यन्यथाख्यातिपक्षग्रहेणैव निर्वाहादनिर्वचनीयख्यातिपक्षो न स्वीकारमर्हति ; अत्यन्तापरिदृष्टकारणकल्पनाऽयोगात् ॥

परमार्थस्तु—शुक्तेरपि रजतसादृश्येन रजतावयववत्त्वात् तत्र विद्यमानमेव रजतमिदं रजतमित्यादौ भासते, नान्यस्यान्यथा भानम्। तदिदं सिद्धम्—

यथार्थं सर्वविज्ञानमिति वेदविदां मतम्।
श्रुति-स्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः॥
"बहु स्यामि"ति सङ्कल्पपूर्वसृष्ट्याद्युपक्रमे।
"तासां त्रिवृतमेकैकामि" ति श्रुत्यैव चोदितम्॥
त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते।
"यदग्ने रोहितं रूपं तेजसस्तदपामपि॥
शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपणम्"।
श्रुत्यैव दर्शिता तस्मात् सर्वे सर्वत्र सङ्गताः॥
पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे।
"नानावीर्याः पृथक्भूतास्ततस्ते संहतिं विना॥
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः।
समेत्यान्योन्यसंयोगं परस्परसमाश्रिताः॥
महदाद्या विशेषान्ताः ह्यण्डमि'त्यादिना ततः।
सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत्॥
"त्र्यात्मकत्वात्तु भूयस्त्वादि"ति तेनाभिधाभिदा।
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम्॥
सोमावयवसद्भावादिति न्यायविदो विदुः।
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः॥
तदेव सदृशं तस्य यत् तद्द्रव्यैकदेशभाक्।
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः॥
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः।
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते॥
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः।
कदाचिच्चक्षुरादेस्तु दोषात् शुक्त्यंशवर्जितः॥
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते।
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते॥

अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ।
नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः ॥
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥

एतेन—स्वप्नोऽपि—व्याख्यातः; तत्रापि प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते । अयमेवार्थो "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादिसूत्रैरपि प्रतिपाद्यते । अत एवापवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तरगमन-राज्याभिषेक-शिरश्छेदादयः पुण्यपापफल-भूताशया देहसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते । पीतशङ्खादिज्ञाने तु नयनवर्तिपित्तद्रव्यसम्भिन्ना नयनरश्मयः शङ्खादिभिः संयुज्यन्ते । अतस्तत्र सुवर्णानुलिप्तशङ्खवत् "पीतः शङ्खः" इति प्रतीयते; अतिसौ-क्ष्म्यात्तु पार्श्वस्थैर्न गृह्यते, पित्तोपहितेन तु सूक्ष्ममपि गृह्यते । अनेन 'लोहितः स्फटिकः' इति ज्ञानमपि—व्याख्यातम् । दर्पणादिषु निजमुख-प्रतीतिरपि यथार्थैव । एतेन सर्वे भ्रमप्रकारा व्याख्याताः । सर्वथा तु नानिर्वचनीयख्यातिवादो युक्तसह इति श्रीभाष्यानुयायिनां पन्थाः ॥

**अद्वैतिनस्तु मन्यन्ते—नान्यथाख्यातिः, नवाऽख्यातिः, सत्ख्यातिर्वा संभवति । इदं तु मतद्वयसंप्रतिपन्नम्—यत् स्वप्नेऽपूर्वरथादि-सृष्टिरेव, न तु जागरिकपदार्थानामेव स्वप्ने स्मरणमात्रमिति न तत्रान्यथाख्यातिः, नवा सत्ख्यातिरिति । इयान् विशेषः—यत् स्वप्नज्ञानमपि प्रमैव; तदानीमेव विद्यमानरथादिविषयकत्वादिति श्रीभाष्यमतम्, अद्वैतमतं तु—तदानीमेव विद्यमानरथादिविषयकं स्वाप्नज्ञानं जागरे तेषां बाधान्यथानुपपत्त्या भ्रमज्ञानमेवेति । ततश्च भ्रमज्ञानस्यैवाभावे श्रीभाष्यमतम्, भ्रमज्ञानस्वीकारे त्वद्वैतमतमेव ततो योग्यमिति । वयं तु मन्यामहे "वैधर्म्याच्च न स्वप्नादिवत्" इति योगाचारमतनिरासावसरे स्वाप्नानां जागरवैलक्षण्यस्य वर्ण-नात्, मायामात्रत्व-तदभावाभ्यामेव स्वाप्न-जागरयोर्वैलक्षण्यं वर्ण-**

नीयम् । सति चैवं मायापदेन जीवाश्रिताविद्याया ग्रहणात् स्वाप्नि-कानां नेश्वरसृष्टत्वम्, जागरिकाणां तु शुद्धचैतन्याश्रिताविद्या-कार्यत्वाद् ईश्वरसृष्टत्वमिति वैलक्षण्यम् । तथाच बाह्येषु पदार्थेषु केषांचनैव केचन प्रत्यक्षा निर्दुष्टेन्द्रियाणामपि, केषांचन तु न प्रत्यक्षा इति संभवनीति पुरुषविशेषमात्रानुभाव्यापूर्वजागरपदार्थसदृश-पदार्थान्तराणि स्वप्नेऽनुभूयमानानि प्रातिभासिकानीत्येव तात्पर्य-मूरीकर्तव्यम् । तथाच—स्वाप्नवैषम्यं जागराणां बाधाबाधाभ्यामपि पर्यवस्यति, इति स्वाप्नानां बाधः, अन्येषामबाधश्च व्यवहारदशायां श्रीभाष्यकारैरपि तत्र व्यवस्थापितोऽद्वैतमतं विहाय न कुत्रापि मते संभवति । तथाचाद्वैतमतं मनसि निधायैव सूत्रकाराः—"वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रयन्ति । श्रुतप्रकाशिकाकारा अपि कृत्वाचिन्तयैवेदं सूत्रमिति वदन्तोऽत्रानुकूला एव, इति स्वाप्नानां मायिकत्वे बाधानुसारेण स्वीक्रियमाणे स्वाप्नेष्वनिर्वचनीयख्यातिः, जागरे परं शुक्तिरजतादिभ्रमे त्वन्यथाख्यातिः, सत्ख्यातिर्वेत्यर्ध-जरतीयन्यायाश्रयणं न सांप्रतम् । आरोप्यासन्निकर्षे हि कथमन्य-थाख्यातिः संभवति? इति आरोप्यसन्निकर्षे यद्यन्यथाख्याताावाग्रहः, तर्हि न कापि विप्रतिपत्तिः; तत्स्वीकारात्, आरोप्यासन्निकर्षे तु रजतादिज्ञानप्रत्यक्षत्वं श्रीभाष्यकारादिभिरप्यलौकिकप्रत्यक्षानङ्गी-कारादु अनिर्वचनीयख्यातिं विना न निर्वहति । तथाच "मायामात्र-मि"ति सूत्रम् "अनभिव्यक्तस्वरूपत्वरूपहेतुसाम्यात् शुक्तिरज-तादीनामपि मायामात्रत्वं न्यायसाम्याद् विषयीकरोत्येव । अयं च न्यायः—"मृत्तिकेत्येव सत्यम्" इति श्रुत्युपष्टब्धः यतिपादप्रसार-विधयाऽनभिव्यक्तस्वरूपत्वाविशेषाद् व्याहारिकप्रपञ्चमपि विष-यीकरोतीति मायामात्रत्वं जागरिकाणामपि यदा समानम्, तदा "वैधर्म्याच्चे"तिसूत्रोल्लिखितं परिशेषाद् बाधाबाधयोरेव पर्यव-स्यति । अत एवोक्तसूत्रे तावेव वैधर्म्यनिमित्ततया प्रतिपादितौ ।

मायापदं तु तूल-मूलाविद्यासाधारणं पर्यवस्यति, इत्यविद्यैकत्ववादेन तच्छक्तिमात्रभेदाभिप्रायेण च निर्वाहात् शक्ताविव शक्तिमत्यामपि मायापदं निरूढमेव। ततश्च ख्याति-बाधान्यथानुपपत्त्याऽनिर्वचनीयाज्ञानवादोऽप्यौपनिषदः सौत्रश्चोपपद्यते। इदं चाज्ञानं नात्यन्तापरिदृष्टम्; प्रत्यक्षप्रमाणेन साधितत्वात्, इति नात्यन्तापरिदृष्टकारणकल्पनादोषः। शुक्तिकाया एव रजतात्मना भानं तु शुक्तिनाशं विना रजतनाशानापत्त्या न संभवद्युक्तिकम्। अबाधितस्यैव रजतस्य शुक्तिकायां विद्यमानस्य भानमिति कल्पना तु श्रीभाष्यकाराणां स्वकपोलकल्पना, न प्रामाणिकी। त्रिवृत्करणश्रुतिर्हि तन्मात्रविषया, न स्थूलभूतविषयाऽपि। प्रतिनिध्यधिकरणन्यायस्तु सादृश्यनिबन्धनो न नीवाराद्यवयवानां व्रीह्यादौ साधनेऽपि प्रमाणम्। सादृश्यं हि समानाकारत्वादिनैव तत्र मन्यते, नतु समानावयवत्वेन। नहि सहस्रगुणितशुक्तिशकलदाहेऽपि रजतावयवा स्वल्पा अपि कैरपि प्राप्यन्ते, इति शुक्तिशकलेष्वेव रजतावयवकल्पनं निर्मूलमेव, इति शुक्तिशकलादौ रजतादिभानं शुक्तिशकलस्यैव रजतात्मना भानासंभवात्, रजतस्यैव तत्र रजततया भानमिति पक्षस्याप्यसंभवाच्चानिर्वचनीयाज्ञानपरिणामेनैव निर्वहणीयम्, ख्याति-बाधान्यथानुपपत्तिरपि प्रत्यक्षानुमाने इवानिर्वचनीये भावरूपेऽज्ञाने प्रमाणम्—इति॥

न केवलं प्रत्यक्षानुमानार्थापत्तयः, किन्तु—"अनृतेन प्रत्यूढाः" "नासदासीत् नो सदसीत् तदानीं तमसा गूढमग्रे प्रकेतम्" "मायां तु प्रकृतिं विद्यात्" "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्धः" इत्यादिश्रुतयोऽपि तत्र प्रमाणम्। "सत्यं च चानृतं च सत्यमभवत्" इत्यादौ हि अनृतशब्दोऽसत्यपरो दृश्यते। "ऋतं पिबन्तावि"त्यादौ कर्मफलेऽपि क्वचित् ऋतशब्दप्रयोगो हि—"अपाम सोमममृता अभूम" इत्यादिवचन-

सिद्धं बहुकालस्थायित्वमभिप्रेत्यैव। तथाच मोक्षपर्यन्तं सत्यत्वबुद्धिविषयत्वात् कर्मफलमपि सत्यमिवेति तत्र तच्छब्दः। अनृतशब्दस्य तु असत्यपरत्वमेव। "अनृतादात्मानं जुगुप्सेत्" इत्यपि मिथ्यापदार्थसम्बन्धमेवात्मनो निषेधति। पापादिव पुण्यादप्यात्मनो जुगुप्सा कर्तव्येति हि वेदान्तमर्यादा, इत्युभयोरपि पुण्यपापयोर्मिथ्यात्वात् साधारणोऽनृतशब्दः। सति चैवमनृतेन प्रत्यूढा इत्यनिर्वचनीयाज्ञानपरमित्येव स्वीकर्तव्यम्। तथाच न ऋतेतरविषयो ह्यनृतशब्द इति तु न विप्रतिपन्नम्; अनृतशब्दैकदेशर्तशब्दार्थस्तु सत्य एव; अन्यथा "सत्यं चानृतं च सत्यमभवत्" इति सत्यप्रतिद्वन्द्वभावेनानृतशब्दप्रयोगोऽनुपपन्न एव स्यात्। एतेन—"नासदासीत् नो सदासीद्" इति श्रुतिरपि—व्याख्याता॥

अत्र श्रीभाष्यकाराः—सदसच्छब्दौ चिदचिद्व्यष्टिपरौ. उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्ट्योरप्ययकालेऽचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य, नात्र कस्यचित्सदसदनिर्वचनीयत्वमुच्यते; सदसतोः कालविशेषेऽसद्भावमात्रवचनात्। अत्र तमःशब्दाभिधेयस्याचित्समष्टित्वं सुबालोपनिदोऽप्यवगम्यते—"अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति॥

अद्वैतिनस्तु मन्यन्ते—तमःशब्दः सुबालोपनिषदुक्तोऽज्ञानपरः;—"बीजाज्ञानमहामाहापह्नवाद्यद्विशिष्यते। निर्बीजं त्रैपदं तत्त्वं तदस्मीति विचिन्तये"॥ इति सुबालोपनिषदुपक्रमश्लोकानुसारेण तमसोऽज्ञानवाचित्वावगमात्। तथाच—"नासदासीत् नो सदासीत्" इत्यत्र सदसच्छब्दयोर्व्यक्तप्रपञ्चवाचित्वेऽपि प्रलयकाले व्यक्तप्रपञ्चस्य सर्वस्य कारणाव्यक्तप्रकृत्यात्मनाऽवस्थानबोधन एव तात्पर्येऽपि "तमसा गूढमि"त्यत्र तमःशब्देन मायाया एवानिर्वचनीयाविद्यापदवाच्याया ग्रहणमित्यवश्यमेव स्वीकर्तव्यम्। मतद्वयसम्मतमिदम्—यत्प्रकृत्यात्मना सर्वेषां कार्याणां प्रलयकालेऽवस्थान-

मिति। इदमेव तु विप्रतिपन्नम्—यत् प्रकृतिशब्दवाच्यस्यैव तमस आवणशक्तिरपि वर्तत इति॥

तत्राद्वैतिनो मन्यन्ते—तस्या आवरणशक्तिरपि वर्तते इति, श्रीभाष्यानुयायिनस्तु न सेति। श्रुतितात्पर्यं तु तमःपदस्यावरणशक्तिमद्द्रव्यबोधकस्य सूक्ष्माचिति प्रकृतौ प्रयोगाद् आवरणशक्तिरपि तस्याः स्वीकर्तव्येति प्रतीयत इति त्वद्वैतिनो मन्यन्ते। तथाच प्रलयकाले "तम आसीत्" इति वर्णनेनैव सर्वं वाक्यं सावधारणमिति न्यायेन चिदचिद्व्यष्टिलयावगमे—"नासदासीत् नो सदासीत्" इति तस्यैव तमसः सदसद्विलक्षणत्वेनानिर्वचनीयत्वमेव बोध्यत इति स्वीकर्तव्यम्, नतु चिदचिद्व्यष्ट्योस्तदानीमभावमात्रम्। "सत्-त्यच्छब्दवाच्यौ हि चिदचिद्व्यष्टी इति श्रीभाष्यकारा अपि वदन्तीति कथमसच्छब्देनाचिद्व्यष्टेर्ग्रहणम्? अचिद्व्यष्टीनामसच्छब्दवाच्यत्वस्य श्रीभाष्यदृष्ट्याऽपि कुत्राप्यभावात् न चिदचिद्व्यष्ट्योः प्रलये लयबोधनमात्रे तात्पर्यम्। नहि श्रीभाष्यदृष्ट्याऽचिद्व्यष्टेरिव प्रकृतौ तमःशब्दवाच्यायां चिद्व्यष्टेरपि लयः प्रामाणिकः, इति चिदचिद्व्यष्ट्योरुभयोः प्रकृतौ लयप्रतिपादनपरमिदं प्रकरणमित्यपि रिक्तं वचः। अचिद्व्यष्टेरचित्समष्टौ सूक्ष्मावस्थायां चिद्व्यष्टेः चित्समष्टौ सूक्ष्मावस्थायां लय इति खलु श्रीभाष्यकाराणां सिद्धान्तः। तथाच चिदचितोरुभयोरपि तमसि लयप्रतिपादनपरत्वासम्भवादद्वैतिनां विवरणमेवात्र योग्यम्। अत एव तमसोऽपि लयो ब्रह्मणि सुबालोपनिषदि—"अक्षरं तमसि लीयते तमः परे देव एकीभवती"ति प्रतिपादित उपपद्यते। अत्र तमोमात्रस्य ब्रह्मणि लयप्रतिपादनेन तदभेदाभिधानेन च जीवस्यापि स्वरूपतोऽभावबोधनमिदं न मतान्तर उपपद्यते। अनादेरपि जीवस्य बिम्बरूपेणैव प्रलयकालेऽवस्थानम्, नतु व्यक्तप्रतिबिम्बभावेनेति चिदचिद्विशिष्टब्रह्मपरिशेषवादोऽयं

श्रीभाष्यावलम्बभूतसुबालोपनिषदोऽपि विरुद्धः। तथाचानिर्वच-नीयेऽज्ञाने "नासदासीत् नो सदासीदि" तितैत्तरीयद्वितीयाष्टका-ष्टमप्रश्नवाक्यमिव "न सत् नासत् न सदसदि"ति "तस्मात्तमः सञ्जायते" इत्यादिंसुबालोपनिषद्वाक्यमपि प्रमाणम् ॥

न केवलमनृतशब्देन, तमःशब्देन च, किन्तु मायाशब्देनाप्य-निर्वचनीयस्यैवाज्ञानस्य परामर्शः श्वेताश्वतरोपनिषदादौ दृश्यते। मायाशब्दस्तु—"मायावादमसच्छस्त्रम्" "मायावादिनः" इत्यादि-व्यपदेशस्याद्वैतिनामनिर्वचनीयमज्ञानमेवाधिकृत्य श्रीभाष्यानुया-यिभिरपि प्रयुज्यते, इति नेदं कस्यापि तिरोहितम्। ऐन्द्रजालिकेषु मायाशब्दप्रयोगाद् मिथ्यापर्यायो मायाशब्द इति हि लोकप्रसिद्ध-मिदम्। पदार्थनिर्णये च लोकप्रसिद्धिरेवासति बाधके बलीयसीति मायाशब्दस्यार्थान्तरकल्पनमपि श्रीभाष्यकाराणां निर्मूलमेव। एवं वदन्तो :वयं न सर्वत्र मायाशब्दार्थो मिथ्यैवेति वदामः, किन्तु प्रकरणादितात्पर्यग्राहकप्रमाणानुसारेण गौण्या लक्षणया वाऽर्थान्त-रपरत्वमपि कुत्रचन यथासम्भवं वदामः। तथाचासुरराक्षसशास्त्रा-दिषु सत्येष्वपि मायाशब्दप्रयोगोऽपीश्वरेतरसृष्टत्वसामान्याद् न दोषाय। वस्तुतस्तु—आसुरराक्षसशस्त्राण्यप्यैन्द्रजालिकानीवासुररा-सकल्पितमिथ्यास्त्राण्येव, न तु सत्यानीत्यत्र प्रमाणमस्ति, मिथ्या-भूतस्याप्यर्थक्रियाकारित्वस्य पूर्वमुपपादनाद् न कोऽपि विरोधः। तथाच—

"तेन मायासहस्रं तच्छम्बरस्याशुगामिना।
बालस्य रक्षता देहमेकैकश्येन सूदितम्॥"

इति वचनं न कथमपि विरुद्धम् ॥

परमार्थतस्तु—अनिर्वचनीयं ह्यज्ञानमावरणशक्तिमिव विक्षे-पशक्तिमपि विचित्रसर्गकरत्वरूपामधिकरोति, इति कुत्रचन विचित्रार्थसर्गकरत्वात्मकविक्षेपशक्तिमात्रमभिप्रेत्य मायाशब्द-

प्रयोगः, कुत्रचनावरणशक्तिमात्रमभिप्रेत्य तम आदिशब्दप्रयोगः, कुत्रचनोभयशक्त्यभिप्रायेण यथासम्भवं मायाऽविद्यादिशब्दा इति व्यवस्था स्वीक्रियते। अपरोऽयं विशेषः—यत् क्वचिद् मायाशब्दस्तूलाविद्यायां जीवाश्रितायां शक्तिद्वयाभिप्रायेण प्रयुज्यते, कुत्रचन मूलाविद्यायां तादृश्यामिति न कोऽपि विरोधः। सर्वथा त्वनिर्वचनीयाज्ञानमेव तमो-मायाऽनृतादिशब्दवाच्यमिति—"नासदासीत् नो सदासीत् तम आसीत् तमसा गूढम्" इति श्रुतिरप्यज्ञाने भावाभावविलक्षणे प्रमाणमेव। एतेन—त्रिगुणत्वाम्नानमपि मायाया व्याख्यातम्; विक्षेपांशे तेषामुपयोगात्। नहि तावताऽनिर्वचनीयत्वव्याघातः; गुणानामप्यनिर्वचनीयत्वात्॥

अत एव "तत्त्वमसी"त्यैक्योपदेश उपपद्यते; अन्यथा जीवब्रह्मणोः स्वरूपभेदे स नोपपद्येत। ततश्चेदमत्र स्वीकर्तव्यम्—यत् स्वरूपचैतन्यव्यतिरेकेणेश्वरत्वप्रयोजकमाया वा जीवत्वप्रयोजकाविद्यान्तःकरणादिकं वा मिथ्याभूतमिति। "तत्त्वमसी"ति सामानाधिकरण्योपदेशो हि जीवब्रह्मणोः स्वरूपैक्यमादायैव निर्वहणीयः। तत्त्वंपदयोः सविशेषजीवब्रह्माभिधेयत्वे तु न स निर्वोढुं शक्यते। नहि तत्र विशेषणविशेष्यभावेन सामानाधिकरण्यं नीलो घट इत्यादाविव संभवति; जीवत्वेश्वरत्वयोर्वैयधिकरण्यात्। नहि नीलत्व-घटत्वे इव जीवत्वेश्वरत्वे अपि समानाधिकरणे संभाव्येते, इत्यगत्या बाधायां वा सामानाधिकरण्यं ब्रह्मव्यतिरेकेण जीवाभावं गृहीत्वा वक्तव्यम्, अभेदे वा "वैश्वदेवी आमिक्षा" इत्यादाविव॥

यत्तु श्रीभाष्यकाराः—तत्त्वमस्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्; तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात्। तत्पदं हि सर्वज्ञं सत्यसंकल्पं जगत्कारणं ब्रह्म परामृशति; "तदैक्षत बहु स्यां प्रजायेय" इत्यादिषु तस्यैव प्रकृतत्वात्, तत्समाना-

धिकरणं त्वंपदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति ; प्रकार-द्वयावस्थितैकवस्तुपरत्वात्सामानाधिकरण्यस्य । प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदाभावेन "भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वरूपं सामानाधिकरण्यमेव परित्यक्तव्यं स्यात्, द्वयोः पदयोर्लक्षणा च । "सोऽयं देवदत्तः" इत्यत्रापि न लक्षणा ; भूत-वर्तमानकालसम्बन्धि-तयैक्यप्रतीत्यविरोधात्, देशभेदविरोधश्च कालभेदेन परिहृतः । अयं भावः—देशद्वयसम्बन्धस्य कालद्वयसम्बन्धस्य च यौगपद्यं सत्यं वस्तु-गत्या विरुद्ध्यते, तत्प्रतिपत्तेरेव हि यौगपद्यमत्र विवक्ष्यते । प्रतिपत्तिस्तु देशद्वयकालद्वयसम्बन्धं क्रमभाविनमेव दर्शयतीति न विरोधः । तथाच सर्वज्ञत्वाल्पज्ञत्वादीनां सर्वेषां विशेषणानामपरित्यागेन प्रकारद्वयवि-शिष्टप्रकार्यैक्यमेवात्र विवक्षणीयम्; विशेषणं विशेष्यवस्तुनि यथान्व-यार्हम्, तथान्वितस्य तस्यापरित्यागो हि विवक्षितत्वं नाम । नह्यत्र सर्वज्ञत्वादिविशेषणेष्वेकस्यापि परित्यागः सम्भवति ; सर्वेषां प्रकृतत्वात्, तथाच—"तदैक्षत बहु स्यामि"ति सविशेषस्यैवोपक्रमः । एतेन—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि व्याख्याता । विशिष्टमेव कारणम्, तदेव स्थूलावस्थं कार्यमिति द्रव्यान्तरत्वाभावात् कारणज्ञानेन कार्य-ज्ञानं स्वमत एवोपपद्यते, नाद्वैतमते । तत्र हि कारणज्ञाने कार्यस्य विषयतयाऽन्तर्भावो हि बाधितः, सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वा-योगात्, 'मिथ्यात्वेने'त्यध्याहारश्च स्यात् । अनन्तर्भावे त्वज्ञाते ज्ञातत्व-व्यवहारो न मुख्यः स्यादिति सविशेषब्रह्मवाद एवैकविज्ञानेन सर्व-विज्ञानप्रतिज्ञापि सार्थका भवति । निर्विशेषब्रह्मवादे तु ज्ञानस्वरूपस्यैव तस्याज्ञानवशात् सर्वज्ञत्व-किञ्चिज्ज्ञत्वादिकं कल्पनीयमिति सर्वज्ञत्वादि-श्रुतयोऽपि बाधितार्थाः भवेयुरिति परससङ्ख्यश्रुतीनामप्रामाण्यं स्यात्, किं बहुना ? "तत्त्वमसी"त्यादावप्यधिष्ठानलक्षणा निवृत्तिलक्षणा च तत्त्वंपदयोः स्वीकर्तव्या, इति सर्वाणि वेदान्तवाक्यानि मुख्यार्थात् प्रच्याव्येरन्, इति बाधायां सामानाधिकरण्यवादो न युक्तिसहः । बाधायां सामानाधिकरण्यं हि यत्र प्रमाणान्तरेण बाधो ज्ञायते, तत्रैव; यथेदं रजतमित्यादौ, अत्रतु नायं प्रपञ्चः, नायं जीव इति न बाधः प्रमाणान्तरेण ज्ञायते, इत्यप्रतिपन्नस्य बाधस्य कल्पनं न सम्भवति । स एव नाम बाधः, योऽधिष्ठानातिरिक्तधर्मविषयकः—यथा शुक्तिरि-यमिति शुक्तित्वज्ञानम्, निर्विशेषब्रह्मवादे तु न तज्ज्ञानं बाधज्ञानं भवेत् ।

तथाच "तत्त्वमसी"ति नैक्योपदेशः, इति न तदन्यथानुपपत्त्याप्यनिर्वचनीयाज्ञानसिद्धिरिति—मन्यन्ते ॥

तदिदं न क्षोदक्षक्षम्। तथाहि—तत्त्वंपदे हि न सविशेषब्रह्मपरे; "सदेव सौम्येदमग्र आसीत्" इत्याद्युपक्रमोपसंहारादितात्पर्यग्राहकप्रमाणैस्सर्वविशेषपरित्यागेनाधिष्ठानचैतन्यमात्रादिदेर्विवक्षाया अवगमे श्रीभाष्योक्तरीत्या विशेषणं विशेष्यवस्तुनि यथान्वयार्हम्, तथाऽन्वितस्य तस्यापरित्यागरूपविपक्षाया विशेषेष्वभावात्। न ह्यत्र विशेषाणां तात्पर्याविषयाणामन्वयार्हता नाम। प्रकृतार्थविवक्षा हि वाक्यानां सार्थकता नाम। प्रकृतं च पूर्वोक्तविधया यदा निर्विशेषमेव, तर्हि सविशेषब्रह्माभिधायित्वं श्रीभाष्यदिशा कथं तत्त्वंपदयोः? एतेन—प्रकृतसर्वाकारप्रहाणे प्रतिसन्धानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्ति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यादित्यादि—व्याख्यातम्; इष्टत्वात्, सर्वेषामाकाराणां प्रकृतत्वाभावाच्च। न ह्यन्यथा सामानाधिकरण्यं निरुह्येत। नहि सर्वज्ञं किञ्चिज्ज्ञमिति सामानाधिकरण्यव्यपदेशः कुत्रापि दृष्टचरः। अविरुद्धविशेषणवाचकानामेव पदानां सविशेषपराणां सामानाधिकरण्यम्, न तु विरुद्धविशेषणवतामपि, कारणाकारेण हि कार्याणां कारणाभेदः; 'रुचकं सुवर्णमि'त्यादिव्यपदेशात्, सूक्ष्मचिदतोस्तु ब्रह्माकार्यत्वाद् न सद्वारकाभेदविवक्षेति सद्वारकतया विरोधोऽपि दुष्परिहरः, इति प्रकारद्वयावस्थितैकार्थबोधकत्वरूपं सामानाधिकरण्यं नात्र संभवति। तत्र हि प्रकारद्वयावस्थितप्रकार्यैक्यपरत्वम्, यत्र प्रकारद्वयमपि कारणगतावस्थाविशेषो भवति। न चात्र किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिकं कारणस्यैव पिण्डत्व-घटत्वादिवदवस्थाविशेषः। तथाच कार्य-कारणभावं विना न प्रकारद्वयविशिष्टप्रकार्यैक्यं भवतीति "तत्त्वमसी" ति न प्रकारद्वयविशिष्टप्रकारिपरम्;

प्रकारद्वयस्यापि ब्रह्माकार्यत्वात्, इत्यगत्या चिदचितोरपि ब्रह्मकार्यत्वे स्वीक्रियमाणे "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति कारणमात्रसत्यत्वबोधने जीवाचितोरुभयोरपि मिथ्यात्वेन प्रकारद्वयपरित्यागेन प्रकारिस्वरूपमात्रपरत्वेनैव सामानाधिकरण्यं निर्वहणीयम्, "तदैक्षते" त्यादिप्रस्तुतं सविशेषत्वम्—"एकमेवाद्वितीयमि" ति निषेधापेक्षितत्वाद् निषेधार्थमेव, इति न तत्र मुख्यं तात्पर्यम्; सन्दंशन्यायात्। सति चैवं सर्वज्ञादिश्रुतिप्रामाण्यमपि निर्विशेषबोधपर्यवसानेनैव, नान्यथा, इति सविशेषश्रुतीनामपि निर्विशेषवाद एव प्रामाण्यम्, नान्यत्र ॥

एतेन—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञापि—व्याख्याता; अनेन हि कारणस्वरूपेऽधिष्ठाने यथार्थतया ज्ञाते सर्वकार्यज्ञानमपि मिथ्यात्वेन ज्ञातं भवति, सत्यत्वेन च कारणमिति सर्वविज्ञानप्रक्रिया विवक्ष्यते। कारणविज्ञाने ज्ञातव्यमपरं नावशिष्यत इति तु फलितार्थः। नचात्र 'मिथ्यात्वेने'त्यध्याहारदोषः; "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति श्रुत्यैव तदर्थबोधनात्। न ह्यन्यथा प्रतिप्रकरणं कारणमात्रसत्यत्वव्यवस्थापनं सार्थकं भवति। यथाच वाचारम्भणश्रुतिरद्वैतमत एव स्वरसा, न मतान्तरे, तथा पूर्वं विशदीकृतम्, इति "तदैक्षते" त्यतः पूर्वतन उपक्रमोऽद्वैतवादस्यैव यद्यनुगुणः, "तत्त्वमसीति" सामानाधिकरण्येनोपसंहारश्च, तर्हि संदंशन्यायेन "तदैक्षते"त्यादीनामपि तदनुगुणं योजनमेव सांप्रतम् ॥

एतेन—"तदैक्षत बहु स्यां प्रजायेय" इत्युपक्रमविरोधः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटत इत्यादि—परास्तम् ॥

सत्यं श्रीभाष्यमते कारणे सर्वमन्तर्गतम्; चिदचिद्ब्रह्मणां त्रयाणामेव पदार्थत्वात्, तथापि चिदचिद्व्यष्टीनां कारणेऽनन्तर्भावात् कथं कारणज्ञानेन घटादीनां कार्याणामपि ज्ञानम्? यदि कार्यकारणयोरेकद्रव्यत्वात्, तर्हीदं विचारणीयम्—किमिदमेकद्रव्य-

त्वम्—किं मृद्व्यतिरेकेण घटाभावः, उत मृद्रूपेण कारणाकारेण प्रकार्यंशेनैक्यमिति ? द्वितीये प्रकारांशानां कारणगतानां परस्परं भेदस्य स्वरूपेण स्वीकारेण प्रकारप्रकारिणोरपि परस्परभेदस्य स्वीकारेण, कारणस्वरूपनिष्ठभेदतात्त्विकताया एव निषेधस्य स्वीकारेण च चिदचिदवस्थाविशेषाणां व्यष्टिरूपब्रह्मप्रकारत्वाभावेन च कारणब्रह्मविज्ञानेन सर्वविज्ञानं दुरुपपादम्। आद्ये त्वद्वैतमतप्रवेशः; ब्रह्मव्यतिरेकेण प्रपञ्चाभावस्वीकारात्। विवर्तोपादानतावादिनोऽपि सदात्मना घटादीनामेकद्रव्यत्वमेव मन्यन्ते। "कार्यात्मना तु नानात्वमभेदः कारणात्मना। हेमात्मना यथा भेदः कुण्डलाद्यात्मना भिदा॥" इति हि तदीयोऽपि राद्धान्तः। इयान् विशेषः—यत् कार्यात्मना भेदोऽतात्त्विक इति कारणस्वरूपानन्तर्गमो यद्यविज्ञानप्रयोजकः, तर्हि घटादीनामपि स्वरूपतो ब्रह्मणि कारणेऽनन्तर्गमादविज्ञानमेव स्यात्। कारणरूपेण ज्ञानं तु सद्रूपेण ब्रह्मज्ञानेन घटादीनामद्वैतवादेऽपि समानमेव। इयान् विशेषः—यदद्वैतमते साक्षाद् ब्रह्मणः सर्वविवर्तोपादानतास्वीकाराद् ब्रह्मज्ञानेन सर्वविज्ञानं सुलभम्, श्रीभाष्यमते तु साक्षाद् ब्रह्मणः प्रकार्यंशस्य कारणत्वास्वीकाराद् ब्रह्मविज्ञानेन सर्वविज्ञानं दुर्लभम्॥

परमार्थतस्तु—प्रकारभूतयोश्चिदचितोर्ब्रह्माकार्यत्वात् श्रीभाष्यमते ब्रह्मणा चिदचितोरेकद्रव्यत्वं कारणरूपेणापि नास्तीति कथमेकविज्ञानेन सर्वविज्ञानम्? यदि शरीर-शरीरिभावेन? तर्हि नेदं प्रकरणमनुकूलम्; न ह्यत्र शरीर-शरीरभावः, तेनैकद्रव्यत्वं वा प्रतिपादितम्, "मृत्तिकेत्येव सत्यमि"ति कारणेनैव खल्वेकद्रव्यत्वं प्रतिपादितम्। ततश्च तदनन्यत्वरूपमेवैकद्रव्यत्वमत्र विवक्षणीयम्, नतु तदन्यत्वघटितमपि। अधिकं च तदनन्यत्वाधिकरणप्रस्तावेषु व्यक्तम्, इति कथमेकविज्ञानेन सर्वविज्ञानं श्रीभाष्यमते घटेत?

"तत्त्वमसी"तिवाक्ये पदत्रयेऽपि लक्षणा तु तात्पर्यनिर्वा-

हार्थमेव स्वीक्रियते, इति गङ्गायां घोष इत्यादाविव लक्षणाऽपि तत्प्रामाण्यस्यैव साधनम्, इति भूषणमेव, नतु दूषणम्। दृष्टान्ते हि—"इदं रजतम्"इत्यादौ बाधायां सामानाधिकरण्यस्थलेऽधिष्ठानलक्षणा निवृत्तिलक्षणा च पदद्वयेऽपि, इति तत्सामान्यात् "तत्त्वमसी"त्यादावपि लक्षणायामपि न वेदान्तानां मुख्यार्थत्वहानिः। तात्पर्यविषयार्थबोधकत्वं हि मुख्यार्थत्वम्, नतु शक्यार्थत्वम्। इयमेव हि गतिः सर्वत्र बाधायां सामानाधिकरण्यस्थले। तत्र यथा "नेदं रजतमि"ति प्रमाणान्तरेण बाधः, एवमत्रापि—"एकमेवाद्वितीयम्" "नेह नानास्ति किञ्चन" इत्यादिप्रमाणान्तरेण बाधः। इयान् विशेषः—रजतबाधः शुक्तित्वादिधर्मविषयः, शुक्तित्वाज्ञानस्यैव पल्लवाज्ञानपदवाच्यस्य तदुपादानत्वात्, प्रकृते तु ब्रह्मस्वरूपाज्ञानस्यैव प्रपञ्चविभ्रमोपादानत्वाद् मूलाज्ञानविषयब्रह्मस्वरूपज्ञानमेव बाधज्ञानम्। न हि अधिष्ठानातिरिक्तधर्मविषयज्ञानमेव बाधज्ञानं नाम। धर्मविषयत्वं तु धर्माज्ञाननिवृत्त्यभिप्रायमेव। तच्च धर्माज्ञानस्यैव निमित्ततास्थले; अन्यथा प्रपञ्चाध्यासोऽपि तूलाज्ञानहेतुकः स्यादिति खलु मूलाज्ञानकार्यत्वम्, निर्विशेषब्रह्मज्ञानबाध्यत्वं च प्रपञ्चस्य स्वीक्रियते, इत्यगत्या "तत्त्वमसी"त्यैक्योपदेश इत्येव स्वीकर्तव्यम्॥

एतेन—अधिष्ठानं तु प्राक्तिरोहितस्वरूपमेव तत्पदेनोपस्थाप्यत इति न युक्तम्; प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रम-बाधयोरसम्भवात्, भ्रमाश्रयमधिष्ठानं हि भ्रमविरोधीति तत्प्रकाशे सुतरां तदाश्रयभ्रमबाधासम्भवाच्च, इत्यधिष्ठानातिरेकिपारमार्थिकधर्म-तत्तिरोधानानभ्युपगमे भ्रान्ति-बाधौ दुरुपपादौ, इत्यधिष्ठानस्वरूपमात्रोपदेशेन भ्रमबाधौ न सम्भवदुक्तिकः; स्वरूपस्य स्वप्रकाशस्य सर्वदा प्रकाशमानत्वेन तदुपदेशवैयर्थ्यादित्यादिश्रीभाष्योक्तिरपि—परास्ता; अनुक्तोपालम्भनत्वात्, भावानवबोधाच्च॥

तथाहि—न ह्यद्वैतिनः चैतन्यमात्रमज्ञानविरोधीति मन्यन्ते, किन्तु वृत्त्युपहितं चैतन्यमेव; स्वोपहितान्याविषयकत्वे सति स्वोपहितविषयकत्वं हि ज्ञानाज्ञानयोः समानविषयकत्वं नाम, इति प्रागधिष्ठानस्य प्रकाशवत् तस्याप्रकाशोऽपि वर्तते, इत्यद्वैतमते भ्रम-बाधौ न दुरुपपादौ; अखण्डात्मनाऽज्ञाने भ्रमः, अखण्डात्माज्ञाने बाध इति हि तदीया व्यवस्था। तच्चाधिष्ठानं सविशेषमेवेति नायं नियमः, यतो धर्मिस्वरूपाज्ञानेनापि श्रुतिप्रामाण्याद् भ्रमाङ्गीकारो न दोषाय। भ्रमावस्थायां हि स्वरूपं खण्डात्मना भासते, बाधावसरे त्वखण्डात्मनेति नोपदेशवैयर्थ्यमपि, इत्यभेदे बाधायां वा सामानाधिकरण्यमेव तत्त्वमस्यादिवाक्यस्थले, इति तदन्यथाऽनुपपत्तिरप्यनिर्वचनीयेऽज्ञाने प्रमाणमेव॥

एतेन—जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम्; प्रकारद्वयविशिष्टैकवस्तुबोधकत्वात्। अनेन च—निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्य च ब्रह्मणो जीवान्तर्यामित्वमप्यैश्वर्यमपरं प्रतिपादितं भवति, उपक्रमानुकूलता च, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च; सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूलचिदचिद्वस्तुशरीरत्वेन कार्यत्वात्। "तत्त्वमसी"तिवाक्ये तु नोद्देश्य-विधेयभावः; "ऐतदात्म्यमिदं सर्वमि"त्यनेन प्राप्तत्वेन ज्ञातार्थोपसंहाररूपत्वेन तत्रोद्देश्य-विधेयभावाभावात्। ऐतदात्म्यं च सर्वस्य चेतनाचेतनवर्गस्यैतच्छरीरत्वेनैव। अत एव—"सन्मूलास्सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" "सर्वं खल्विदं ब्रह्म" "अन्तः प्रविष्टः शास्ता जनानाम्" "य आत्मनि तिष्ठन्" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिश्रुतयोऽपि शरीर-शरीरिभावप्रतिपादनपरा उपपद्यन्ते। तस्माद् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरकत्वेनैव वस्तुत्वात् तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिधत्ते, इति "तत्त्वमसी"ति सामानाधिकरण्यमपि जीवशरीरकः परमात्माऽस्तीति "ऐतदात्म्यम्" इति प्रस्तुतसर्वतादात्म्योपसंहारपरमेवेति श्रीभाष्योक्तिरपि—व्याख्याता; दत्तोत्तरत्वात्॥

नहि "तत्त्वमसी"ति सामानाधिकरण्यं शरीर-शरीरिभाव-विवक्षायां मुख्यवृत्तं भवति ; शरीरवाचकानां पदानां शरीरपर्यन्तत्व-स्यालोकसिद्धत्वात्। नहि कोऽप्यपरो दार्शनिको लौकिकाः कोश-कर्तारो वा पक्षमिमं स्वीकुर्वन्ति—यत् पृथिव्यदिशब्दानां पृथि-व्यादिषु गौणत्वमेव,नतु मुख्यत्वमिति। "देवदत्तो जानाती"त्यादौ देवदत्तादिपदानां तदात्मपरत्वं गौणमेव,नतु मुख्यमिति प्रपञ्चसत्य-त्ववादिनः सर्वेऽपि। अद्वैतिनस्तु रजत इदंशब्दप्रयोगवत् भ्रान्त्यैव तस्य तत्र प्रवृत्तिरिति। मुख्यं शरीरिणि शरीरपदमिति स्वगोष्ठी-मात्रघण्टाघोषः,अतो न "तत्त्वमसी"ति शरीर-शरीरिभावेन तादात्म्यपरम्; व्यर्थत्वात्॥

"ऐतदात्म्यमिदं सर्वमि"ति सर्वतादात्म्येन प्रस्तुते 'ब्रह्मणि जीवमात्रतादात्म्येनोपसंहारेण किं वाऽपरमैश्वर्यं नूतनं प्रकाशितं भवति ? इति—"समस्तकल्याणगुणस्य ब्रह्मणो जीवान्तर्यामित्व-मप्यपरमैश्वर्यं प्रतिपादितं भवती"ति रिक्तमिदं वचः। अद्वैतमते तु—"ऐतदात्म्यमिदं सर्वमि'ति प्रस्तुतचैतन्यस्वरूपमात्रपारमार्थिक-ताभिप्रायेण, नतु ब्रह्मतदितरसत्यत्वाभिप्रायेण। तस्याज्ञानदशायां सर्वतादात्म्यं प्रतीयमानं बाधानिबन्धनमेवेति निरूपणार्थं "तत्त्व-मसी"ति वाक्यमिति न पृथक् "तत्त्वमसी"ति वितथम्। अत एव—"तत्त्वमसी" त्यसिपदप्रयोगेण जीवस्योद्देश्यत्वमवगम्यमानमुपपद्यते, येन जीवगतचैतन्यांशमात्रेण ब्रह्मगतचैतन्यांशमात्रमादायैक्यो-पदेशोऽयं पर्यवस्यति, मतान्तरे तु—यत्र नोद्देश्य-विधेयभावः,तत्र न केवलमसिपदप्रयोगो नोपपद्येत, किन्तु पूर्वोक्तरीत्या—जीवान्तर्या-मित्वमात्रस्य विशेषेणोपसंहारवैयर्थ्यमपि समापतति। न केवलमि-यत्—किन्तु सार्वात्म्येनोपक्रमः,जीवात्मत्वेनोपसंहारः, इत्युपक्रमो-पसंहारवैरूप्यमपि। अद्वैतमते तु तत्त्वंपदवाच्यार्थेन तत्तदुपाध्युपहि-तेन तादात्म्येनोपक्रमः, उपाधिपरित्यागेन चैतन्यांशमात्रेण तेनैव

तादात्म्येनोपसंहारः, इति भ्रान्तिप्रसक्तोपाधि-तदुपहितरूपबाधेनोपसंहारात् प्राथमिकं सार्वात्म्यं बाधायामेवेति व्यवस्थाप्यते ॥

एतेन—"ऐतदात्म्यमिदं सर्वमि"ति प्राप्तार्थत्वात् "तत्त्वमसी"त्यत्र नोद्देश्य-विधेयभाव इति—परास्तम्; चैतन्यमात्रैक्यस्य तद्व्यतिरेकेणेतराभावरूपस्य "तत्त्वमसो"ति वाक्यं विनाऽज्ञातत्वेनाज्ञातार्थत्वात्, अन्यथा "इदं रजतम्" इति सामानाधिकरण्यज्ञानज्ञातस्यैव "इयं शुक्तिरि"त्यनेनापि ज्ञातत्वात् बाधकज्ञानवैयर्थ्यं समापद्येत। तथाच—"इदं रजतम्""इयं शुक्तिः" इति वाक्यद्वयस्योपक्रमोपसंहाररूपस्येव नात्र वैयर्थ्यशङ्का सावसरा। "सन्मूलाः सौम्येमाः" इत्यपि सदात्मना ज्ञातेन तदात्म्योपदेशपरा श्रुती रूपान्तरेणाज्ञानदशायामेवेतरसत्त्वेनेतरेण तादात्म्योपदेश इति सूचयन्त्यद्वैतमतमेव पोषयति, यतान्तरे तु शरीरिमूलत्वादिकमेव निर्देष्टव्यं स्यात्। अधिकमन्यत्र व्यक्तम्। सर्वान्तर्यामित्वं ह्यधिष्ठानविधया निर्विशेषब्रह्मणोऽपि नियायकत्वेन सगुणब्रह्मणोऽपि वाऽद्वैतिनोऽपि स्वीकुर्वन्त्येव, इति सर्वान्तर्यामित्वोपदेशादिकमद्वैतवादस्यापि न प्रतिकूलम् ॥

एतेन—"अनेन जीवेनात्मनाऽनुप्रविश्ये"ति श्रुतिरपि—व्याख्याता; अत्र हि जीव एव परत्मामनः स्वरूपमित्येव बोध्यते, नतु जीवस्यात्मा परमात्मेति;अन्यथाऽऽत्मपदवैयर्थ्यापत्तेः। एतेन—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्यरकरवाणि" इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव नामरूपभाक्त्वमुक्तमिति—प्रत्युक्तम्। जीवपदवैयर्थ्यापातात ॥

तथाच ब्रह्मव्यतिरिक्तस्य सर्वस्य तद्व्यतिरेकेणावस्तुताभिप्रायेणैव—"ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म"इत्यादीनां प्रवृत्तेः प्रकारद्वयस्यैवाभावे महावक्यप्रवृत्तिरिति बाधितमेव, इति

"तत्त्वमसी"त्यैक्योपदेशानुपपत्तिरपि भावाभावविलक्षणेऽनिर्वचनीयेऽज्ञाने प्रमाणमेव ॥

अत एव—"ज्योतींषि विष्णुरिति" ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञा—"ज्ञानस्वरूपो भगवान् यतोऽसौ।"इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय—"यदा तु शुद्धं निजरूपि" इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभावदर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य—"वस्त्वस्ति किम्" "मही घटत्वं घटतः कपालिका" इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामसत्यत्वमुपपाद्य, "तस्माद् न विज्ञानमृतेऽस्ति किञ्चित्" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्तस्यासत्यत्वमुपसंहृत्य,..."विज्ञानमेकम्" इति विज्ञानस्वरूपे ब्रह्मणि भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य,—"ज्ञानं विशुद्धम्"इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं संशोध्य च..."सद्भाव एवं भवतो मयोक्तः"इति ज्ञानस्वरूपस्य ब्रह्मणएव सत्यत्वम्, नान्यस्य, अन्यस्य चासत्यत्वमेव, तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वमुपदिष्टं विष्णुपुराणे। इदं च श्रीभाष्यमते यत्र प्रपञ्चस्य सत्यत्वम्, तत्र नोपपद्यते, इति तदुपपत्त्यर्थमप्यनिर्वचनीयमज्ञानं स्वीकर्तव्यम्, इतीतिहास-पुराणयोरपि भावरूपेऽज्ञाने प्रामाण्यमनपोह्यमेव ॥

अत्र हि भुवनकुशस्य विस्तीर्णस्वरूपमुक्त्वा पूर्वमनुक्तं मिथ्यात्वं नामरूपान्तरं संक्षेपतः श्रूयतामित्यारभ्याभिधीयते—

ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च।
नद्यः समुद्राश्च स एव सर्वो यदस्ति यन्नास्ति च विप्रवर्य ॥
ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्नतु वस्तुभूतः।
ततो हि शैलाब्धधरादिभेदात् जानीहि विज्ञानविजृम्भितानि ॥" इति

**अयमर्थः—ज्योतिरादयोऽपि तत एव जातास्ततोऽभिन्ना एव। 'यदस्ति नास्ती'ति वर्तमानमतीतं भावरूपमभावरूपं च प्रतीयमानं विवक्ष्यते। तत्राखण्डस्य विष्णोर्विरुद्धानेकरूपत्वं नानात्वस्य कल्पितत्वादिति निरूपणार्थम्—'ज्ञानस्वरूपे'ति श्लोकः। अत्रायं परमात्मा वस्तुगत्या नाशेषमूर्तिः, यतस्तत्र ज्ञेयप्रपञ्चः सर्वोऽप्यध्यस्त इति निरूपणार्थम्—"अशेषमूर्तिर्नतु वस्तुभूतः" इति, यतोऽसौ प्रपञ्चो विज्ञानस्य परमात्मन एव विजृम्भितम्, विवर्तरूप इति यावत्; इति निरूप्यते—"भेदान् विजानीहि विज्ञानविजृम्भितानी"ति॥**

एतेन—चिदचिन्मिश्रे जगति वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतयाऽस्पृष्टप्राकृतभेदोऽविनाशित्वेनास्तिपदवाच्यः, अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः, उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितम्। तथाहि—"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा। पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता।" इत्यम्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः, तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य "ज्योतींषि विष्णुरि"त्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह; यतोऽस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्—"तानि सर्वाणि तद्वपुः" "तत्सर्वं वै हरेस्तनुः" "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः।" इति। तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते—"ज्योतींषि विष्णुरि"ति। अत्रास्त्यात्मकं जगत् चेतनवर्गः; अविनाशित्वात्, ज्ञानस्वरूपत्वाच्च; परात्मवत्, नास्त्यात्मकं तु जगद् अचेतनवर्गः, अज्ञानरूपत्वात्, कर्मनिमित्तत्वाच्च। तथाच देवाद्याकारभेदाश्चिद्वर्गाणां कर्मनिमित्तत्वेन कर्मनाशे नाशाद् नास्तिशब्दवाच्योऽचिद्वर्गः, चेतनवर्गस्तु स्वतःसिद्धज्ञानैकाकारत्वेनाविनाशित्वेनास्तिशब्दवाच्यः। न केवलं विनाशित्वेन कर्मनिमित्तत्वेन चाचेतनवर्गस्य नास्तिशब्दवाच्यत्वम्, किन्तु प्रतिक्षणमन्यथाभावेन कादाः

चित्कावस्थायोगादपीति निरूपयितुम्—"वस्त्वस्ति किम्" इति। तदयं निष्कर्षः—आदि-मध्य-पर्यन्तहीनः सततैकरूपोऽस्तिशब्दवाच्यः, न तस्य कदाचिदपि नास्तिशब्दवाच्यत्वम्, तद्विपरीतस्तु नास्तिशब्दाभिधेयः। तदेतदाह—"मही घटत्वमि"ति श्रीभाष्योक्तिरपि—परास्ता ॥

सत्यमविनाश्येवास्तिशब्दवाच्यम्, विनाश्येव तु नास्तिशब्दवाच्यम्; इदमेव तु विप्रतिपन्नम्—ब्रह्मव्यतिरिक्तं किमपि न नश्वरमिति। "अतोऽन्यदार्तमि"ति हि ब्रह्मव्यतिरिक्तस्य सर्वस्यार्तत्वं ब्रवीति। "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा। मात्रासंसर्गस्त्वस्य भवती"ति आत्मनोऽप्यौपाधिकमनित्यत्वं स्वरूपतश्चैतन्यमात्ररूपेण नित्यत्वमिति प्रतिपादयदहंपदार्थोऽनात्मैवेति गमयति। विष्णुपुराणेऽपि द्वितीयांशे त्रयोदशाध्याय उत्तरत्र—

यत्त्वेतद् भवता प्रोक्तं कोऽहमित्येतदात्मनः।
वक्तुं न वक्ष्यते श्रोतुं तन्मयेच्छा प्रवर्तते ॥
योऽस्ति सोऽहमिति ब्रह्मन् कथं वक्तुं न शक्यते।
आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ॥

ब्राह्मण उवाच—

शब्दोऽहमिति दोषाय, नात्मन्येष तथैव च।
अनात्मन्यत्मविज्ञानं शब्दोवा भ्रान्तिलक्षणः ॥

इति विशदीकृतमिदम्। सति चैवम्—अस्तिपदवाच्यस्य चैतन्यस्वरूपान्तस्याविनश्वरस्य स्वस्यैव स्वकार्यत्वेन तादात्म्यवर्णनासंभवात्—अत्र प्रकरणेऽस्तिपदेन वर्तमानं भावरूपं वा नास्तिपदेनातीतमभावरूपं वा ग्रहीतव्यमित्येव युक्तम्। तथाच ब्रह्मव्यतिरिक्तसर्वतादात्म्यमत्र विवक्ष्यते, इत्यत्र तु न विप्रतिपत्तिः। न ह्यचेतनवर्गः सर्वोऽपि विनश्वर इति श्रीभाष्यकारा अपि मन्यन्ते, सूक्ष्माचितोऽविनश्वरत्वात्, नवा कार्य-कारणयोरिव शरीर-शरीरिभावेन तादात्म्यम्; सूक्ष्मचिदचिद्भ्यामपि ब्रह्मणः शरीर-शरीरि-

भावस्वीकारात्, इति व्यर्थं शरीर-शरीरिभावविवक्षाप्रकरणेऽस्ति-नास्तिपदाभ्यामेव चिदचिच्छरीरोपक्षेपणम् ॥

एतेन—"यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा" इत्यचेतनवर्गाणामेव कार्यत्वमुपक्षिप्य—"ज्योतींषि विष्णुः" इति तादात्म्योपदेश उपपद्यते, इत्यचेतनवर्गाणामेवोपक्रमे तादात्म्योपदेशः सामानाधिकरण्येन सूचयति, शरीरत्वमपि नियम्यत्वमात्रेण कार्यभावमर्हतामेवाचेतनवर्गाणामेव विवक्ष्यते, न चेतनस्येति। जीवानामपि शरीरत्वमचेतनान्तःकरणसम्बन्धाधीनमचेतनत्वांशं गृहीत्वैव। नहि कुत्रापि शरीरं चेतनं दृष्टमिति चैतन्यांशशरीरताविवक्षायां न श्रुतेरपि तात्पर्यम्। अतोऽस्ति-नास्तिपदाभ्यां कार्यकोटावचेतनवर्ग एव भावाभावादिरूपमेव विवक्ष्यत इत्यकामेनापि स्वीकर्तव्यम्। सति चैवं परमात्मविवर्तता निबन्धनमेव सामानाधिकरण्यम्। व्यक्तं चाकाशादीनामपि तदधिष्ठानात्मस्वरूपेणैव वाय्वाद्युपादानत्वम्, न त्वाकाशभावेनेत्यादि ब्रह्ममीमांसायाम्। अधिकमानन्दमयाधिकरणप्रस्तावे व्यक्तीकरिष्यते, इति—"अशेषमूर्तिर्नतु वस्तुभूतः" इत्युपसंहारोऽप्यत एवोपपद्यते। अत्र प्रकरणे—"वस्त्वस्ति किं कुत्रचिदादि-मध्य-पर्यन्तहीनं सततैकरूपम्।" इति श्लोकेनाधाराधेयभावयोग्यं किमपि वस्तु नास्ति, इति बोधनेनाधिष्ठानव्यतिरिक्तं सर्वमादि-मध्यान्तान्यतमयोग्येवेति सूचनाद् जीवराशिरपि मिथ्यैवेति ज्ञाप्यते, इति कथं चेतनवर्गः सर्वोऽप्यविनाशित्वादस्तिपदार्थ इति कल्पनाया अवसरः। अत एव—"मही घटत्वमि"त्युत्तरश्लोकेन मह्यादिष्वपि विज्ञानांशस्याधिष्ठानतापन्नस्य सत्यत्वमुपपाद्यते। श्रीभाष्यमते तु—मह्यादिषु विज्ञानांशस्यैवाप्रसक्तेस्तदुपपादनमसङ्गतं स्यात्। अतः—"अस्ति च नास्ति च सर्व-मि"त्यचेतनवर्गकलापस्य ग्रहणम्, न चेतनवर्गस्यापि। अत एव—"ज्ञानस्वरूपो भगवान्" इत्युत्तरश्लोके भगवच्छब्दप्रयोग उपपद्यते।

अनेन तु ज्ञाप्यते मत्स्याद्यनुगतं जीवेश्वराद्यनुगतं वा चैतन्यमात्रं भगवान्, नतु तद्व्यतिरेकेण भगवत्स्वरूपं नामेति तस्यैवाज्ञानावस्थायां विवर्तः प्रपञ्चो नामेति। श्रीभाष्यमते तु—विज्ञानरूपत्वेन भगवत उल्लेखोऽत्र वितथ एव। यदि शरीरित्वबोधनार्थम्, तर्हि किमिदं पारमार्थिकं मन्यते ? उतावस्तुभूतमिति। आद्ये "नतु वस्तुभूतः" इति वाक्यशेषविरोधः, द्वितीये त्वायातं मार्गेण ; अद्वैतमतप्रवेशात्। सर्वथा तु—चेतनाचेतनवर्गशरीर-शरीरिभावव्यवस्थापनार्थं न—"ज्योतींषि विष्णुरि" ति प्रकरणम्, किन्तु ब्रह्मव्यतिरेकेण तस्यावस्तुत्वव्यवस्थापनार्थमेव ॥

एतेन—"सद्भाव एवं भवतो मयोक्तः" इत्युपसंहारोऽपि—व्याख्यातः। अयं हि श्लोकः—"एवं सदैकः परमं परेशः स वासुदेवो न यतोऽन्यदस्ति।" इत्यद्वितीयपरमात्मव्यतिरेकेणेतरनिषेधानन्तरं प्रवृत्तः—प्रपञ्चस्य सर्वस्य सद्भावोऽपि बाधायां सामानाधिकरण्यनिबन्धन एव, न शरीर-शरीरिभावनिबन्धन इति ज्ञापयति। अत एव—"ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥" इति ज्ञानमात्रं सत्यमन्यदसत्यमिति परमोपसंहार उपपद्यते ॥

यत्तु श्रीभाष्ये—अत्र 'सत्यमसत्यमि' ति 'यदस्ति नास्ती' ति प्रक्रान्तस्योपसंहार इति वर्णितम्, तत्र—"यदस्ति नास्ती" त्यस्य तत्रोद्देश्यपरत्वात् "ज्ञानं सत्यमतोऽन्यदसत्यमि" त्यत्र सत्यासत्यपदार्थयोर्विधेयपरत्वाच्च वैरूप्याद् नोभयोरुपक्रमोपसंहाररूपत्वम्। तथाच व्यवहारमात्रोपयोगित्वं ज्ञानातिरिक्तस्य बोधयदिदं प्रकरणम्…"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति" वाचारम्भणश्रुत्यर्थमेव संगृह्णाति। इयान् विशेषः...सद्रूपेण कारणमात्रं परामृश्य तन्मात्रसत्यत्वं तत्र प्रतिपादितम्, अत्र तु ज्ञानरूपेण तत् परामृश्य तन्मात्रसत्यत्वं प्रतिपाद्यते, इति ज्ञानरूपत्वानु-

सन्धानेन विवर्तवाद एव वाचारम्भणश्रुतेरपि तात्पर्यमेवोपबृंहयति। ब्रह्मविवर्तानामखिलानामपि कार्याणां व्यवहारस्तु यावत्कर्मसम्बन्धमेव भवति, तदनन्तरं तु न व्यवहारोऽपीति तु फलितार्थः। इदमेवाभिप्रेत्योक्तम्…"अविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि सर्वाणि च विधि-प्रतिषेध-मोक्षपराणि शास्त्राणि" इति। तदेव विवृणोति…'यज्ञः पशुरिति'। एतेन—"यच्चैतद् भुवनगतं मयोक्तम्" इत्यपि व्याख्यातम्। तदेवं निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वाऽनुगुणमेव सर्वमिदं प्रकरणमिति व्याख्यातम्; तादात्म्योपदेशादीनां स्पष्टमेव जगतो ज्ञानरूपब्रह्मव्यतिरेकेणाभावबोधकसन्दर्भादीनां चान्यथाऽनुपपत्त्यभावात्॥

एतेन—अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वाऽनुगुणं किञ्चिदपि पदं न दृश्यत इति—परास्तम्, "अतोऽन्यदसत्यमि"ति ज्ञानेतरस्याज्ञानस्य स्पष्टमसत्यत्वरूपमिथ्यात्वप्रतिपादनात्, असत्यशब्दस्याचित्परत्वादिकल्पनायामुक्तप्रकरणातात्पर्यात्॥

एतेन—अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्व-मिथ्यात्वपरौ युक्तौ, अपितु विनाशित्वपरौ। 'मही घटत्वमि'त्यत्र विनाशित्वमेव प्रतिपादितम्, नतु निष्प्रमाणकत्वम्, ज्ञानबाध्यत्वं वा; एकेनाकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात्। नहि कालान्तरेऽनुभूतस्य कालान्तरेऽभावो मिथ्यात्वं नाम। एतदुक्तं भवति—ज्ञानस्वरूपतयात्मवस्तु आदि-मध्य-पर्यन्तहीनं सततैकरूपम्, इति स्वत एव सदाऽस्तिशब्दवाच्यम्, अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि 'विनाशीति सर्वथा नास्त्यर्थगर्भम्, इति नास्त्यसत्यशब्दाभिधेयम्। यथोक्तम्—

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै।
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम्॥"

"अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यताम् ।
तत्तु नास्ति न सन्देहो नाशिद्रव्योपपादितम् ॥" इति ।

अनेन ज्ञायते—देश-कालविशेषसम्बन्धापेक्षयाऽस्तित्व-नास्तित्वे—इति । नास्तित्वयोगिनि वस्तुनि केवलास्तिपदबोध्यत्वमपरमार्थः, आत्मन एव हि केवलास्तिबुद्धिबोध्यत्वमिति स एव परमार्थ इति । अत एव—

"विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम् ।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः"

इति मैत्रेयानुभाषणमुपपद्यते, इति "ज्योतींषि विष्णुरि"त्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनमिति श्रीभाष्योक्तिः—परास्ता ; दत्तोत्तरत्वात् ॥

**नहि वयं नास्तिपदेनात्राचितो मिथ्यात्वं वदामः, किन्तु ज्ञानव्यतिरिक्तस्यासत्यत्वबोधनेनैव । असत्यपदं हि मिथ्यापर्यायत्वात् मिथ्यात्वपरत्वं न जहाति । "मही घटत्वं घटतः कपालिके"त्यपि मह्यादीनामवस्तुत्वापरपर्यायं मिथ्यात्वमेव बोधयति । न ह्यत्र प्रकरणे एकस्मिन् कालेऽनुभूतस्य कालान्तरेऽन्यथोपलब्ध्या नास्तिपदबोध्यत्वं प्रतिपादितम् ॥**

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपेति वै ॥
परिणामादिसम्भूतां तद्वस्तु नृप तच्च किम् ।"

**इति वचनं तु वस्तुनः स्वप्रकाशस्य प्रमाणतन्त्रत्वम्, वेदान्तवासनाऽवासितान्तःकरणाद्यगोचरत्वमेव च प्रतिपादयति, नतु नित्यापरोक्षाहमर्थादिचेतनवर्गवस्तुत्वमपि, येन चेतनाचेतनयोरेवास्ति-नास्तिपदबोध्यत्वं विवक्षितं स्यात् । स्पष्टं हि—**

"पुमान् न देवो न नरो न पशुर्नच पादपः ।
शरीराकृतिभेदाश्च य एते कर्मयोनयः ॥
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् ।
तथान्यच्च नृपेत्थं तु न सत् संकल्पनामयम् ॥"

**इति सर्वेषां चेतनाचेतनवर्गाणां न वस्तुत्वम्, किन्तु कल्पनामयत्वमिति प्रतिपाद्यैवायं श्लोकः प्रवृत्तः—"यत्तु कालान्तरेणा-**

पी'ति। सति चैवमचिद्वस्तुमात्रस्य नास्तिपदबोध्यत्वमत्र वर्ण्यत इति कथमुपपद्येत ? अत एव—

"तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥"

इति विज्ञानातिरिक्तद्वितीयमात्रमिथ्यात्वमुत्तरत्र प्रतिपादितमुपपद्यते। अत्र चात्मन एव परमार्थत्वं बोध्यते, इति नेदमद्वैतिनामपि विप्रतिपन्नम्, को नामायमात्मा विष्णुपुराणप्रतिपाद्यः किं श्रीभाष्याभिमतो मुख्याहमर्थ एव, उताहमर्थादन्यदेव किञ्चिदिति तु नाविप्रतिपन्नम्। वक्तव्यं चात्र सर्वं पूर्वमेवोक्तं विष्णुपुराणवाक्यानुसारेणापि यदहमर्थोऽनात्मेति। "अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यताम्। तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम्"इति श्लोकस्तु कर्मफलानामपि परमार्थत्ववादनिषेधपरमेव, नतु मुख्याहमर्थचेतनवर्गसत्यत्वप्रतिपादनपरम्, यतः

"परमार्थस्तु भूपाल संक्षेपात् श्रूयतां मम।
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः।
जन्म-वृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥"

इति सर्वगतमपरिच्छिन्नमन्तःकरणाद्युपाधिविरहितं शुद्धं चैतन्यमेव परमार्थतया प्रतिपाद्यते। एतेन

"परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः।"

इति मैत्रेयानुभाषणेनाप्येकवाक्यता व्याख्याता; यतः विषयोपरागहीनं विज्ञानं परमार्थो यथा, तथा व्याख्यातम्, इति योजनया ज्ञानमात्रपरमार्थतायामेव तात्पर्यमवगम्यते। सर्वथा तु "ज्योतींषि विष्णुरि"त्यादि सामानाधिकरण्यमधिष्ठानारोप्यभावनिबन्धनमेव, नतु शरीर-शरीरिभावनिबन्धनमित्यनुभाषणमेव मैत्रेयेण विवक्ष्यते। अत एव "विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितमि"ति विष्ण्वधिष्ठानकत्वोक्तिरुपपद्यते। सर्वं चेदमनिर्वचनीयाज्ञानवादं विना न कथमप्युपपद्यते, इति पुराणेतिहास-

योरपि भावरूपेऽनिर्वचनीयेऽज्ञाने भावाभावविलक्षणे प्रामाण्यमभ्युपगन्तव्यम्। अनिर्वचनीयत्वं त्वस्य ज्ञानबाध्यत्वानुपपत्त्यैवेति पूर्वमेवोपपादितम्। अत्र चार्थे—"तरति शोकमात्मवित्" "विद्वान् नामरूपाद्विमुक्तः" "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" इत्यादिश्रुतयः प्रमाणम्॥

अत्र श्रीभाष्यकाराः—निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति वादो न प्रामाणिकः; "वेदहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था विद्यतेऽयनाय।" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "न तस्येशे कश्चन तस्य नाम महद्यशः" "य एनं विदुरमृतास्ते भवन्ति" इति सविशेषब्रह्मज्ञानादेव मोक्षं प्रतिपादयन्ति बाध्येरन्। यथाच शोधकवाक्यान्यपि सविशेषपराण्येव, न निर्विशेषपराणि, तथोक्तमेव पूर्वमिति—वदन्ति॥

अद्वैतिनस्तु मन्यन्ते—निर्विशेषज्ञानादेव मोक्षः; सविशेषपरत्वमेव सर्वेषां वेदावावाक्यानामिति वादो न क्षोदक्षमः, तन्निवृत्त्यनुपपत्त्या चानाद्यज्ञानमनिर्वचनीयमेव स्वीक्रियते—इति। वक्तव्यं चात्र सर्वं पूर्वमेव विशदमुपपादितम्। सति चैवम्—"तत्त्वमसी"ति सामानाधिकरण्यमप्यैक्योपदेशपरमेव; न शरीर-शरीरिभावपरम्, शरीर-शरीरिभावनिबन्धनतादात्म्यस्य लोकसिद्धत्वाभावेनालौकिकत्वेन विना स्पष्टं प्रमाणं तदङ्गीकारासंभात्। लोके हि जातिगुणयोरेव द्रव्येण तादात्म्यं दृष्टचरम्, द्रव्याणां तु कार्य-कारणभावनिबन्धनमेव तद् दृष्टचरम्—यथा मृद् घटः, रुचकं सुवर्णमित्यादि; अन्यथा तु द्रव्याणाम्—मत्त्वर्थीयप्रत्ययमद्वारेव सामानाधिकरण्यम्—दण्डी कुण्डली पुरुषः इति। गौः, 'अश्वः' 'मनुष्यः' 'देवः' 'पुरुषः' 'योषित्' 'षण्ड आत्मा' कर्मभिर्जातः इत्यादौ मनुष्यादिशरीराणां नियमेनात्मविशेषणतया भानेऽपि काल्पनिकमेव तादात्म्यं स्वीक्रियते, न लाक्ष-

**णिकं गौणं वा; गौण-मुख्ययोर्मुख्ये कार्यसंप्रत्ययात्। अध्यासनिबन्धनं बाधायां सामानाधिकरण्यमपि तु मुख्यमेव; भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थबोधकत्वं हि तत्राप्यविशिष्टमेव। "तत्त्वमसी" त्यादौ लक्षणया चैतन्यमात्रविवक्षायामप्यभेदे सामानाधिकरण्यमपि प्रवृत्तिनिमित्तभेदाविशेषाद् नामुख्यम्। तथाचात्मैकाश्रयत्वेऽपि मनुष्यादिशरीराणां शरीरिणा तादात्म्यमध्यासनिबन्धनमेव, नतु शरीर-शरीरिभावनिबन्धनम्। अत एव—देहादिष्वात्मप्रत्ययो न गौणः, किन्तु मिथ्यैवेति भगवत्पादानां सिद्धान्तः। सति चैवं द्रव्याणां परस्परतादात्म्ये कुत्रचन कार्य-कारणभावः, कुत्रचन शरीर-शरीरिभावः, इत्यनेकप्रयोजककल्पनाऽऽपत्त्या गौरवमपि परिहृतं भवति, अद्वैतमते तूपादानोपादेयभाव एक एव द्रव्ययोस्तादात्म्यप्रयोजक इति कल्पनाद् लाघवम्॥**

एतेन—जाति-गुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः" इति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम्। जाति-गुणयोरपि द्रव्यप्रकारत्वमेव 'खण्डो गौः' शुक्लो घटः' इति सामानाधिकरण्यनिबन्धनम्। ततश्च मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मना प्रकारतयैव पदार्थत्वात् 'मनुष्यः'पुरुषः' इति सामानाधिकरण्यं सर्वत्रानुगतम्, इति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनम्, न परस्परव्यावृत्ता जात्यादयः। कदाचिद् द्रव्यविशेषणत्वे तु मत्वर्थीयप्रत्ययो दृष्टः—दण्डी कुण्डलीति, न पृथक् प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्; तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेवेति श्रीभाष्योक्तिरपि—परास्ता; मत्वर्थप्रत्यानपेक्षया प्रतीयमानं प्रकारत्वं यदि सामानाधिकरण्यनिबन्धनम्, तर्हीदंप्रकारत्वे किं प्रयोजकमिति वक्तव्यम्; यदि जात्यादयः, तर्हि परस्परव्यावृत्ता जात्यादयः कथं प्रकारतायामपि तादृश्यां प्रयोजकतामर्हेयुः? सर्वथा तु परस्परव्यावृत्ता जात्यादय इव शरीरमपि परस्परव्यावृत्तकोटिप्रविष्टं न तत्र प्रयोजकं स्यात्, इति शरीरभावस्य प्रकारताप्रयोजकत्वं बाधितं स्यात्। सति चैवम्—जातिगुणाद्यन्यतमस्यैव प्रकारताप्रयोजकत्वस्य स्वीकरणीयत्वाद् तन्मध्य उप-

दानोपदेयभावस्यापि प्रवेशस्यावश्यकत्वात् शरीरस्याप्यात्मन्यध्यास-स्वीकारेणैवेष्टनिर्वाहे व्यर्थं शरीरभावस्यापि प्रकारताप्रयोजकत्वकल्पनम्। दण्डस्य तु पुरुषप्रकारत्वं मत्वर्थप्रत्ययापेक्षमेव वर्तते, इति न कोऽपि दोषः ।।

एतेन—मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वम्, तदेकप्रयोजनत्वं च जात्यादितुल्यम्। आत्मैकाश्रयत्वमात्मविश्लेषे विनाशादवगम्यते। आत्मैकप्रयोजनत्वं च तत्तत्कर्मफलभोगार्थतयैव सद्भावात्। तत्प्रकारत्वमपि–'देवो मनुष्यः' इत्यात्मविशेषणतयैव प्रतीतेः। एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः। एतत्स्वभावविरहादेव दण्ड-कुण्डलादीनां विशेषणत्वे मत्वर्थप्रत्यय इत्यादि—परास्तम्; अधिष्ठानारोप्यभावेनान्यत्र क्लृप्तेनैव शरीरात्मनोरपि सामानाधिकरण्यप्रत्ययोपपत्तौ प्रकारतैकस्वभावत्वस्यापि तत एवोपपत्तौ शरीरभावस्य तत्कल्पकत्वकल्पनायां प्रमाणाभावात्, शरीर-शरीरिभावनिबन्धनमपि सामानाधिकरण्यमिति स्वगोष्ठीमात्रजल्पनं हि निर्मूलमेव; अन्यथा शरीरभेदेनात्मभेदस्य दर्शनेन परमात्मभेदकल्पनमपि समापद्येत। न हि कुत्रापि शरीरिणो नित्यसिद्धमनेकशरीरकत्वम्। श्रुतिप्रामाण्यात्तु—अधिष्ठानारोप्यभावकल्पनैव साधीयसी शरीरात्मनोः, अद्वितीयत्वाद्युपपत्त्यर्थम्। अधिकमन्यत्र व्यक्तम्।।

वस्तुतस्तु—न ब्रह्मप्रकारतैकस्वभावत्वं चिदचितोः, येन तयोर्ब्रह्मशरीरत्वं कल्पयितुं शक्येत। नहि शरीरं सर्वदाऽऽत्मप्रकारतयैव प्रत्यक्षीक्रियत इति संभवति,आत्मनो ग्रहणे चक्षुरादेरसामर्थ्यात्। यदि प्रकारतैकस्वभावत्वपदेन प्रकारतास्वभावत्वावगम एकपदसामर्थ्यात् एकसामग्रीवेद्यत्वस्वभावो व्यावर्त्यते, अन्यथा चक्षुषा पृथिव्या इव गन्ध-रसादीनां तद्गतानामग्रहणाद् गन्धादेरपि पृथिवीप्रकारतैकस्वभावत्वं न स्यात्। अतस्तत्प्रकारतैकस्वभावत्वं प्रति तदेकाश्रयत्व-तदेकप्रयोजनत्व-तद्विशेषणत्वानामेव प्रयोजकत्वेन शरीर-

स्यापि आत्मप्रकारतैकस्वभावत्वं मन्यते सहोपलम्भनियमस्यैवैकसामग्रीवेद्यत्वनिबन्धनत्वस्वीकारेण, एवमपि केन प्रमाणेन शरीरस्यात्मपर्यन्तस्यैव प्रतीतिरिति वक्तव्यम्। यदि देवदत्तो जनाति इत्यादौ देवदत्तादिशब्देनात्मपर्यन्तस्यैव प्रतीतिरिति मन्यते, नेदं युक्तम्; 'शरीरं नश्वरम्' इत्यादिवाक्यैरात्मपर्यन्तप्रतीत्यभावात्, अन्यथाऽत्मनोऽपि नाश इति समापद्यते। एतेन—"यस्य पृथिवी शरीरम्" "यस्यात्मा शरीरम्" इत्यादिश्रुतयोऽपि—व्याख्याताः॥

अत्र श्रीभाष्यानुयायिनः—आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निष्कर्षकशब्दोऽयं "यस्य पृथिवी शरीरमि"त्यादौ शरीरादिशब्दः। निष्कर्षशब्दो द्विविधः—वैवक्षिकनिष्कर्षकः, नियतनिष्कर्षकश्चेति। तत्र शरीरादिशब्दाः नियतनिष्कर्षकाः, आत्मादिशब्दा वैवक्षिकनिष्कर्षकाः गोत्वादिशब्दवत्, शुक्लादिशब्दवच्च; प्रयोगस्य व्यवस्थापकत्वात्, निष्कर्षकानिर्षकशब्दविभागोऽपि हि प्रयोगाधीनः, तद्द्वयमपि विभागस्तन्मूलः। शुक्लादिशब्देषु मत्वर्थीयप्रत्ययस्तु द्विशब्दस्थद्विवचनवत् प्रकृत्यनतिरिक्तार्थः, त्रिलिङ्गतया शब्दसाधुत्वाय स्वरविशेषाय च भवति। अत एव "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति नैघण्टुकाः। अतो जातिवाचिशब्दवत् अपृक्सिद्धविशेषणवाचित्वं शुक्लादिशब्दानामप्यविशिष्टमेव, "गुणवचनेभ्यो मतुपो लुगिष्टः" इति मतुब्लोपस्मरणं तु लिङ्गस्वरार्थमेव, नतु गुण्यभिधानशक्तिविरहिणां गुण्यभिधानार्थम्। अतः शुक्लादिशब्दा वैवक्षिकनिष्कर्षकशब्दा इति वदन्ति॥

इदं तु न क्षोदक्षमम्; आकृत्यधिकरणविरोधेन गवादिशब्दानां जात्यादिबोधकत्वस्यैव मुख्यत्वेन व्यक्तीनां तत्र लक्षणयैव बोधस्य स्वीकारेण च तद्दृष्टान्तेन शरीरवाचकानामपि शब्दानां शरीरिपर्यन्तत्वस्य लाक्षणिकत्वापत्त्या शरीरिपर्यन्ततताया मुख्यत्वाभावात्, अद्वैतमते तु—रजतस्येदंपदार्थेनेव शरीरस्यापि शरीरिणा कल्पितस्य तादात्म्यस्य स्वीकाराद् विनापि शरीरवाचकादिशब्दानां

शरीरिपर्यन्तत्वं सामानाधिकरण्यं तादात्म्यविषयकमिति न मुख्यत्वहानि; तादात्म्यबोधकत्वाविशेषात् । 'सिंहो माणवकः' इत्यादौ तु सादृश्यमेव वाक्यार्थः, न तादात्म्यमिति न विरोधः ॥

एतेन—अयुतसिद्धविशेषणवाचिशब्दानां विशेष्यलक्षणाप्रतिबन्धकत्वमङ्गीकर्तव्यम्; अन्यथा जात्यादिशब्दानामपि सम्बन्धानुपपत्त्या क्वचिद् व्यक्तिपर्यन्तताप्रसङ्ग इति—परास्तम्; उक्तप्रतिबन्धकतायां प्रमाणाभावात्, सम्बन्धानुपपत्त्या जातिवाचकशब्दानामपि लक्षणया व्यक्तिपर्यन्तताया इष्टत्वात्। "गुणिलिङ्गास्तु तद्वति" इति तु लाक्षणिकप्रयोगाभिप्रायमेव; निरूढलक्षणाया अपि शक्तितुल्यत्वात्तु निघण्टुषु तदुल्लेखः; अन्यथा कपालादिशब्दानामपि घटादिवाचित्वापत्तिः। यदि गुणवाचकशब्देष्वेवायं नियमः, "गुणे शुक्लादयः पुंसी"तिकोशे गुणपदस्वारस्यादिति मन्यते, तर्हि शरीरवाचकानामपि शरीरिपर्यन्तत्वं व्याहतमेव। तथाच—"गुणे शुक्लादयः पुंसी"ति कोशे गुणवाचकानां शब्दानामेव निरूढलक्षणयाऽपि तद्वति प्रवृत्त्युपदेशानुपपत्तिरपि शरीरवाचकानां पदानां शरीरिपर्यन्ततायां समापतति, इत्यगत्याऽयुतसिद्धद्रव्यविशेषणवाचकानां न तद्विशिष्टपरत्वम्, तादात्म्यबोधस्तु द्रव्यमात्रपरयोरेव तत्र प्रतीयत इति स्वीकर्तव्यमेव; अन्यथा—घटपदेनापि केवलेन घटविशिष्टस्यैव बोधापत्तिः। नहि तत्प्रकारतैकस्वभावस्य द्रव्यस्यापि तद्विशिष्टपरत्वं कुत्रापि दृष्टचरम्। अतो देवदत्तो जानातीत्यादौ शरीरवाचकानां पदानां सम्बन्धानुपपत्त्या लाक्षणिकत्वमेव स्वीकर्तव्यम्। अस्तु वा कथंचन देवदत्तो जानातीत्यादिस्थले शरीरवाचकानां पदानां शरीरिपर्यन्तत्वम्; ततः किं परमात्मचिदचिच्छब्दानां सामानाधिकरण्यस्य ? न हि देवदत्तादि शरीरमिव जीवात्मनः, जीवादयस्सर्वेऽपि परमात्मशरीरतामर्हन्ति; अजडत्वात्। शरीरं चेतनमिति च व्याहतम्। "यस्य पृथिवी शरीरम्"

इत्यादौ तूपासनाविशेषार्थं 'मनसि ब्रह्मत्वमि'व पृथिव्यादौ शरीरत्वं कल्पितमेव, न पारमार्थिकम्। "वायुर्वा संवर्गः" इतिवत् नियाम्यत्वादिरूपगुणसाम्यप्रयुक्तं वा शरीरत्वम्। न ह्येतदन्यथानुपपत्त्या जीवात्मनोऽपि चेतनस्य शरीरत्वं पारमार्थिकं स्वीकर्तुमुचितम् ॥

एतेन—परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः। एतादृशमेव तादात्म्यमत्र विवक्षितमित्यत्र—"आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति बादरायणसूत्रम्, "आत्मेत्येव गृह्णीयात्" इति वाक्यं च प्रमाणम्, मतान्तरे तु न कथमपि सामानाधिकरण्यनिर्वाहसम्भवः। तथाहि—अद्वैतिनो हि अपरमार्थैक्यविषयं सामानाधिकरण्यमिति मन्यन्ते। तत्र च बाधितार्थत्वाद् वाक्यप्रामाण्यमेव हीयेत। एतेन—"सर्वं खल्विदं ब्रह्मे"ति वाक्यमपि—व्याख्यातम्; अचिद्ब्रह्मणोरैक्यायोगात्, "अहं ब्रह्मस्मी"ति सामानाधिकरण्यं त्वहंपदेन ज्ञप्तिमात्रविवक्षायामहं जानामीति व्यपदेशानुपपत्त्या केवलान्तःकरणस्याहमर्थत्वस्याद्वैतिभिरनङ्गीकाराद् अहमर्थस्यात्मनो ब्रह्मणो भिन्नत्वाच्च बाधितमेवेति—परास्तम्; भावानवबोधात् ॥

न ह्यद्वैतिनो व्यवहारदशाऽबाधितत्वेऽपि वाक्यानामप्रामाण्यं मन्यन्ते, संभवति वा। अपरमार्थत्वं हि सर्वतादात्म्यस्य व्यावहारिकत्वमेव, न प्रातिभासिकत्वम्। तदुक्तम्—"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥" इति। यथाच नाहमर्थ आत्मा, तथा पूर्वमेव विवेचितम्, इति बाधायामभेदे वा तादात्म्यगोचरतया वेदान्तवाक्यप्रामाण्यमद्वैममते न कथमपि हीयते। "आत्मेति तूपगच्छन्ति" इति सूत्रं हि परमात्मन एवात्मत्वं ब्रवीति, तावता तु नाहमर्थ आत्मेत्येतद् विवक्षितम्, नतु सर्वस्यात्मतया परमात्मानुसन्धानं कर्तव्यमिति, येन शरीरशरीरिभावे इयं श्रुतिः प्रमाणं स्यात्। तथाच वाक्यकारोक्तरीत्या न शरीर्यैवात्मेति प्रकृतेऽर्थः; बाधितत्वात्, पूर्वोक्तरीत्या चेतनाचेतनवर्गस्यात्मप्रकारतैकस्वभावाभावेन तच्छरीरत्वस्यासंभवात्। अन्यथा

"अस्मान् मायी सृजते विश्वमेतत्" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" ( अत्र हरशब्देन भोक्ता विवक्ष्यते ; प्रधानमात्मनो हरतीति हरः) "स कारणं करणाधिपाधिपः नचास्य कश्चिद् जनिता नचाधिपः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम्" "ज्ञाज्ञौ द्वावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "भोक्ता भोग्यं प्रेरितारं च मत्वा" "तयोरन्यः पिप्पलं स्वाद्वत्ति" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति चेतनाचेतनवर्गतः पृथक्कृत्य परमात्मस्वरूपविवेकोऽनुपपन्नः स्यात्। नहि श्रीभाष्यमते शरीरात् पृथक्कृत्य शरीरिमात्रस्योपदेशोऽयमुपपद्यते; केवलशरीरिवाचकस्य केवलशरीरवाचकस्य च शब्दस्य तन्मते मुख्यस्य वर्णनासंभवात्। अनेन तु ज्ञाप्यते नापृथक्सिद्धिसम्बन्धेनैव चेतनाचेतनब्रह्मणां प्रतीतिरिति। एतेन—"नेह नानास्ति किञ्चन" इत्यादिश्रुतयोऽपि व्याख्याताः। एता हि—चैतन्यस्वरूपमात्रे ब्रह्मणि द्वितीयसामान्यं निषेधन्त्यो ब्रह्मव्यतिरेकेणेतरेषामभावमेव बोधयन्ति। "मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतयोऽप्यत्रानुसन्धेयाः। "य आत्मनि तिष्ठन्" इति जीवस्याप्यन्तर्यामितया परमात्मनिरूपणेनापीदमेव ज्ञायते, शरीरादीनामिव जीवस्याप्यात्मत्वं परमात्मतादात्म्येनैव, न तु वस्तुगत्येति। अत्रात्मनोऽन्तर्यामी परमात्मेति वर्णनात् तज्ज्ञानेनैव ब्रह्म भाव इति मन्यते, यदि ज्ञेयं उपास्यं वा ; उभयथाऽपि तद्विवर्तत्वमेव सर्वस्येति प्रतीयते, इति नान्तर्यामिब्राह्मणमपि शरीर-शरीरिभावपारमार्थिकतायां प्रमाणम्। न हि तन्नियाम्यत्वमात्रेण अपृथक्सिद्धिः संभवति, राजनियाम्यानां प्रजानां तदपृथक्सिद्ध्यभावात्।

तथाच तत्प्रकारतैकस्वभावत्वं विनापि तदेकाश्रयत्व-तदेकप्रयोजनत्व-मात्रेण तन्नियाम्यत्वस्य प्रजासु दर्शनात् पृथिव्यादीनां परमात्मनियाम्यत्वमात्रेण पृथग् व्यवह्रियमाणानामप्यपृथक्सिद्धत्वमेवेति कल्पना निरवसरैव ॥

एतेन—एवं भोक्तृ-भोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोश्चिदचितोः परमपुरुषशरीरतया तन्नियाम्यत्वेन तदपृथक्सिद्धिं परमपुरुषस्य चात्मत्वमाहुः काश्चन श्रुतयः—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य—"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः" इति। तथा—"यः पृथिवीमन्तरे सञ्चरन् यस्य पृथवी शरीरं यं पृथिवी न वेद" इत्यारभ्य—"योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मुत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः।" (अत्र मुत्युशब्देन तमः-शब्दवाच्या सूक्ष्मावस्थाऽचिदुच्यते; अस्यामेवोपनिषदि—"अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति वचनात्।) "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" इति चेति श्रीभाष्योक्तिः—परास्ता; दत्तोत्तरत्वात् ॥

अयं भावः—अन्तर्यामिब्राह्मणं हि बृहदारण्यकोपनिषदि स्थानद्वय आम्नायते तृतीयचतुर्थब्राह्मणे। तद्यथा—अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच—"यः साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं म आचक्ष्व इत्येष त आत्मान्तर्यामी कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति—योऽपानेनापानिति... यो व्यानेन व्यानिति...य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ॥ १ ॥ स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद् व्याचक्ष्वेत्येष तद् व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं व्याचक्ष्वेष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारं

पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञाते-र्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽन्यदार्तं ततो ह्योषस्त उपरराम॥'' इति। तत्रैव षष्ठे ब्राह्मणे—"वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं च परं च लोकं सर्वाणि च भूतानि संदृब्धानि योऽन्तरो यमयतीति प्रश्नोत्तरतया—"यः पृथिव्यां तिष्ठन्नि'' त्यादिरूपम् । इदमत्र न विस्मर्तव्यम्—यत् प्राथमिके ब्राह्मण इवात्रापि—"एष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्यदतोऽस्ति द्रष्टा नान्य-दतोऽस्ति श्रोता नान्यदतोऽस्ति मन्ता नान्यदतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक उपरराम''ति 'सर्वान्तरोऽयमेष त आत्मे'त्यादिना पुरोवस्थितोद्दालकात्मस्वरूपमेवा-दृश्यत्वादिना तद्व्यतिरिक्तमिथ्यात्वेन चोपसंह्रियत इति। सति चैवं पृथिव्यादिशरीरनिष्कर्षपूर्वकं प्रवृत्तेऽत्र प्रकरणेऽन्तर्यामिशब्देन पृथिव्यादिपृथक्कारेण चैतन्यांशमात्रस्योपदेशावसरे—"अतोऽन्यदा-र्तमि''ति सर्वान्तरान्तर्यामिस्वरूपव्यतिरिक्तस्य सुबालोपनिषदेक-वाक्यतया सूक्ष्मावच्छाचिदंशपर्यन्तस्य मिथ्यात्वस्य प्रतिपादनात् चिदचिच्छरीरकपरमात्मतावादे नेदं प्रकरणमनुकूलम् । शरीर-शरीरिभावं विनाऽपि सर्वान्तरस्य प्रथममुपदेशात्तु द्वितीयब्राह्मणो-पदिष्टं पृथिव्यादिशरीरत्वमपि कल्पितमेवोपासनार्थमित्यवगम्यते। अत एव हीदमित्थमिति निर्देशानर्हत्वमपि प्रथमब्राह्मणे प्रति-पादितमुपपद्यते। तथाचान्तर्यामिब्राह्मणमिदमद्वैतवादस्यैवानुगुणम्, नतु चिदचिच्छरीरकब्रह्मवादस्य ॥

एतेन—"यः पृथिव्यां सञ्चरन्'' इत्यादिसुबालोपनिष-द्वाक्यमपि—व्याख्यातम्; तत्र हि शरीरत्वेन निर्दिष्टानां तमः-पर्यन्तानां ब्रह्मणि लयप्रतिपादनात् सर्वेषां शरीरत्वेनाभिमतानां विनश्वरत्वावगमेन च चिदचिद्विशिष्टं ब्रह्मैव वस्तु; अविनाशित्वा-

दिति श्रीभाष्यसिद्धान्तः सुबालोपनिषदैवापाक्रियते। एतेन—"अन्तः प्रविष्टः शास्ता जनानामि"त्यपि—व्याख्यातम्; तस्यापि चैतन्यमात्रपरत्वात्, सर्वप्रपञ्चाध्यासाधिष्ठानतामात्रेणान्तर्यामित्वाभिप्रायत्वाच्च ॥

सति चैवं ब्रह्मणः प्रपञ्चाद् निष्कृष्य प्रतिपादनम्, प्रपञ्चान्तरत्वप्रतिपादनम्, कार्येण प्रपञ्चेन सामानाधिकरण्यमप्युपपन्नं भवति—"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत" इत्यारभ्य—"सन्मूलास्सौम्येमाः सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः। ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो"इति,"सोऽकामयते"त्यारभ्य-"सत्यं चानृतं च सत्यमभवदि"ति च। इदं हि सामानाधिकरण्यमधिष्ठानारोप्यभावनिबन्धनमेव,न शरीर-शरीरिभावनिबन्धनम्। अत्र तद्विवक्षाज्ञापकप्रमाणाभावात्, प्रत्युत इदंतादात्म्यापन्नं सद्रूपमद्वितीयमित्युक्तत्वाच्छरीरस्यापि निषेधेनाशरीरत्वस्यैव प्रकृतत्वाच्च ॥

"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतिरपि जीवस्यैव परमात्मत्वमभिप्रेत्य प्रवर्तमाना जीवशरीरतायां बाध्येत, अत्र जीव आत्मपदप्रयोगो जीवस्य शरीरतायां विरुद्ध्येत। श्रीभाष्यकारास्तु—आत्मशब्दस्यात्मीयपरत्वमङ्गीकृत्य जीवशरीरतापक्षमत्राभिमतं सूचयन्तो लक्षणयैव बोध्यमर्थमत्र विवक्षणीयं मन्यन्ते। जीवस्याप्यचिद्विशिष्टस्य नामरूपव्याकरण-तदभावाभ्यामेवोत्पत्ति-प्रलयौ, न स्वरूपत इत्यादि तदीयं हृदयम्। वयं तु जीवस्याप्युत्पत्तिप्रलयावौपाधिकावेव, न स्वरूपत इत्येव मन्यामहे, इयान् विशेषः—येन स्वरूपेण नोत्पत्ति-प्रलयौ, तेन रूपेण जीव एव ब्रह्मेति वयं वदामः, तेनापि रूपेण जीवः परमात्मनः शरीरमेवेति परे वदन्ति। कालविशेषे ब्रह्मणैक्यमुक्तं नामरूपव्याकरणाभावायत्तं न स्वरूपतोऽप्यैक्यमिति श्रीभाष्याशयः, स्वस्वरूपेणैव जीवस्योपाधिविलये

परमात्मनैक्यमिति तु भगवत्पादाशयः। सवथा च—कारणावस्थप-रमात्मवाचकेन पदेन कार्यवाचिनः पदस्य सामानाधिकरण्यं मुख्यम्। तच्च कारणत्वं सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मण उपादानत्वमेवेति श्रीभाष्यसिद्धन्ते प्रथमांशे नाद्वैतिनोऽपि विवदन्ते। द्वितीयांशेऽपि सूक्ष्मचिदचिद्विशिष्टं ब्रह्मोपादानमित्यस्मिन्नंशेऽपि न ते विवदन्ते, सूक्ष्मचिदचिद्वैशिष्ट्यं परं न ते स्वीकुर्वन्ति। अपरोऽयं विशेषः—यत् श्रीभाष्यमते ब्रह्मण उपादानत्वव्यवहारो गौणः; कल्पितस्यापि तस्यानङ्गीकारात्, अद्वैतमते तु परिणममानाविद्याविषयत्वेन चैतन्यांशस्याप्यधिष्ठानविधया विवर्तोपादानत्वस्वीकाराद् न तद् गौणम्, विशेषस्तु—सूक्ष्मचिदचितोः शरीरत्वमपि स्वीक्रियते मता-न्तरे। तदुक्तम्—"सूक्ष्मचिदचिच्छरीरकं ब्रह्मैव कारणम्, ब्रह्मोपा-दानत्वेऽपि संघातस्योपादानत्वेन चिदचितोः, ब्रह्मणश्च स्वभावासं-करोऽप्यनुसन्धेयः। यथा—शुक्ल-कृष्ण-रक्ततन्तुसंघातोपादानत्वेऽपि चित्रपटस्य तत्तत्तन्तुप्रदेश एव शौक्ल्यादिसम्बन्धः, इति कार्यावस्था-यामपि न वर्णसंकरः, तथा चिदचिदीश्वरसंघातोपादानत्वेऽपि जगतः कार्यावस्थायामपि भोक्तृत्व-भोग्यत्व-नियन्तृत्वाद्यसंकरः" इति। अद्वैतिनस्तु न सूक्ष्मचिदचितोः शरीरत्वं तत्तदंशस्यैव तत्तदंशोपा-दानत्वादिकं च स्वीकुर्वन्ति; ब्रह्मण एव सर्वोपादानत्वस्यैकरूपस्य तैः स्वीकारात्। यथाच—ब्रह्मणोऽद्वैतसिद्धान्ते स्वीक्रियमाणे भोक्तृ-त्वादिकं नापतति, तथा—'भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इति सूत्रभाष्यादौ व्यक्तम्। विशदीकृतं च सर्वमिदमनुपपदमेव, इति निर्गुणब्रह्मवाद एव वेदान्तानां तात्पर्यमुरीकर्तव्यम्॥

यत्तु श्रीभाष्यकाराः—निर्गुणवादाश्च परस्य ब्रह्मणो हेयगुणासं-म्बन्धादुपपद्यन्ते। "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सो-ऽपिपासः" इति हेयगुणान् प्रतिषिद्ध्य—"सत्यकामः सत्यसंकल्पः" इति कल्याणगुणान् विदधतीयं श्रुतिरेवान्यत्र सामान्येनावगतं गुणनिषेधं

हेयगुणविषयं व्यवस्थापयति । "ज्ञानस्वरूपं ब्रह्मे"ति वादश्च सर्वज्ञस्य सर्वशक्तेर्निखिलहेयप्रत्यनीककल्याणगुणाकरस्य ब्रह्मणः स्वरूपं ज्ञानैकनिरूपणीयं स्वयंप्रकाशतया ज्ञानस्वरूपं चेत्यभ्युपगमादुपपन्नतरः । एतेन—"यस्सर्वज्ञः सर्ववित्" "स्वभाविकी ज्ञानबलक्रिया च" "विज्ञातारमरे केन विजानीयात्" "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादिश्रुतयोऽपि— व्याख्याताः; "बहु स्यां प्रजायेय" "नामरूपाभ्यां व्याक्रियत" इति ब्रह्मैव स्वसंकल्पाद् विचित्रस्थिरत्रस्वरूपतया नानाप्रकारमवस्थितम्, इति तत्प्रत्यनीकाब्रह्मात्मकवस्तुनानात्वमतत्त्वम्, इति तत् प्रतिषिध्यते— "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" 'नेह नानास्ति किञ्चन" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं विजानीयात्" इत्यादिना, नतु "बहु स्यामि"त्यादिश्रुतिसिद्धं नानाप्रकारकत्वमपि । तदेवम्—चिदचिदीश्वराणां स्वरूपभेदं कार्य-कारणभावं कार्य-कारणयोरनन्यत्वं च वदन्तीनां श्रुतीनामविरोधः, यतश्चिदचितोः परमात्मनश्च सर्वदा शरीर-शरीरिभावः शरीरभूतयोः कारणतादशायां नामरूपविभागानर्हसूक्ष्मदशा, कार्यदशायां तदर्हस्थूलदशापत्तिश्च श्रुतौ प्रतिपाद्यते । तथाच ब्रह्माज्ञानवादः सकलश्रुतिविरुद्धः । यथाहि—आग्नेयादीनां षण्णां यागानामुत्पत्तिवाक्यैः पृथक्स्वरूपतयाऽवगतानां विद्वद्वाक्याद् समुदायद्वित्वमापादितानाम्—"दर्श-पूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारवाक्यैः कामिनः कर्तव्यतया विधानम्, तथा चिदचिदीश्वराणां विविक्तस्वरूपाणाम्—'क्षरं प्रधानम्' "यस्य पृथिवी शरीरम् ।" "पतिं विश्वस्यात्मेश्वरम्" इति वाक्यैर्विविक्तस्वभावतयाऽवगतानां चिदचिदीश्वराणाम्—"यस्य पृथिवी शरीरम्" "यस्याव्यक्तं शरीरम्" "यस्याक्षरं शरीरम्" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति शरीर-शरीरिभावं प्रतिपाद्य सद्ब्रह्मादिशब्दैस्त्वमादिशब्दैश्च समुदितरूपेणाभिधानम् । इयान् विशेषः—यद् आग्नेयादीनां प्रकार-प्रकारिभावाभावाद् अन्यतमवाचिना शब्देन न समुदायाभिधानम्, अत्र तु तथा भावात् तदुपपन्नमिति । तथाच—"सदेवे"त्यादौ तत्त्वमस्यादिवाक्यैः सदादिशब्दैश्चिदचिच्छरीरकपरमात्मन एवाभिधानाद् न कोऽपि विरोध इति—वदन्ति ॥

**तत्रेदमद्वैतिनो मन्यन्ते—समानायां शाखायां निषेधयोरुप-**

संहारो न युक्तः; अन्यथा "न ब्राह्मणं हन्यात्" "न हिंस्यात् सर्वा भूतानि" नात्रेयं हन्यात्" इति निषेधेष्वपि तदापत्त्याऽऽत्रेयहनननिषेध एव सर्वेषां निषेधानां पर्यवसानं स्यात्, इति सामान्यतो गुणनिषेधपराणां वाक्यानाम्—"अपहतपाप्मा विजरो विमृत्युः" इत्यादिहेयगुणनिषेधे पर्यवसानं न क्षोदक्षमम्; अतो ज्ञानस्वरूपं ब्रह्मेत्यादिवादानां निर्विशेषवाद एव स्वारस्यम्, यस्सर्वज्ञ इत्यादिकं त्वौपाधिकं ज्ञातृत्वादिकमनुवदति। यथाच ज्ञानस्वरूपस्यैव धर्मभूतज्ञानाश्रयत्वेन सर्वज्ञत्वादिकं नोपपन्नम्, तथा पूर्वमेवोपपादितम्, इति "नेह नानास्ति किञ्चने"त्यादीनामपि गुणसामान्यनिषेध एव तात्पर्यम्। ततश्च—"तत्त्वमसी"त्यप्यैक्यमेवोपदिश्यते, न तु शरीर-शरीरिभावः। नहि सर्वेषां शब्दानां परमात्मपर्यन्तत्वमेव मुख्यम्; अन्यथा—"क्षरं प्रधानमक्षरं परम्" "यस्य पृथिवी शरीरम्" इत्यादौ पृथक् चिदचिदीश्वराणां पृथक्छब्दैराम्नानमनुपपन्नं स्यात्। आग्नेयादिस्थलेऽपि आग्नेयादिशब्दानां न समुदायवाचकत्वमिति श्रीभाष्यानुयायिनोऽपि स्वीकुर्वन्त्येव। सति चैवम्—पृथक् विविक्तस्वरूपेणोल्लेखाविशेषे कथं नियतप्रकार-प्रकारिभावोऽपि चिदचिदीश्वराणाम्? अन्यथा—समुदायरूपेणैवाग्नेयादीनामपि फलसाधनत्वाद् मुख्यं दर्शपूर्णमासत्वमेव तेषाम्, न त्वाग्नेयत्वादिकमित्यापद्येत। तथाच—"चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वादि"ति सूत्रमपि सर्वज्ञत्वाद्यौपाधिकत्वसमन्वयार्थमेव, नतु पृथिव्यादिशब्दानां पृथिव्यादिपरत्वभाक्तत्वव्यवस्थापनार्थम्। एतेन—श्रीभाष्यमते—"आत्मन आकाशः संभूतः आकाशाद्वायुः" इत्यनयोर्वाक्ययोः प्रथम आकाशशब्दो गौणः, द्वितीयो मुख्य इति वैरूप्यमप्यापद्यते। अधिकं चात्रोक्तश्रुतिनां स्वारस्यमद्वैतमत एवेत्यानन्दमयाधिकरणप्रस्तावे विशदीभविष्यति। सर्वथा तु—"तत्त्वमसी"त्यैक्योपदेशो बाधायामेव

सामानाधिकरण्यमादाय सूपपादः, यतोऽधिष्ठानचैतन्यस्वरूपसाक्षात्कारमात्रेणाज्ञानेन साकं तत्प्रयुक्तान्तःकरण-तदुपहितजीवस्वरूपाणां नाशो भवति। तदुक्तम्—

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति"—इति॥

अत्र श्रीभाष्यकाराः—यत्पुनरुक्तम्—ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति, तदयुक्तम्; बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात्, भक्तिरूपापन्नोपासनप्रीतपरमपुरुषप्रसादमात्रनिवर्त्यत्वात्, अद्वैत्यभिमतैक्यज्ञानस्य यथावस्थितवस्तुविपरीतज्ञानत्वेन भ्रमरूपत्वेन तस्य बन्धनिवर्तकत्वायोगात्, "पृथगात्मानं प्रेरितारं च मत्वा" इति जीवात्मविजातीयस्य परमात्मनो ध्यानस्यैव मोक्षसाधनत्वोपदेशाच्चेति—वदन्ति॥

अद्वैतिनस्तु—ब्रह्मात्मैकत्वविज्ञानेन बन्धनिवृत्तिरेव युक्ता; बन्धमिथ्यात्वस्य बहुशो वर्णितत्वेन तस्य ज्ञानैकमात्रनिवर्त्यत्वावश्यकत्वात्। तदुक्तम्—"तस्माद् ब्रह्मण्युत्पाद्यत्व-विकार्यत्व-प्राप्यत्व-संस्कार्यत्वानामसंभवाद् ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुप्रवेश इह नोपपद्यते" इति समन्वयसूत्रे भगवत्पादैः। अन्यथा ह्युपासनाप्रीतपरमात्मप्रसादसाध्यत्वे बन्धनिवृत्तेस्तदुपलक्षितस्य वा मोक्षस्य कृतकत्वेनानित्यत्वपापद्येत। नहि ब्रह्मात्मैक्यज्ञानं भ्रमः; यथावस्थितवस्तुविषयकत्वात्, जीवादिविजातीयतया परमात्मज्ञानस्यैव भ्रमत्वात्। तदुक्तम्—"मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः"—इति। बन्धनिवर्तकत्वं प्रति ज्ञानस्य तदधिकसत्ताकाधिष्ठानविषयकत्वम्, समानविषयकाज्ञानविषयकत्वं वा लाघवात् तन्त्रम्, न त्वभ्रमत्वम्; अन्यथा शुक्तिज्ञानस्यापि वस्तुगत्या भ्रमरूपत्वेन रजतानिवर्तकत्वापत्तेः, प्रकृते च ब्रह्मज्ञानस्य तादृशत्वाद् बन्धनिवर्तकत्वमनपोहमेव। एतेन—"पृथगात्मानमि" ति श्रुतिरपि—व्याख्याता; अविद्याऽन्तःकरणादिविविक्तस्वरूप-

चैतन्यज्ञानस्यैव "पृथगात्मानं प्रेरितारं च मत्वे"त्यनेन विवक्षणात्, पृथक्तया परमात्मग्रहणस्य मोक्षसाधनतायामतात्पर्यात्। संमतं चैतत् श्रीभाष्यकाराणामपि—ये चिदचिद्विशिष्टपरमात्मज्ञानमेव मोक्षसाधनं मन्यन्ते। अत्र—"आत्मानं प्रेरितारं च पृथग् मत्वा" इत्युभयोः पृथग् ज्ञानं मोक्षसाधनतया यद्विवक्ष्यते, तदिदं जीवात्मपरमात्मभेदज्ञानमोक्षसाधनताभिप्रायेण वा स्यात्, अथवा उभयोरपि गृह्यमाणरूपातिरेकेण केवलचैतन्यमात्रज्ञानमोक्षसाधनताभिप्रायेण वा, नतु चिदचिच्छरीरकपरमात्मज्ञानमोक्षसाधनताभिप्रायेण। तत्र प्रथमः कल्पोऽद्वैतिनामिव श्रीभाष्यानुयायिनामपि विरुद्ध एव, इत्यगत्या द्वितीयकल्प एव पर्यवसानं भवतीति, तत्त्वमस्यादिवाक्यजन्याखण्डाकारवृत्तिरेवाज्ञानादिबन्धनिवर्तिकेत्यवश्यमेव स्वीकर्तव्यम्। अखण्डाकारवृत्तिस्तु दग्धेन्धनाग्निवत् स्वयमेवोपशाम्यति, इति न तन्निवर्तनार्थमधिष्ठानज्ञानान्तरमपेक्ष्यते, अन्यथा रजतादिनिवर्तकशुक्तिज्ञाननिवर्तनार्थं शुक्तिज्ञानान्तराद्यपेक्षापत्तेः, सविषयज्ञानबाधो ह्यधिष्ठानज्ञानमपेक्षते, नतु वृत्तिमात्रनाशः, शशशृङ्गादिज्ञानमपि विकल्पाख्यमनेन व्याख्यातम्॥

नाशो द्विविधः—निवृत्तिर्बाधश्च। तत्र निवृत्तिः कार्यमात्रनाशः, बाधस्तु सकारणकार्यनाशः। तथाच ज्ञाननाश्याज्ञानत्व-तत्प्रयुक्तान्यतरत्वं बाधः; ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति यावत्। तत्र केषांचन ज्ञानकाले, केषांचनाज्ञाननिवृत्त्यनन्तरभावित्वाद् अज्ञाननिवृत्त्यनन्तरमपि। तथाचाखण्डाकारसाक्षात्कारदशायामज्ञानमात्रनिवृत्तावपि तत्तृतीयक्षणेऽज्ञानप्रयुक्तानामखण्डाकारवृत्त्यादीनामपि नाशोऽपि ज्ञाननिवर्त्यत्वमविशिष्टमेव, स्वोपादानान्तःकरणादिसत्त्वेऽन्तःकरणविशेषगुणानां स्वोत्तरगुणनाश्यत्वं नियतम्, अन्तःकरणनाशे तु तत्परिणामवृत्तेरनाश्रयत्वात् स्वयं विनाशेऽपि न कोऽपि विरोधः। एतेन—अखण्डाकारवृत्तेर्भ्रम-

रूपत्वमपि—परास्तम्; अर्थबाधं विना ज्ञानभ्रमत्वस्य कुत्राप्यदर्शनात्, चैतन्यमात्रमिथ्यात्वस्यासाधनाच्चेति—मन्यन्ते ॥

एतेन—निवर्तकज्ञानस्वरूप-तदुत्पत्ति-तन्नाशानां कालपनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम्। तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्, तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात्, तद्विनाशे तिष्ठति तदुत्पत्त्यसम्भवादिति—परास्तम् ॥

घटस्वरूप-तदुत्पत्त्योर्मृदपेक्षयामपि घटनाशस्योपादानान्तरापेक्षा हि न दृश्यते; घटनाशस्य मृद्रूपत्वादिति सत्कार्यवादिनां सर्वेषां सम्मतमिदम्: सति चैवम्—अज्ञाननिवर्तकब्रह्मज्ञानस्याविद्यकत्वेऽपि तन्नाशस्य निवृत्ताज्ञानरूपत्वस्यैवोचितत्वाद् नाविद्यान्तरमपेक्ष्यते। तथाचाखण्डाकारवृत्तिनाशस्य स्वरूपमविद्यास्वरूपमेव वक्तव्यम्। तच्च यदा नष्टं ब्रह्मज्ञानेन, तदा कथं तन्नाशार्थं निवर्तकान्तरमपेक्ष्येत। इदमेवाभिप्रेत्योक्तम्—ब्रह्मज्ञानमेव स्वस्येव स्वनाशस्यापि निवर्तकमिति। नहि वृत्तिनाशोऽपि ब्रह्मस्वरूपमिति वयं वदामः, येन "तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यादि"ति प्रत्यवस्थानं सावसरं स्यात् ॥

यत्तु श्रीभाष्यकाराः—चिन्मात्रब्रह्मव्यतिरिक्तसकलप्रपञ्चनिषेधविषयज्ञानस्य कोऽयं ज्ञाता? अध्यासरूप इति चेत्, न; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः, ब्रह्मस्वरूपमिति चेत्, ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम्? उताध्यस्तम्? अध्यस्तं चेत्, अयमध्यासस्तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव। निवर्तकज्ञानान्तराभ्युपगमे तस्यापि ज्ञात्रपेक्षयाऽनवस्था स्यात्, ब्रह्मस्वरूपस्यैव ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात्, ज्ञानस्वरूपस्यैव स्वाभाविकं ज्ञातृत्वमपीति भवतामपि सिद्धान्तात्। अपि च निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनमुपहास्यमेव। किञ्चाध्यस्तो ज्ञाता स्वनाशहेतुनिवर्तकज्ञाने स्वयं कर्ता च न भवति; स्वनाशस्यापुरुषार्थत्वादिति--वर्णयन्ति ॥

तत्रेदं विचारणीयम्—यद् श्रीभाष्यमते बन्धनिवर्तकं ब्रह्मज्ञानं बद्धाश्रितम्, उत ब्रह्माश्रितम्, आद्ये निवर्तकज्ञानकर्मणो बद्धस्य तत्कर्तृत्वानुपपत्तिः, अथ यदि तत्र बद्धो न निवर्तते, किन्तु तद्विशेषणबन्धमात्रमिति स्वरूपानाशाद् न दोषः, तर्हि प्रकृतेऽपि जीवविशेषणान्तःकरणाद्यध्यासमात्रनिवृत्तिः, नतु स्वरूपनिवृत्तिः, अध्यस्तस्य जीवस्य निवर्तकज्ञानाश्रयत्वेऽपि चैतन्यस्वरूपानाशात् न विरोधः। अथ तत्र बन्धाधिकरणस्य ज्ञानाश्रयत्वम्, तर्हि प्रकृतेऽपि समानम्; अध्यासाधारस्यैव निवर्तकज्ञानाश्रयत्वात्। वस्तुतस्तु—निवर्तकाश्रयस्य निवर्त्यत्वं बहुषु स्थलेषु दृष्टम्; इन्धनाधारस्याग्नेरिन्धननाशकत्वदर्शनात्। अतो निवर्त्यस्यैव निवर्तकाश्रयत्वं न दुष्टम्। तथाच जीवः, न निवर्तकज्ञानाश्रयः, निवर्तकज्ञानकर्मत्वात्, इत्यनुमानस्येन्धनादौ व्यभिचारः। एतेन—निवर्तकज्ञानस्य ज्ञाता स्वनिवर्त्यान्तर्गत इति वचनमुपहास्यमिति प्रत्युक्तम्; इन्धनस्याग्न्याश्रयस्यैवाग्निनिवर्त्यत्वदर्शनात्। समानाश्रय-विषयकत्वेन हि ज्ञानाज्ञानयोर्निवर्त्य-निवर्तकभावः, इति भावरूपस्याज्ञानस्यापि जीवाश्रितत्वपक्षे स्वोपहितान्यानाश्रयत्वे सति स्वोपहिताश्रयत्वरूपं समानाश्रयत्वं ज्ञानाज्ञानयोरुभयोरपि जीवाश्रयत्वमादायैव समर्थनीयम्, इति भामतीमतानुसारिणी व्यवस्था॥

विवरणमतमप्यनेन व्याख्यातम्; तन्मतरीत्या चैतन्यांशमात्रब्रह्मस्वरूपस्यैवाज्ञानाश्रयस्य ज्ञानाश्रयत्वं स्वीक्रियते। तच्च कल्पितमित्यन्यदेतत्। "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते" इत्युक्तेः। ज्ञानाश्रयत्वाध्यासनिबन्धनमज्ञानं मूलाज्ञानमेव, न त्वज्ञानान्तरम्। तच्च तत्त्वज्ञाने सति नश्यत्येवेति ज्ञानोपहितमेव ज्ञानाश्रय इति मन्यते; यावदखण्डाकारवृत्ति संस्कारात्मना मूलाज्ञानस्वीकारात्, तस्य च वृत्तिनाशे स्वयमेवोपरतेश्च नाश्रयत्वानुपपत्तिः॥

एतेन—ब्रह्मस्वरूपस्यैव ज्ञातृत्वेऽस्मत्पक्ष एव परिगृहीतः स्यादिति—प्रत्युक्तम्; नहि श्रीभाष्यकारा ज्ञानोपहितस्य तदुपलक्षितस्यैव वा ज्ञातृत्वम्, शुद्धस्य तु ब्रह्मणो न ज्ञातृत्वमित्यद्वैतसिद्धान्तमेव स्वसिद्धान्तं मन्यन्ते, येन तदीय एव पक्षोऽद्वैतिनामपि पक्षः स्यात्। तदयं निष्कर्षः—यद् ज्ञानस्वरूपस्यैव सदा ज्ञातृत्वमिति हि श्रीभाष्यमतम्, नतु ज्ञानोपहितं ज्ञातृ, केवलं ज्ञानस्वरूपं तु न ज्ञातृ, इत्यद्वैतमतमपि तेषां मतम्। तथाचाध्यस्तो ज्ञातैव स्वीयाध्यासनिवर्तनार्थं तत्त्वज्ञानार्थं यतते, बद्धादिषु स्वीयबन्धनिवर्तनार्थं स्वयं प्रवृत्तिदर्शनात्, इति कथमपि न तत्त्वज्ञानेनाविद्यादिबन्धनिवृत्त्यनुपपत्तिः, इति भावरूपेऽज्ञाने न स्वरूपानुपपत्तिः, न प्रमाणानुपपत्तिः, नाश्रयानुपपत्तिः, न विषयानुपपत्तिः, नानिर्वचनीयत्वानुपपत्तिः, न निवर्तकानुपपत्तिः, न वा निवृत्त्यनुपपत्तिः, इति भावाभावविलक्षणानिर्वचनीयाज्ञानकल्पितत्वाद् विशेषाणाम्, पारमार्थिकं प्रामाण्यं ब्रह्मस्वरूपांश एव, नान्यत्र, इति सर्वाणि वेदान्तवाक्यानि निर्गुणस्वरूप एव पर्यवस्यन्ति; तत्रैवोपक्रमोपसंहाराभ्यासापूर्वतादितात्पर्यग्राहकप्रमाणसत्त्वात्, इति तद्विषयावगतिपर्यन्तवस्तुतन्त्रज्ञानेनैव ब्रह्मविषयेण निर्विकल्पकब्रह्मभावाख्यस्यैव मोक्षस्य सिद्धिरित्यद्वैतसिद्धन्त एव "सर्वे वेदा यत्पदमामनन्ती"त्यादिवाक्यानां स्वारस्यम्, न श्रीभाष्यमते। तच्च ब्रह्म—"अथातो ब्रह्मजिज्ञासा" इति प्रस्तुतं स्वात्मस्वरूपमेवेति ब्रह्मजिज्ञासा, आत्मजिज्ञासेति चानर्थान्तरम्। तच्चात्मस्वरूपं नाहंपदार्थः, इत्यहमर्थातिरिक्तस्यात्मस्वरूपस्य वेदान्तविचारमात्रनिर्णेयत्वाद् वेदान्तविचारः कर्तव्य इति प्रतिज्ञापरमेव—"अथातो ब्रह्मजिज्ञासे"ति सूत्रम्। तत्र च पूर्वोक्तप्रकारेण—कर्मविचारस्यानुपयोगाद् धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्यानुपनीतस्यापि सिद्धान्तसिद्धाञ्जनाद्युक्तरीत्या, स्वयंप्रतिभातवेदान्तस्य देवादेर्वा देवताधिकरणन्यायेन ब्रह्मजिज्ञासोपपत्तेश्च—

**अथात इति सूत्रेऽथशब्देन कर्मविचारानन्तर्यं न विवक्ष्यते, किन्तु—श्रोतव्यादिविचारप्रकरणाम्नात-गुणोपसंहारन्यायावगत-साधनचतुष्टयसंपत्त्यानन्तर्यमेव, इति युक्तं भाषितं भगवत्पादैः—"तस्माद् यथोक्तसाधनचतुष्टयसंपत्त्यनन्तरं साधनचतुष्टयसंपत्तेः संभवाद् ब्रह्मविचारः=आत्मविचारः कर्तव्य इति जिज्ञासासूत्रार्थः—इति ॥**

श्रीभाष्योक्तरीत्या तु—तस्मादनादिकर्मप्रवाहरूपाज्ञानत्वाद् बन्धस्य तन्निबर्हणमुक्तलक्षणज्ञानादेवोपासनारूपात् । तदुत्पत्तिश्चाहरहरनुष्ठीयमानपरपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्म-लभ्या । तत्र केवलकर्मणामल्पास्थिरफलत्वम्, अनभिहितफल-परमपुरुषाराधनवेषाणां कर्मणामुपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं कर्मस्वरूपज्ञानादृते न ज्ञायते, ? केवलाकारपरित्यागपूर्वकयथोक्तकर्मोपादानं च न सम्भवति, इति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इति—"अथातः"इत्युक्तमिति—विवरणं चिन्त्योपपत्तिकमेव ॥

इदमत्र श्रीभाष्याभिमतमधिकरणशरीरम् । ब्रह्ममीमांसा किमारम्भणीया ? उत न ? तदर्थं परीक्ष्यते—किं वेदान्तः ब्रह्मणि प्रमाणमुत न ? तदर्थं चिन्त्यते....शब्दस्य सिद्धवस्तुबोधनसामर्थ्यावधारणं संभवति, न वेति । तदर्थं विचार्यते....किं वृद्धव्यवहारादन्यत्र शब्दार्थावधारणं संभवति, उत न ? वृद्धव्यवहारेऽपि शब्दस्य सिद्धवस्तुबोधकत्वावधारणं संभवति ? नेति च । तत्र पूर्वपक्षः—न संभवतीति, सिद्धान्तस्तु संभवतीति ॥

यदा व्यवहारादन्यत्र न व्युत्पत्तिः, व्यवहारेण च शब्दस्य सिद्धवस्तुबोधकत्वावधारणं न भवति, तदा शब्दस्य सिद्धवस्तुबोधनसामर्थ्याभावाद् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामाण्याभावनिश्चये सत्यनन्तस्थिरफलापातप्रतीतेरसंभवाद् अनन्तस्थिरफलापातप्रतीतिविशिष्टकर्मफलास्थिरत्वप्रतीतिरूपविशिष्टहेत्वसिद्ध्याऽनारम्भणीया ब्रह्ममीमांसेति पूर्वपक्षफलम् । सिद्धान्तफलं तु यदा वृद्धव्यवहारादन्यत्र व्युत्पत्तिर्व्यवहारेण सिद्धवस्तुपरत्वावधारणं च भवति, तदा शब्दस्य सिद्धरूपार्थे सामर्थ्याद् वेदान्तानामपि ब्रह्मणि परिनिष्पन्नरूपे प्रामा-

ण्याद् अनन्तस्थिरफलापातप्रतीत्या विशिष्टहेतुसिद्धौ ब्रह्ममीमांसाऽऽर-म्भणीयेति ॥

अत्रापूर्व एव कार्ये पदानां शक्तिग्रह इति प्राभाकरमतेन पूर्वपक्षः, क्रियाशेषतया ब्रह्मबोधकत्वेन, सिद्धब्रह्मबोधकत्वेन वा वेदान्तप्रामाण्यसंभव इति सिद्धान्तः—इति ॥

नात्राद्वैतिनोऽपि विप्रतिपद्यन्ते—यत् सिद्धेऽपि वस्तुनि वेदान्तानां प्रामाण्यसंभव इति। इदमेव तु विप्रतिपन्नम्—यत् प्रतिपत्तिविधिविषयतया शास्त्रेण ब्रह्म "ज्ञानमेकं मुक्त्वा क्रियाया गन्धमात्रस्याप्यनुपवेश इह नोपपद्यते" इति भगवत्पादोक्तरीत्या न समर्पयितुं शक्यत इति। सति चैवम्—सिद्धेऽपि पदानां संगतिग्रहमात्रव्युत्पादनेन मीमांसकमतनिरसनमात्रेण सिद्धान्तविवक्षायां नाद्वैतिनोऽपि विवदन्ते, सिद्धब्रह्ममात्रबोधकत्वेन वेदान्तविचारसार्थक्यस्य तन्मतेऽपि संभवात्। इदमेवात्रालोचनीयम्—यत् सिद्धेऽपि वस्तुनि वेदान्तानां प्रायाण्याविशेषे कुतः क्रियाशेषतयैव तत्प्रामाण्यं स्वीक्रियत इति। यदि पारमार्थिकत्वात् प्रपञ्चस्य केवलब्रह्मज्ञानमात्रेण न पुरुषार्थसिद्धिः सम्भवतीति प्रतिपत्तिविषयतया शास्त्रेण ब्रह्म समर्पणीयमिति, तर्हि नेदं संगतं भवति; प्रपञ्चमिथ्यात्वस्य ब्रह्मज्ञानस्याविद्यानिवर्तकत्वादेश्च विशदीकृतत्वात्। श्रीभाष्यमतरीत्योक्ताधिकरणशरीरघटनायां प्रपञ्चमिथ्यात्वसंभवासंभवावेव प्रधानतयाऽवष्टम्भौ। अत एवाध्यासभाष्येणोपोद्घातसङ्गत्या प्रपञ्चज्ञानभ्रमत्वसमर्थनं भगवत्पादानाम्, तत्प्रमात्वव्यवस्थापनं च श्रीभाष्यकाराणाम्। व्यक्तीकृतश्चायं निगूढो भावः श्रुतप्रकाशिकायां महापूर्वपक्षोपक्रमवाक्यगतस्य—"तत्र" इति पदस्य विवरणावसरे—"पूर्वं मृषावाद्युक्तं सूत्रतात्पर्यं व्युदस्तम्, तद्वयावृत्तिं सूचयति—तत्रेति ॥ तत्र प्रपञ्चसत्यत्वे स्थिते सतीत्यर्थः" इति विवरणेन। अयमेव यदि श्रीभाष्याशयः, तर्हि कार्ये व्युत्पत्तिसमर्थनस्य प्रपञ्च-

सत्यत्वावधारणस्य च कार्य-कारणभावाभावाद् नोक्तं विवरणं साधु भवतीति मत्वाऽन्ये भाष्यानुयायिनो भावप्रकाशिकाकारादयो ब्रह्मविचारकर्तव्यत्वसंशये सतीति 'तत्र' इति पदं विवृण्वते ॥

सर्वथा तु—शास्त्रप्रामाण्यं ब्रह्मणः सिद्धवत्कृत्यैवेदमधिकरणं प्रवृत्तमित्यकामेनापि स्वीकर्तव्यम्; अन्यथा "शास्त्रयोनित्वात्" इति सूत्रवैयर्थ्यापत्तेः, इति सिद्धे सङ्गतिग्रहसंभवासंभवविचारस्य नेदमधिकरणं स्थानं भवितुमर्हति; किन्तु "शास्त्रयोनित्वादि"ति सूत्रम् , तदनन्तरमधिकरणान्तरपूर्वपक्षो वाऽऽक्षेपसंगत्या तस्य स्थानं भवितुमर्हति। वस्तुतस्तु श्रीभाष्यसिद्धान्ते ब्रह्मणोऽपि क्रियाशेषतयैव शास्त्रयोनित्वस्य स्वीकारात् केवले सिद्धे ब्रह्मणि वेदान्तानां प्रामाण्यस्यास्वीकाराद् वितथोऽयं पूर्वपक्षः, सिद्धान्तो वेत्यधिकरणमिदं निष्प्रयोजनमेव भवति। सूचितश्चायमर्थो वृत्तिकारमतनिरसनावसरे भगवत्पादैरपि—प्रतिपत्तिविधिपरत्वे हि—"अथातो धर्मजिज्ञासे" त्येवारब्धत्वाद् न पृथक्शास्त्रमारभ्येत—"अथातो ब्रह्मजिज्ञासे"ति। आरभ्यमाणं चैवमारभ्येत—'अथातः परिशिष्टधर्मजिज्ञासे'ति—"अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासेतिवत्। ब्रह्मात्मावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः—"अथातो ब्रह्मजिज्ञासा" इति भाषणेन ॥

सति चैवम्—"आत्मा वा अरे द्रष्टव्यः" इति वाक्यगतात्मस्वरूपमहमर्थाद्विलक्षणम् , नाहमर्थ एवात्मेति निर्धारणद्वाराऽहमर्थात्मत्वसंशयनिरासेनात्मविचारव्यवस्थापनार्थमिदमधिकरणमित्यद्वैतिनां विवरणमेवात्र समुचितम् ॥

अत्रेदमद्वैतिनामधिकरणशरीरम्—"आत्मा वा अरे द्रष्टव्यः" इत्यात्मसाक्षात्कारार्थं वेदान्तविचारः कर्तव्य इति प्रतिपाद्यते। अत्रात्मनोऽहमर्थात्मत्वानात्मत्वाभ्यां संशयः। अहमर्थस्यैवात्मत्वात्, तस्य चासन्दिग्धत्वात्, अप्रयोजनत्वाच्च विचारो न कर्तव्य इति

पूर्वपक्षः । शरीरेन्द्रियान्तःकरणादिषु सर्वत्राहंप्रतीत्याऽहमर्थो नात्मा, किन्तु तदतिरिक्तः कश्चनापर एवात्मा, यस्य तादात्म्याध्यासेन शरीरेन्द्रियादिकमप्यात्मतया प्रतीयते । स च वेदान्तैकसमधिगम्यः; "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः, इति तन्निर्णयार्थं वेदान्तविचारः कर्तव्य इति सिद्धान्तः । अयं च सिद्धान्तोऽन्तःकरणादीनामात्मन्यध्याससमर्थनमप्युपोद्धातविधयाऽपेक्षते, इति कृत्वैवाध्यासभाष्यमपि भगवत्पादानाम् । अत्रात्मनि तैत्तरीयादौ ब्रह्मशब्दप्रयोगात् अनुभवसिद्धं परिच्छिन्नं रूपं न स्वाभाविकम्, किन्त्वौपाधिकमिति सूचनेन—"उत्क्रान्ति-गत्यागतीनामि"त्यधिकरणसिद्धान्तः तद्गुणसारत्वमेवाहमर्थतानियामकम्, पारमार्थिकं तु ब्रह्मस्वरूपमेवात्मस्वरूपमिति सूचनेन चाहमर्थानात्मतापक्षो ब्रह्मशब्दमहिम्ना सूच्यते, प्रत्यक्षेण त्वहमर्थस्यैवात्मत्वमवगम्यते, इति प्रत्यक्षागमप्राबल्य-दौर्बल्याभ्यामपि संशयावसरः । अनेन च सूत्रकाराणां बहुगभीरार्थसूचनेन स्वकर्तव्यकरणमपि साधु समर्थितं भवति ॥

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥"

इति हि सूत्रलक्षणं लक्षयन्ति लक्षणज्ञाः । श्रीभाष्यमते तु निस्सारतैवोक्तस्य सूत्रस्य समापतति; पूर्वोक्तविधया तद्वैयर्थ्यात् । अन्यथा ह्यनेनैव सूत्रेण शास्त्रयोनित्वं सत्यत्वं च ब्रह्मणो व्यवस्थाप्यते, इति "शास्त्रयोनित्वात्" "तत्तु समन्वयात्" इति सूत्रद्वयमपि वितथमापद्येत । यथा दध्यादिफलसाधनत्वं शास्त्रैकगम्यम्, एवं ब्रह्मोपासनफलसाधनत्वमपि हि शास्त्रैकगम्यमेव । सत्यकामत्वादिगुणकपरमात्मस्वरूपस्याभिन्ननिमित्तोपादानस्य साधकमनुमानं न केऽपि दार्शनिकाः प्रयुञ्जत इत्यनुमानप्रमाणनिरासार्थं न शास्त्र-

योनित्वाधिकरणम्। आनुमानिकत्वे हि ब्रह्मणः—"अथातो ब्रह्मजिज्ञासे"त्यनेन कथं मीमांसकमतनिरसनार्थं प्रयत्न उपपद्यते। नहि मीमांसकाः प्राभाकरा भाट्टा वा आनुमानिकमीश्वरमङ्गीकुर्वन्ति। अपि च आनुमानिके ब्रह्मणि सिद्धे सङ्गतिग्रहसाधनस्य कोऽयमवसरो नाम? इति वैदिकत्वमेव ब्रह्मणीति कृत्वैव खलु—"अथातो ब्रह्मजिज्ञासा" इति सूत्रमिति वक्तव्यम्। एतेन—"जन्माद्यस्य यतः" इतिसूत्रमपि—व्याख्यातम्। श्रीभाष्यमते हि कारणतामात्रं ब्रह्मणो न मुख्यम्; सत्यकामत्वादितो वैशिष्ट्ये कारणाभावात्, कारणत्वेनैव ब्रह्मणो लक्षणे प्रयोजनं हि तद्व्यतिरेकेणेतराभावव्युत्पादनेन चैतन्यमात्रमेव ब्रह्मेति निर्धारणाद् अद्वैतमतं विहायान्यत्र कुत्रापि वक्तुं न शक्यते' इति जिज्ञास्यब्रह्मणो जगद्रूपेण परिणममानाविद्याविषयत्वेनाधिष्ठानविधया ब्रह्मलक्षणात् प्रथमसूत्रोपक्षिप्तं ब्रह्मैव द्वितीयसूत्रेणोपक्षिप्यत इति सुष्ठु भगवत्पादमत एव लगति, न मतान्तरे, इति चतुःसूत्रीसार्थक्यार्थमप्यद्वैतमतमेव सौत्रम्, न केवलं सौत्रम्, किन्तु श्रुति-स्मृति-पुराणेतिहासादिसिद्धमपीति स्वीकर्तव्यम्, इति श्रीभाष्यकाराणां स्वीयमहासिद्धान्तेनाद्वैतसिद्धान्तस्याक्रमणं निरालम्बमेवावतिष्ठते, न मात्रयाऽप्यद्वैतमतनिरासे तदीश्वरमिति प्रतिभाति। यतोऽद्वैतमतमेव बादरायणमतमिति न केवलमात्मबहुत्वादिनिरसनेन, किन्तु सांख्य-योग-पातञ्जल-पाञ्चरात्राणां वैदिकस्य च—

"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥" इति प्रस्तुतानां दर्शनानां मध्ये ब्रह्ममीमांसायाम् सांख्य-योग-पाशुपत-पाञ्चरात्राणां द्वितीयाध्यायद्वितीयपादद्वारा निरसनेन सांख्याद्यमूलस्य वैदिकस्याद्वैतदर्शनस्यावशेषि

तत्त्वेनापि विज्ञायते। अधिकं चात्रालोचनीयमस्मदीयेऽद्वैतमार्तण्ड आलोचितम्। अत्रापि यथाऽवसरं सति संभव आलोचयिष्यते, इति जिज्ञासाधिकरणशरीरमद्वैतिनामेव सुरक्षितं वर्तते, नतु विशिष्टाद्वैतिनाम्। तन्मते हि कार्याद्विविक्तं स्वरूपं ब्रह्ममात्रं यदि ब्रह्मजिज्ञासेत्यत्र ब्रह्मपदार्थः, तर्हि न प्रकारिणो ब्रह्मणो जिज्ञासा प्रतिज्ञाता स्यात्, प्रकारिणो ब्रह्मणो ग्रहणे तु—"यतो वा इमानि भूतानि जायन्ते" इत्यत्र जगतो ब्रह्मणश्च पृथक्कृत्य विवेकेनोपदेशो नोपपद्यते। ब्रह्मपदापेक्षया जीवपदस्य सूक्ष्माचित्पदस्य चिदचित्पदद्वयस्यैव वा सूत्रे निर्देशो हि तन्मते स्वरसः स्यात्, यतः शरीरवाचकानां पदानां शरीरिपर्यन्तत्वस्यैव मुख्यत्वेन चिदचिच्छरीरकपरमात्मा विना क्लिष्टकल्पनां गृह्येत, इति ब्रह्मपदं सूत्रे प्रयुक्तं प्रकारांशपरित्यागेन प्रकारिमात्रैक्यमेव गोचरयतीति वक्तव्यम्। सति चैवम्—सूत्रकारा अपि न प्रकारविशिष्टप्रकारिजिज्ञासां मन्यन्ते, किन्तु प्रकारोपलक्षितप्रकारिमात्रजिज्ञासामेव। तथाचोभयसम्मतमिदम्—यत् प्रकारिजिज्ञासैव ब्रह्मजिज्ञासेति। प्रकारिपदेन प्रकारविशिष्टं विवक्ष्यते, उत प्रकारोपलक्षितिमिति तु विप्रतिपन्नम्। प्रथमे कल्पे श्रीभाष्यमतम्। द्वितीये भगवत्पादमतम्। द्वितीयोपलक्षितत्वं नाम द्वितीयसमानाधिकरणद्वितीयाभावकत्वमेव, काकवद् देवदत्तगृहमित्यादौ काकस्यान्यत्राश्रयणात् काकामिथ्यात्वम्, अत्र तु द्वितीयसामान्यस्य ब्रह्मणोऽन्यत्राप्रसङ्गाद् द्वितीयमिथ्यात्वम्। तदयं निष्कर्षः—कालभेदेनेव कालैक्येनापि प्रतियोगितदभावाभ्यामयि तदुपलक्षितत्वं व्यवह्रियते। तत्र काकवद् देवदत्तगृहमित्यादावुपलक्ष्यतावच्छेदकोपस्थापनेनोपलक्षणत्वम्, अत्र सर्वसामान्यविशेषनिषेधाद् भूतपूर्वगत्या द्वितीयस्यैवोपलक्षणत्वम्।

एतादृशं विषयमभिप्रेत्यैव भूतपूर्वगतिन्यायः; अन्यथोपलक्ष्यतावच्छेदकान्तरोपस्थापनेनैवोपलक्षणत्व उपलक्ष्यतावच्छेदकं

विशेषणमेव सर्वत्र व्यावर्तकम्, इत्युपलक्षणव्यावर्तकत्वकथैव निरालम्बा स्यात्। तथाचोपलक्षणविवक्षास्थलेषु सोपलक्षणविशेष्यपदेन यत् कार्यम्, तदेव केवलेनोपलक्षितेनापि भवतीति, ब्रह्मपदमद्वितीयब्रह्मोपस्थापकमित्येव युक्तम्, इति ब्रह्मजिज्ञासापदस्वारस्यमद्वैतमत एव ॥



# जन्माद्यस्य यतः

"जन्माद्यस्य यतः" इति सूत्रं श्रीभाष्यकारैरेवं विवृतम्—जन्मादीति सृष्टि-स्थिति-प्रलयम्। तद्गुणसंविज्ञानो बहुव्रीहिः। अस्य=अचिन्त्यविविधविचित्ररचनस्य नियतदेश-काल-फल-भोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः; यतः=यस्मात् सर्वज्ञात् सर्वेश्वरात् निखिलहेयप्रत्यनीकस्वरूपात् सत्यसंकल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात् सर्वशक्तेः परमकारुणिकात् परस्मात् पुंसः, सृष्टि-स्थिति-लयाः प्रवर्तन्ते, तद् ब्रह्मेति सूत्रार्थ इति। अयमेव भगवत्पादाभिमतोऽपि सूत्रार्थः—यतस्तेऽपि अस्य=जगतः नमरूपाभ्यां व्याकृतस्यानेककर्तृ-भोक्तृयुक्तस्य मनसाप्यचिन्त्यरचनारूपस्य प्रतिनियत-देश-काल-निमित्त-क्रिया-फलाश्रयस्य, यतः=सर्वज्ञात् सर्वशक्तेः कारणाद् जन्म-स्थिति-भङ्गं भवति, तद् ब्रह्मेति वाक्यशेष इति व्याचक्षते॥

सत्स्वपि बहुषु सगुणवाक्येषु जन्मादिवाक्यमात्रसंग्रहणे निमित्तं तु स्वरूपस्येव विभूतेरप्युपास्यान्तर्भावज्ञापनमेव; अन्यथा बहिरङ्गायास्तस्या नोपास्यत्वमिति शङ्क्येत,अतो नित्यविभूत्या सर्गादिविषयभूतया स्वरूपलक्षणम्। 'यत् प्रयन्ती'ति वाक्ये हि प्रयन्तिशब्देनात्यन्तिकप्रलयरूपमोक्षोऽपि विवक्ष्यते, इति यच्छब्देन मुक्तप्राप्यतयापि ब्रह्म निर्दिष्टम्, प्राप्याकारविशिष्टं च ब्रह्म प्रमाणान्तरसिद्धमिहानूद्यते। प्रमाणान्तराणि तु विभूतिद्वयविशिष्टं ब्रह्म प्राप्यं वदन्ति, इति नित्यविभूतेरप्युपास्यतासिद्धिः। यत इति यच्छब्देन प्रापकवाक्यापेक्षणात् प्रापकवाक्यान्तरसिद्धं सर्वं विशेषणमत्र विवक्षणीयमेव; अन्यथा—"यतो वा इमानि भूतानि जायन्ते" इति जन्ममात्रोपादानेन 'यतः' इत्युपादानमात्रस्योपस्थापकं स्यात्, इत्यभिन्ननिमित्तोपादानत्वं ब्रह्मणो हीयेत। तथाच—"तदैक्षत बहु स्यामि"ति तदुभयविवक्षापरवाक्यान्तरानुसारिण्येवात्र यतःशब्दार्थव्यवस्थेति स्वीकर्तव्यम्, इति सर्वेश्वर एव जन्मादिवाक्यार्थः॥

अत्र यद्यपि सर्वेश्वरस्य स्वतोऽपरिणामित्वाद् अविवर्तमानत्वाच्च निमित्तत्वमात्रमेव मुख्यम्, नोपादानत्वमपि, तथापि चिदचिद्विशिष्टतया तस्यैव सत्यसङ्कल्पस्य—'बहु स्यामि" तीक्षणवत्त्वेन सर्वविधकारणत्वमुपपन्नम्। मतान्तरे तु—सन्मात्रस्य चिन्मात्रस्य च सत्यसङ्कल्पत्वाद्ययोगात्, ईश्वरस्य च ब्रह्मांशतयाऽध्यस्ततया चाभिमतस्याध्यस्तान्तर-

सामानाधिकरण्यायोगात् "बहु स्यामि"त्यादि न घटते, इति चिदचिद्विशिष्टब्रह्मकारणतावाद एव श्रुति-सूत्रयोस्तात्पर्यमूरीकर्तव्यम् । सत्य-ज्ञानादिकं तु विशेष्यांशस्यैव लक्षणम्, इति तल्लक्षणपरित्यागेन जन्मादिकारणत्वलक्षणान्यथानुपपत्तिरपि सूत्रकाराणां चिदचिद्विशिष्टब्रह्मोपास्यतावाद एव तात्पर्यं गमयति । "अधोहि भगवो ब्रह्मे"ति ब्रह्मविषयकप्रश्नानन्तरं प्रवृत्तत्वात्—"यतो वे"ति वाक्यं ब्रह्मपरमिति विज्ञायते । तथाच निरतिशयबृहत्त्वाश्रयव्यक्तिविशेषप्रश्ने व्यक्तिविशेषस्य लक्षणमुच्यते—"यतो वा इमानि भूतानि जायन्ते" इत्यादि । अत्र कारणत्वमनूद्य ब्रह्मत्वविधानात् कारणत्वं प्रापकवाक्यसापेक्षं परमपुरुषस्यैव नारायणस्येति स एव ब्रह्मेति वाक्यार्थः—इति ॥

**अद्वैतिनोऽपि नात्र विवदन्ते—यद् विशिष्टस्यैव कारणत्वम्, विशेष्यमात्रस्यैव सत्यज्ञानादिपदवाच्यत्वं चेति । इदमेव तु विप्रतिपन्नम्—यत्—"ब्रह्मविदाप्नोति परमि" ति वेद्यतया प्रस्तुतं विशिष्टमेव न विशेष्यमात्रमिति । अयमत्र निष्कर्षः—"ब्रह्मविदाप्नोति परम्" इत्यनन्तरं "सत्यं ज्ञानमनन्तं ब्रह्मे" ति विशेष्यमात्रलक्षणस्याम्नानाद् वेद्यतयाऽत्र विवक्षितं विशेष्यमात्रमेव । विशेष्यमात्रं च स्वसंवेद्यं शृङ्गग्राहिकया प्रदर्शयितुम्—कारणत्वादिना विशिष्टमुखेनोपदिश्यते । अत एव—"यतो वा इमानि भूतानि जायन्ते" इति वाक्येनापि केवलेन न ब्रह्मस्वरूपावगतिः; "तपसा ब्रह्म विजिज्ञासस्वे" ति पुनःपुनस्तपस्योपदेशात् ॥**

**एतेन—प्रापकवाक्यापेक्षयैव "यतो वा इमानि भूतानि जायन्ते" इति वाक्यं प्रवृत्तमिति—परास्तम्; तथा सति—"अन्नं ब्रह्मेति व्यजानादि" त्यादिनाऽन्नादिरूपेण ब्रह्मानुसन्धानाम्नानस्यासाङ्गत्यापत्तेः । तत्र हि प्रापकवाक्यान्तरापेक्षया—यच्छब्दघटितं वाक्यं प्रवर्तते, यत्र स्वप्रकरण एव प्राधान्येन स्वनिर्देश्यस्य नोपस्थितिः, प्रमाणान्तरयोग्यत्वं वा वर्तते । अत एव हि—'यो दीक्षितः स यजमानः' इत्यादौ स्ववाक्यसिद्धयापि दीक्षया यज-**

मानलक्षणमुपपद्यते। नहि सर्वजगत्कारणत्वं प्रमाणान्तरेण ज्ञायते; शास्त्रयोनित्वात्तस्य; अन्यथाऽनुमानादिप्रमाणसिद्धस्यैव ब्रह्मपदार्थत्वापत्त्या जितं सांख्यादिभिः ॥

अयं भावः—यच्छब्दघटितवाक्यं स्वार्थस्य प्रमाणान्तरयोग्यत्वे प्रमाणान्तरमपेक्षते, प्रापकवाक्यान्तरमपेक्षत इति तु न सांप्रतम्। उभयोरपि श्रुतित्वाविशेषे किं प्राप्यं किं प्रापकमित्यत्राविगमनात्। नहि श्रुतिद्वये समानार्थके इदं प्रापकमिदनुवादकमिति व्यवस्था संभवति। अत एव—"समधो यजती"ति वाक्यविहितं यागमुद्दिश्य—'तनूनपातं यजती'त्यादिना न देवताविधिः, इति सर्वेषामुत्पत्तिवाक्यत्वेन प्रयाजपञ्चकविधानमुपपद्यते। सर्वथा तु—"यतो वै"त्यादीनां प्रापकवाक्यान्तरापेक्षयैव प्रवृत्तौ स्वतो ब्रह्मणि प्रामाण्यमेव न स्यात्, इति "यतो वै"त्यादीनां ब्रह्मणि प्रमाणतैव भग्ना स्यात्। प्रापकवाक्यान्तराणि यानि विवक्षितानि, तेषामेवात्र निर्देशे कर्तव्ये—"यतो वा इमानि भूतानि" इति वाक्यस्यैव ग्रहणे प्रयोजनाभावादपि—"यतो वै"त्यादिकमपि सामान्यतः—"अधीहि भगवो ब्रह्मे"त्युपदेश्यतया प्रस्तुतं ब्रह्म शाखाचन्द्रमोन्यायेन जगत्कारणतामुखेन लक्षयतीति वक्तव्यम्। सति चैवमपराणि सगुणवाक्यानि नात्र प्रापकवाक्यानि समानार्थानि भवितुमर्हन्ति; केवलस्य ब्रह्मणो ध्येयत्वोपक्रमविरोधात्। तथाच "सत्यं ज्ञानमनन्तमि"ति स्वप्रकरणप्रस्तुतमेव यत्तच्छब्दाभ्यां गृहीत्वा जगत्कारणत्वं लक्षणमुच्यत इत्येव वक्तव्यम्, इति यत्तच्छब्दाभ्यां विशेष्यांशमात्रस्य विवक्षणात् तस्य चाकारणस्यापि काल्पनिकेन कारणत्वेन लक्षणमत्रेत्येव स्वीकर्तव्यम्। एतेन—चिदचिद्विशिष्टस्यात्रोपास्यतेति वादोऽपि—परास्तः; तदुपस्थापकप्रमाणाभावात् ॥

सत्स्वपि बहुषु कारणवाक्येषु—"यतो वा इमानि भूतानि

जायन्ते'' इत्यस्यैव ग्रहणे निमित्तं तु तस्य प्रश्नोत्तरपरम्परया प्रवृत्तस्यावान्तरतात्पर्यमेव कारणत्वे, परमं तात्पर्यं त्वानन्द एव ब्रह्मणि, इत्यानन्दस्यैव स्वरूपलक्षणत्वम्, नतु जगत्कारणत्वस्येति क्रमेण विशेष्यमात्रे पर्यवसनावगम एव। "यः सर्वज्ञः'' इत्यादिकं तु विशिष्टेनैव पर्यवस्यति। इयान् विशेषः—क्वचित् स्वरूपलक्षणेन प्रस्तुतस्य जगत्कारणतयोपसंहारः—यथा 'यः सर्वज्ञः' इत्यादावक्षरोपक्रमेण प्रवृत्तस्य, क्वचित्तु जगत्कारणतया प्रस्तुतस्य स्वरूपेणोपसंहारः—यथा प्रकृते। कारणत्वं तु मतद्वयेऽपि विशिष्टस्यैवेति तु संप्रतिपन्नम्। विशेष्यं तु आनन्दादिस्वरूपमात्रम्—"आनन्दो ब्रह्मेति वचनादित्यद्वैतमतम्, तदपि सगुणमेवेति तु श्रीभाष्यमतम्। वक्तव्यं चात्र सर्वं "सत्यं ज्ञानमि''त्यादिवाक्यविचारप्रसङ्गेनोक्तमेव। प्रस्तोष्यते चानन्दमयाधिकरणेऽपि। अपरोऽयं विशेषः—कारणत्वं विशेष्यमात्रस्य गौणं श्रीभाष्यमते, अद्वैतमते तु मिथ्येति। तथाच—"ब्रह्मविदाप्नोति परमि''ति प्रस्तुतस्य वेद्यस्यैव ब्रह्मणः साक्षाद् न "यतो वेति'' वाक्यं बोधकम्; वेद्यतया श्रुतस्य तस्य विशेष्यमात्ररूपत्वं हि तदुत्तरेण—"सत्यं ज्ञानमनन्तं ब्रह्मे''ति वाक्येनावगम्यते; कारणत्वस्यावेद्यत्वात्। अङ्गीकृतं हि श्रीभाष्यानुयायिभिरपि—"तद्विजिज्ञासस्वे''ति नोपासनाविधिः; "ब्रह्मविदाप्नोती''त्यनेन प्राप्तत्वात्, न वा विचारविधिः, विचारस्य रागप्राप्तत्वात्, किन्तु सन्देहनिवृत्त्यर्थम्, उपदिश्यमानेऽर्थेऽवधानार्थं वा विजिज्ञासस्वेति पदमिति। सन्देहश्च "सत्यं ज्ञानमि''ति वाक्यानन्तरमप्यनिर्धारणेनैव यदि भवति, तर्हि नियतमिदं स्वीकर्तव्यम्—यद् वाक्येनापीदंतया निर्देष्टुमशक्यमेव ब्रह्मस्वरूपं सत्यज्ञानादिवाक्येनोपक्षिप्तमिति। श्रीभाष्यमते तु सगुणस्य ब्रह्मणस्तेनैव वाक्येन निःसन्दिग्धमवगतत्वात् कथं संशयावसरः? विभूतयस्तु सर्वाः श्रीभाष्यानुयायिनां दृष्ट्यापि "यतो वे''

ति वाक्यमात्रेणापि नावगम्यन्ते, इति वाक्यान्तरमपक्ष्यैव संशय-निरासे कर्तव्ये—"आनन्दादयः प्रधानस्ये"ति न्यायेन गुणोपसंहार-व्यवस्थयैव निर्वाहात् "जन्मादिवाक्यमात्रसंग्रहः सूत्रकाराणामनु-पपन्न एव। "यत्प्रयन्ती"ति वाक्येनात्यन्तिकप्रलयविवक्षया मुक्ते-रपि ग्रहणमिति पक्षे तु ब्रह्मभावमात्रस्यात्यन्तिकप्रलयरूपत्वस्य विष्णुपुराणानुसारेण पूर्वमुपपादितत्वात "यतो वे"ति वाक्यं निर्गुणपर्यन्तबोधनेनैव पर्यवस्यतीत्येव समायातम् ॥

यत इति वाक्यस्य प्रापकवाक्यापेक्षायामपि निर्गुणवाक्य-मेव प्रापकतया विवक्ष्यत इति वक्तव्यम्, यतोऽध्यारोपापवाद-विधया निर्गुण एव पर्यवसानम्। निर्गुणमेवानूद्य सृष्ट्यादिकमध्या-रोपविधया प्रतिपाद्यतेऽपवादार्थमिति हि—श्रीमद्भागवतश्रुति-गीतानुसारेणापि ज्ञायते। तत्र हि—

"ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः।
कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥"

इति सदसच्छब्दवाच्यचिदचिदतीत-निर्गुणब्रह्मणि श्रुतीनां प्रवृत्तिः कथमिति प्रश्ने—"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः। मात्रार्थं च भवार्थं चात्मनेऽकल्पनाय च ॥" इति कल्पितां सृष्टिमादाय श्रुतीनां ब्रह्मणि प्रवृत्तिरिति स्पष्टं प्रतिपाद्यते। अत्र निर्गुणपदम्, 'सदसतः परे' पदानि च निर्विशेषवाद एव स्वरसानि; अन्यथा छाग-पशुन्यायेन हेयगुणमात्राभावाभिप्रायेण निर्गुणपद-प्रवृत्तौ "गुणवृत्तयः कथं चरन्ती"त्यसङ्गतमेव स्यात्। तेन हि ज्ञायते शब्दप्रवृत्तिनिमित्ता गुणाः केऽपि ब्रह्मणि न सन्तीति। तथाच श्रुतिगीतैकवाक्यतापि 'यतो वे'ति वाक्यसन्दर्भस्य सम्यग-धिगता भवति ॥

वस्तुतस्तु—ब्रह्ममीमांसाया न्यायप्रदर्शनपरत्वात् सर्वाणि सृष्टिवाक्यानीहोदाहरणम्, इति कस्य वा प्रापकापेक्षा? नहि

वयमपि चिन्मात्रं सर्वप्रपञ्चोपादानमिति वदामः, किन्त्वविद्ययाऽऽ-वृतं ब्रह्मैव। तच्च विम्बरूपं प्रतिविम्बरूपं वेश्वरभावमापन्नं सदेव कारणं मन्यते। अत एवानेकजीववादे यावत्सर्वमुक्ति ईश्वरभावो मुक्तिरित्यादि सिद्धान्तलेशसंग्रहादौ व्यक्तम्। एतेन—मतान्तरे सन्मात्रस्य चिन्मात्रस्य वा सत्यसंकल्पत्वाद्यभावेनेश्वरस्य च ब्रह्मांशस्याध्यस्ततयाऽभिमतस्याध्यस्तान्तरसामानाधिकरण्यासम्भ-भवात् "बहु स्यामि"त्यादि न घटत इति—परास्तम्; परिणममा-नाविद्याविषयत्वेनाधिष्ठानविधया विशेष्यचैतन्यमात्रस्य विवर्तो-पादनतया सामानाधिकरण्ये बाधकाभावात्। नहि वयमीश्वररूपेण कारणत्वम्, तद्रूपेण च सामानाधिकरण्यं मन्यामहे, किन्त्वैश्वर-चैतन्यांशेनैव। तत्तु मिथ्येति तु पूर्वमेवोक्तम्। अन्यत्तु सर्वं समानमेव। केवलमयमपरो विशेषः—जगत्कारणत्वं तटस्थलक्षणमिति भगवत्पादानुसारिणां सिद्धान्तः, स्वरूपलक्षणमिति तु मतान्तरम्। यथाच जगत्कारणत्वं न विशेष्यांशस्य स्वरूपलक्षणम्, विशिष्टस्य तु नोपस्थापकं प्रमाणं किमपि वर्तते, तथा विशदीकृतमन्यत्र, इति "जन्माद्यस्य यतः" इति सूत्रमप्यद्वैतमतमेव साधु व्यवस्था-पयति॥

अधिकरणशरीरं तु श्रीभाष्याभिमतमीदृशमेव—"यतो वे"त्यादि-वाक्यानि ब्रह्म लक्षणतः प्रतिपादयितुं शक्नुवन्ति वा, न वेति संशयः। तदर्थं संशय्यते—किं सृष्ट्यादीनां विशेषणत्वेनोपलक्षणत्वेन वा ब्रह्म-लक्षणत्वं सम्भवति वा? नवेति। तदर्थं च विशेषणपक्षे विशेषणभेदेन विशेष्यभेदोऽस्ति, नेति। तदर्थं च विशेषणस्य विशेषणत्वं स्वाश्रयसर्व-धर्मव्यावर्तकतया, उत स्वविरोधिधर्मव्यावर्तकतया? उपलक्षणपक्षे किमाकारान्तरप्रतिपत्तिरस्ति? उत नास्ति—इति संशयपरम्परायाम्—, सर्वधर्मव्यावर्तकतया विशेषणत्वम्, आकारान्तरप्रतिपत्तिश्च नास्तीति पूर्वः पक्षः। विरोधिधर्मव्यावर्तकतयैव विशेषणत्वम्, आकारान्तरप्रति-पत्तिश्चास्तीति राद्धान्तः॥

सर्वधर्मव्यावर्तकतया विशेषणत्वे विशेष्यभेदप्रसङ्गेन जन्मादीनां

विशेषणत्वायोगाद् आकारान्तरप्रतिपत्त्यभावे चोपलक्षणत्वायोगाद् उभयथापि लक्षणत्वासम्भवाद् इदं वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं न शक्नोतीति लक्षणदौःस्थ्येन ब्रह्मणि शास्त्रप्रामाण्यासम्भवाद् विचारोऽनारम्भणीय इति पूर्वपक्षे फलम् । विरोधिव्यावर्तकतयैव विशेषणत्वे विशेष्यभेदाभावाद् जन्मादीनां विशेषणत्वोपपत्तेराकारान्तरप्रतिपत्तिसद्भावाद् उपलक्षणत्वोपपत्तेश्चोभयथापि लक्षणत्वसम्भवाद इमानि वाक्यानि ब्रह्म लक्षणतः प्रतिपादयितुं शक्नुवन्त्येव, इति लक्षणसौष्ठवेन ब्रह्मणि शास्त्रप्रामाण्योपपत्तेस्तद्विचारारम्भो युक्त इति सिद्धान्ते फलम् ॥

तदयं निष्कर्षः—जन्म-स्थिति-भङ्गाः सर्वेऽपि न ब्रह्मणो लक्षणम् ; विशेषणभेदेन विशेष्यभेदापत्तेः । "देवदत्तः श्यामो युवा लोहिताक्षः" इति विशेषणबहुत्वेऽपि तु देवदत्तस्य प्रमाणान्तरज्ञातत्वादैक्यं न विरुद्धम् , औपनिषदत्वात्तु ब्रह्मण एकत्वस्य प्रमाणान्तरेणाज्ञातत्वात् विशेषणभेदेन भेदोऽवर्जनीयः । "यतो वे"ति वाक्येन ब्रह्मशब्दैक्यं तु—'खण्डो मुण्डः पूर्णशृङ्गो गौरि'त्यत्र गोपदैक्यवदप्रयोजकम् । एतेन सम्भूयलक्षणत्वेऽपि ब्रह्मबहुत्वापत्तिर्व्याख्याता । एकाकाराप्रतिपत्तौ तु बहूनामुपलक्षणत्वमपि बाधितमेव । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यपि लक्षणवाक्यमेवेति प्रकृत इव तत्रापि विशेषणभेदाद् नैकाकारनिर्णयः, अन्योन्याश्रयापत्तेरिति पूर्वपक्षः ॥

सिद्धान्तस्तु—बृहेतेर्धातोरर्थानुगमेन निरतिशयबृहत्वमेकाकारो ब्रह्मशब्दमहिम्नैव ज्ञायत इति जन्म-स्थिति-लयानां सत्य-ज्ञानादीनां वा प्रत्येकं सम्भूय वोपलक्षणत्वे बाधकाभावाद् जन्मादीनामुपलक्षणत्वपक्षो न दोषाय । अत एव 'यतः' 'यत्' येने'ति प्रसिद्धशब्देन कारणपरामर्श उपपद्यते । प्रसिद्धिश्च—"सदेवे"त्यादावभिन्ननिमित्तोपादानतया तत्प्रतिपादनात् । तच्च निरतिशयबृहत्वविशिष्टमेकमेवाद्वितीयमित्येकतयैवावगतमिति जन्मादीनां विशेषणत्वपक्षोऽपि न दोषाय; लक्षणभूतानामपि विशेषणानां स्वविरोधिव्यावृत्तवस्तुलक्षकत्वाविरोधात् , सृष्टि-स्थिति-लयानां विशेषणानां श्यामत्व-युवत्वादिवद्विरोधाद् न खण्डत्वादिना साम्यम् , येन विशेष्यभेद आक्षिप्येत । सत्यादिवाक्यं तु स्वरूपप्रतिपादकम् , न लक्षणवाक्यम् , इति नान्योन्याश्रयः । अत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्माह, तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावर्त्यते; यतो नामान्तरभजनादवस्थान्तरयोगेन तयोर्न निरुपाधिक-

सत्ता वर्तते। ज्ञानपदं त्वसंकुचितज्ञानैकाकारवाचि कदाचित्संकुचितज्ञान-मुक्तव्यावर्तकम्। अनन्तपदेन बद्ध-मुक्तविलक्षणसातिशयनित्यजीव-व्यावृत्तिः; अनन्तकल्याणगुणवाचित्वात्तस्य। तथाच—सत्य-ज्ञानादि-वाक्यावगतस्यैकस्य ब्रह्मण एव—जन्मादिभिर्लक्षणाद् नान्योन्याश्रयः॥

निर्विशेषं ब्रह्म जिज्ञास्यमिति वादे तु निरतिशयबृहत्ववाचि-ब्रह्मपदम्, जन्मादिकारणत्वाम्नानम्, उत्तरेषु सूत्रेष्वीक्षणान्वयदर्शनम्, तत्तत्सूत्रोदाहृतश्रुतीनामन्वयश्च बाधितः स्यात्। जगज्जन्मादिभ्रमो यन्मूल इति वाक्यार्थस्तु—वाचारम्भणादिश्रुतावपि "मृत्तिकेत्येव सत्य-मि"ति परिणामिकारणस्यैव निदर्शनात् 'शुक्तिकेत्येव सत्यमि'ति विवर्तकारणानिदर्शनात् "परिणामात्"इत्येव सूत्रदर्शनाच्च स्वोत्प्रेक्षामात्र-सिद्धः, न श्रौतः, व वा सूत्रारूढः। तत्रापि तु भ्रममूलमज्ञानम्, अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् सविशेषत्वमेव, न निर्विशेषत्वम्-इति॥

अद्वैतिनोऽपि सत्यादिवाक्यानां स्वरूपपरत्वम्, जन्मादीनां प्रत्येकलक्षणत्वं सम्भूय लक्षणत्वं वा सम्भवतीति सिद्धान्ते न विप्रतिपद्यन्ते। इयान् विशेषः—जन्मादिलक्षणलक्षितस्य सत्य-ज्ञानादिवाक्यं स्वरूपं बोधयतीत्यद्वैतमतम्, सत्यादिवाक्य-बोधितस्वरूपस्य जन्मादिवाक्यं लक्षणपरमिति श्रीभाष्यमतम्। अपरोऽयं विशेषः—यज्जन्मादिवाक्यलक्षितं सविशेषमेव, सत्या-दिवाक्यगम्यं तु निर्विशेषमेव। कारणत्वं सत्यज्ञानादिरूपत्वं चैकस्य न भवतीति मतद्वयसम्प्रतिपन्नम्, चिदचिद्विशिष्टं ब्रह्म कारणम्, केवलं तु ब्रह्म सत्यज्ञानादिरूपं विशेष्यमात्रमिति श्रीभाष्यमतेऽपि स्वीकारात्। विशेषस्तु—स्वरूपमिदं निर्विशेष-मित्यद्वैतमतम्, तदपि सविशेषमेव; प्रकाशत्वादिधर्मस्वीकारात्, अन्यथा तुच्छत्वापत्तेरिति श्रीभाष्यमतम्। तत्र विशिष्टस्य शुद्धातिरेको हि विशेषणानामपि पारमार्थिकत्वेऽवश्यमेव स्वीक-र्तव्यः, "सत्यज्ञानादिबोधितस्य विशेष्यमात्रस्य विशिष्टधर्मो जगत्कारणत्वं कथं लक्षणं स्यात्? इति वेद्यब्रह्मणः सत्यज्ञानादि-

रूपस्य जन्मादिकं न लक्षणमिति—"जन्माद्यस्य यतः" इति सूत्रमेवाप्राप्तकालं भवति श्रीभाष्यमते, अद्वैतमते तु विशिष्ट-शुद्धयोः काल्पनिकभेदस्यैव स्वीकारात् परस्पराध्यासाच्च "यदिदं रजतमभात् सा शुक्तिरि"त्यादौ रजतधर्मरजतत्वेन शुक्तेरिव जन्मादिकारणत्वेन ब्रह्मलक्षणं न विरुद्धम्। उपलक्षणत्वमपि जन्मादिकारणत्वानां स्वसमानाधिकरणजन्मादिकारणत्वाभावेनैव भवितुमर्हति, इति कदाचिदन्यतमकारणत्वं विना ब्रह्मणोऽवस्थानमपि कल्पनीयं स्यात्, इति जन्म-स्थिति-प्रलयान्यतमावस्थाकारणतां विना ब्रह्मणोऽवस्थानम्—चिदचित्संसर्गं विनाऽवस्थानमेव, इति चिदचिच्छरीरकब्रह्मकरणतावादो न क्षोदक्षमः। तथाच—जगज्जन्मादिकारणत्वं ब्रह्मण्यविद्यमानमेव ब्रह्मलक्षणं चन्द्रमसाऽसम्बन्धिनीव शाखा चन्द्रलक्षणमिति स्वीकर्तव्यम्। तथाच वृक्षधर्मेण शाखया स्वलक्षणेनापि चन्द्रमा यथा न सधर्मा, तथाऽविद्योपाहितब्रह्मनिष्ठेनापि जगत्कारणत्वेन ब्रह्म न सधर्मेत्येव स्वीकर्तव्यम्, इति जगत्कारणत्वेन ब्रह्मणो न सविशेषत्वम्। यथाच सत्यज्ञानादिवाक्यं निर्विशेषवाद एव स्वरसम्, तथा पूर्वमेव विवेचितम्। व्यक्तीकरिष्यते चेदमुपरिष्टादानन्दमयाधिकरणप्रस्तावे। सति चैवं निर्विशेषब्रह्मकारणताया अद्वैतिभिरनङ्गीकारात्—जन्मादिकारणत्वनिर्देशः, ईक्षणाद्यन्वयः, तत्तत्सूत्रोदाहृतश्रुतिसमन्वयश्च यथायोगमद्वैतमते कथमपि न विरुद्ध्यते॥

वाचारम्भणश्रुतौ मृत्तिकापदं कारणमात्रोपलक्षणम्, नतु परिणामिकारणोपलक्षणम्। मृत्तिकापदेनापि तदुपलक्षितपरमात्मनो विवर्तोपादानस्यैव ग्रहणात्। व्यक्तं चैतत्—"पृथिव्यधिकाररूपशब्दान्तरेभ्यः"इत्यत्र। एतेन—आत्मकृतेः परिणामादि"त्यत्र परिणामपदमपि—व्याख्यातम्; तस्य विवर्तपरतयैव विवरणस्य युक्तत्वात्। व्यक्तं चैतदुक्तसूत्रे ब्रह्मसूत्रभाष्यवार्तिके नारायण-

सरस्वतीकृताविति तत एवाधिकमवगन्तव्यम्। यथाच—वाचारम्भणवाक्यगतमृत्तिकापदम्, सूत्रे परिणामपदं च श्रीभाष्यमते कथमपि नोपपद्यते, तथाऽद्वैतमार्तण्डेऽन्यत्र च व्यक्तम्। सर्वथा तु—जन्मादिसूत्रमपि न श्रीभाष्यमतस्यानुगुणम्, किन्त्वद्वैतमत



## शास्त्रयोनित्वात्

"शास्त्रयोनित्वात्" इति सूत्रं ब्रह्मणोऽभिन्ननिमित्तोपादानस्य नानुमानिकत्वम्, किन्त्वौपनिषदत्वमेवेति व्यवस्थापनार्थमिति मतद्वयसंप्रतिपन्नम्। अत्रानुमानापेक्षया शास्त्रस्य दौर्बल्यमिति पूर्वपक्षाशयः, शास्त्रस्यैव प्राबल्यमिति सिद्धान्ताशय इति न्यायस्वरूपमप्युभयानुमतमेव, केवलं ब्रह्मसविशेषत्व-निर्विशेषत्वयोरेव विप्रतिपत्तिः। यत्रोभाभ्यामपि नात्राधिकं किमपि निरुच्यते; निरुक्तप्रायत्वात् पूर्वतनयोः सूत्रयोः ॥



## तत्तु समन्वयात्

"तत्तु समन्वयात्" इति सूत्रेण तु श्रीभाष्यकाराः प्रतिपत्ति-विधिविषयतया शास्त्रेण मीमांसकमतनिरासेन ब्रह्मव्यवस्थापनं कुर्वते—उपास्यस्यापि ब्रह्मणः पुरुषार्थत्वेनान्वयात् पारमार्थिकत्व-व्यवस्थापनेन ॥ अत्र निष्प्रपञ्चीकरणनियोगविधिवादः, ध्यानविधि-नियोगवादः, केवलज्ञानविधिवादश्चेति भर्तृप्रपञ्चमतं उपवर्षमतं विवरणमतं चेति पक्षत्रयनिरसनेन मीमांसकमतानुसारेणोपासना-विधिपरत्वेऽपि विनाप्यर्थं ज्ञानस्य फलसाधनत्वाद् अर्थसद्भावे न प्रामाण्यमिति पूर्वपक्षः; पुरुषार्थत्वेनान्वयात् प्रतिपत्तिविधिशेषत्व-मर्थसद्भावेन स्वीक्रियत इति सिद्धान्तश्च श्रीभाष्यसारसङ्कलनेन प्रतीयेते ॥ अत्रोपवर्षमुखेन विवरणमतं खण्डितं श्रीभाष्यकारैः। शास्त्रप्रमाणकत्वं पुरुषार्थत्वेनान्वयादिति श्रीभाष्याभिमतः सूत्रार्थः। समन्वयशब्दस्य तात्पर्यविषयत्वादित्यर्थस्यैव युक्तत्वेनोपक्रमाद्यवगत-तात्पर्यविषयत्वात् शास्त्रप्रमाणकत्वं साध्यत इति भगवत्पादाभि-मतः सूत्रार्थः। मीमांसकमतनिरसने परमुभयोरप्यैकमत्यमेव। इयान् विशेषः—यद् मीमांसकाभिमतप्रतिपत्तिविधिविषयत्वं स्वीकृत्य तदभिमतब्रह्मस्वरूपासद्भावनिरासः श्रीभाष्यकाराणाम्, तदभिमत-प्रतिपत्तिविधिविषयत्व-ब्रह्मस्वरूपाभावोभयनिरासो भगवत्पादा-नाम्। सत्यब्रह्मोपासनाद् मोक्ष इति श्रीभाष्यमतम्, सत्यब्रह्म-ज्ञानमात्रेण मोक्ष इति भगवत्पादमतमिति तु निष्कर्षः ॥

इदमत्र पूर्वपक्षसंग्रहवाक्यं श्रीभाष्यकाराणाम्—"वेदा-न्तानां प्रवृत्ति-निवृत्तिप्रयोजननिधुरत्वात्, ज्ञानमात्रापर्यवसानात्, ध्यानविधिशेषत्वेऽपि ध्येयविशेषस्वरूपसमर्पणमात्रपर्यवसानात्, बालातुराद्युपच्छन्दनवाक्यवद् ज्ञानमात्रेण पुरुषार्थपर्यन्तसिद्धेश्च परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न

संभवतीति ॥ अत्र निष्प्रपञ्चीकरणनियोगो भर्तृप्रपञ्चमिश्राणाम्, उपवर्षाचार्याणां ध्याननियोगवादः, भगवत्पादानां वाक्यार्थज्ञानमात्रेण पुरुषार्थ इति श्रवणादिविधिवादः। तत्र प्रथमं द्वितीयं च मतं तत्र तत्र भगवत्पादैरेव निरस्यते, इति अद्वैत्येकदेशिनामपि तद् मतद्वयं न भगवत्पादानामपि संमतम्। प्रतिपत्तिविधिविषयतया शास्त्रेण ब्रह्म समर्प्यत इति वादोऽपि तेषामेव। मतद्वयेऽपि शाब्दापरोक्षवादो न स्वीक्रियते ॥

भगवत्पादास्तु--ध्येयत्वं ब्रह्मणो नाङ्गीकुर्वन्ति। भगवत्पादानां तु मतस्यायमेवाशयः—न चोदनातन्त्रज्ञानविषयो ब्रह्म; श्रोतव्य इत्यादीनामविधित्वपक्षो वा मन्यताम्, विधित्वपक्षो वा; तत्र प्रथमे कल्पे रागप्राप्तध्यानविषयत्वम्, द्वितीये तु कल्पे तात्पर्यनिर्णयानुकूलचेतोवृत्तिविशेषप्रत्ययप्रवाहस्यैव ध्यानरूपत्वाद् न पुरुषतन्त्रज्ञानविषयत्वमिति। तत्र भगवत्पादानां शाब्दापरोक्षवादे न तावानाग्रहः, इति तु मण्डनामिश्रादयः। सर्वथा तु ध्याननियोगविषयत्वं न भगवत्पादानुमतम्। तथाच शाब्दापरोक्षवादनिरासमेकं पुरस्कृत्योपवर्षमुखेन प्रतिपत्तिविधिविषयत्वनिरसनमिदं न भगवत्पादमतनिरासायालम्। शाब्दापरोक्षवादमस्वीकुर्वन्तोऽपि मण्डनमिश्र-वाचस्पतिमिश्रादयः पुरुषतन्त्रोपासनादिनियोगविषयत्वं न स्वीकुर्वन्ति। इदं तूपवर्षभगवत्पादयोरुभयोरपि संप्रतिपन्नम्—यद् ध्यानेन वाक्यार्थापरोक्षज्ञानमिति। दृष्टविधयेति तु भगवत्पादमतम्, अदृष्टविधयेति तूपवर्षमतम्। इयान् विशेषः—ध्यानमपि ध्येयैकनिरूपणीयमिति ध्येयसद्भावमपेक्षत इत्युपवर्षमतम्, असत्येनापि स्वरूपेण ध्यानसिद्ध्या मीमांसकमत इव न ध्येयाक्षेपः, इति न ध्याननियोग इति भगवत्पादमतम्। इदं तु भगवत्पादमतम्—वाक्यार्थज्ञानमात्राद् बन्धनिवृत्त्यनुपपत्तिः, शब्दो नापरोक्षसाधनमिति च प्रक्रियया निरस्यते। तत्र भगवत्पादाः समन्वयसूत्रे—

"अवगत्यर्थत्वाद् मनन-निदिध्यासनयोरि"ति मनन-निदिध्यासनयोरपि यथासम्भवमुपयोगं व्यवस्थापयन्तीति सर्वत्र वाक्यार्थज्ञानमात्रेण मोक्षस्य भगवत्पादैरप्यनङ्गीकारात्, पूर्वोक्तरीत्या शाब्दापरोक्ष-तत्परोक्षवादयोः फलतोऽविशेषात्, मोक्षानित्यत्वस्यापादितस्योपवर्षमुखेनापरिहाराच्च भगवत्पादमतं नोपवर्षमुखेन निरस्तं भवति ॥

वस्तुतस्तु—ध्यानस्य ध्येयैकनिरूपणीयत्वं मनोब्रह्मादिध्यानानामिवासत्यध्येयेनापि ध्यानसिद्ध्या निर्वोढुं शक्यते, इति ब्रह्मासिद्धिशङ्कोपवर्षमत इव श्रीभाष्यमतेऽपि कथं न भवति? यदि पुरुषार्थत्वेनान्वयादिति मन्यते, तर्हि स्वप्नविशेषेष्वसत्येष्वपि पुरुषार्थत्वान्वयाद् अप्रयोजकं पुरुषार्थत्वेनान्वीयमानत्वम्। तथाच—उपास्यं ब्रह्म, प्रामाणिकम्, पुरुषार्थत्वादित्यनुमानस्य स्वप्नविशेषेषु व्यभिचारः। तत्क्रतुन्यायविषयेषूपास्येष्वद्वैतदृष्ट्या बाधितेष्वपि पुरुषार्थत्वात् तत्रापि व्यभिचारः। मोक्षानित्यत्वं तु ब्रह्मोपास्यतापक्ष आपादितं न कुत्रापि श्रीभाष्यकारैः स्वयमन्यमुखेन वा परिहृतम्, इति प्रतिपत्तिविधिशेषत्वमङ्गीकृत्य मीमांसकमतनिरसनं कथमपि न सम्भवतीति। सर्वथा मीमांसकमतनिरसनेनैवाधिकरणशरीरं रचनीयमित्यद्वैतिनाम्—ब्रह्म,शास्त्रप्रमाणकम्, सर्वेषां शास्त्राणां तत्रैवोपक्रमोपसंहारादिभिस्तात्पर्यावधारणादिति सिद्धान्तपर्यवसाय्येव तद् विरचनीयम्। सति चैवम्—समन्वयादित्यस्य तात्पर्यविषयत्वादिति प्रसिद्धार्थपरत्वमपि सुरक्षितं भवति, इति पुरुषार्थत्वेनान्वयादिति क्लिष्टकल्पनापि न साम्प्रतिकी ॥

---

## ईक्षतेर्नाशब्दम्

ईक्षत्यधिकरणं तु मतद्वयेऽपि सांख्यमतनिरसनेन ब्रह्मकारणतावादमेव व्यवस्थापयति। तत्रेक्षितृत्वादिकं सगुणस्यैव ब्रह्मणः सम्भवतीति निर्विशेषवादस्येदमधिकरणमत्यन्तविरोधीति श्रीभाष्यकारा मन्यन्ते। परन्त्वद्वैतमतेऽपि कारणब्रह्मनिर्विशेषताया अनङ्गीकाराद् न कोऽपि विरोधः। परमार्थतो निर्विशेषत्वमेव हि निर्विशेषवादे स्वीक्रियते, इति कल्पितेन कारणत्वेन न ब्रह्मणो निर्विशेषत्वहानिः। तदुक्तम्—

"अक्षमा भवतः केयं कारणत्वप्रकल्पने।
किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितम्॥" इति।

तदस्मिन् प्रसङ्गे ब्रह्मकारणताविषये तत्सर्वज्ञत्वादिविषये चाद्वैतिनां सर्वासां प्रक्रियाणां संकलनं पाठकानामत्यन्तमुपकुर्यात्, इति ब्रह्मकारणत्व-तत्कर्तृत्व-तत्सर्वज्ञत्वविषये सिद्धान्तलेशसंग्रहमप्यत्रैव योजयामः॥

विचार्यस्य ब्रह्मणो जगज्जन्मस्थितिलयकारणत्वं लक्षणमुक्तम्—"यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुत्या। जगज्जन्मस्थितिलयेषु एकैककारणत्वमप्यनन्यगामित्वाल्लक्षणं भवितुमर्हतीति चेत, सत्यम्, लक्षणत्रयमेवेदं परस्परनिरपेक्षम्। अत एव "अत्ता चराचरग्रहणात्" इत्याद्यधिकरणेषु सर्वसंहर्तृत्वादिकं प्रत्येकं ब्रह्मलिङ्गतयोपन्यस्तम्—इति कौमुदीकाराः॥

अन्ये तु—जन्मकारणत्वस्य स्थितिकारणत्वस्य च निमित्तकारणसाधारण्यात् उपादानत्वप्रत्यायनाय प्रपञ्चस्य ब्रह्मणि लयो दर्शितः। अस्तु ब्रह्म जगदुपादानम्; तज्जन्मनि घटजन्मनि कुलालवत्, तत्स्थितौ राज्यस्थेम्नि राजवच्च उपादानादन्यदेव निमित्तं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव जगज्जननजीवननियामकत्वमुक्तम्। तथाचैकमेवेदं लक्षणमभिन्ननिमित्तोपादानतयाऽद्वितीयं ब्रह्म लक्षयति—इत्याहुः॥

ब्रह्मणश्च उपादानत्वमद्वितीयकूटस्थचैतन्यरूपस्य न परमाणूनामिवारम्भकत्वरूपम्, न वा प्रकृतेरिव परिणामित्वरूपम्, किंत्वविद्यया वियदादिप्रपञ्चरूपेण विवर्तमानत्वलक्षणम्। वस्तुनस्तत्समसत्ताकोऽन्यथाभावः परिणामः; तदसमसत्ताको विवर्त इति वा, कारणसलक्षणोऽन्यथाभावः परिणामः, तद्विलक्षणो विवर्त इति वा, कारणाभिन्नं कार्यं परिणामः, तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति वा विवर्त-परिणामयोर्विवेकः ॥

अथ शुद्धं ब्रह्म उपादानमिष्यते? ईश्वररूपम्? जीवरूपं वा?

अत्र सङ्क्षेपशारीरकानुसारिणः केचिदाहुः—शुद्धमेवोपादानम्, जन्मादिसूत्र-तद्भाष्ययोरुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वोक्तेः। तथाच "आत्मन आकाशस्सम्भूतः" इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणैव—इति ॥

विवरणानुसारिणस्तु—"यस्सर्वज्ञस्सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" इत्यादिश्रुतेः सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वररूपमेव ब्रह्म उपादानम्। अत एव भाष्ये "अन्तस्तद्धर्मोपदेशात्" "सर्वत्र प्रसिद्धोपदेशात्" इत्याद्यधिकरणेषु "सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम्। जीवेश्वरानुस्यूतचैतन्यमात्रस्य सर्वोपादानत्वे तु न तज्जीवव्यावृत्तमीश्वरलिङ्गं स्यात्। सङ्क्षेपशारीरके शबलोपादानत्वनिराकरणमपि मायाविशिष्टोपादानत्वनिराकरणाभिप्रायम्, न तु निष्कृष्टेश्वररूपचैतन्योपादानत्वनिराकरणपरम्; तत्रैव प्रथमाध्यायान्ते जगदुपादानत्वस्य तत्पदार्थवृत्तित्वोक्तेः। एवं च ईश्वरगतमपि कारणत्वं तदनुगतमखण्डचैतन्यं शाखा चन्द्रमसमिव तटस्थतयोपलक्षयितुं शक्नोतीति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिः—इति मन्यन्ते ॥

वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रेश्वर उपादानम्। अन्तःकरणादिकं तु ईश्वराश्रितमायापरिणाममहाभूतोपसृष्टजीवाविद्याकृतभूतसूक्ष्मकार्यमिति तत्रोभयोरुपादानत्वम्। अत एव "एवमेवास्य परिद्रष्टुरिमाष्षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" इति श्रुतौ कलाशब्दवाच्यानां प्राण-मनःप्रभृतीनां विदुषो विदेहकैवल्यसमये विद्यानिवर्त्याविद्याकार्यांशाभिप्रायेण विद्ययोच्छेदो दर्शितः; "गताः कलाः पञ्चदश प्रतिष्ठाः" इति श्रुत्यन्तरे तदनिवर्त्यमहाभूतपरिणामरूपोपष्टम्भकांशाभिप्रायेण तेषां स्वस्वप्रकृतिषु लयो दर्शितः—इति मायाविद्याभेदवादिनः॥

यथा वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्र ईश्वर उपादानम्, तथान्तःकरणादि जीवाश्रिताविद्यापरिणाम इति तत्र जीव एव उपादानम्। न चान्तःकरणादौ मायाकार्यमहाभूतानामप्यननुप्रवेशे उदाहृतश्रुतिद्वयव्यवस्थानुपपत्तिः; कलानां विद्योच्छेदश्रुतिस्तत्त्वविद्दृष्टिविषया, "गताः कलाः" इति श्रुतिस्तु म्रियमाणे तत्त्वविदि समीपवर्तिनः पुरुषाः नश्यद्घटवत्तदीयशरीरादीनामपि भूम्यादिषु लयं मन्यन्त इति तटस्थपुरुषप्रतीतिविषयेति व्यवस्थायाः कलालयाधिकरणभाष्ये स्पष्टत्वात्—इति मायाविद्याभेदवादिष्वेकदेशिनः॥

तदभेदवादिष्वपि केचित्—यद्यपि वियदादिप्रपञ्चस्य ईश्वर उपादानम्, तथाप्यन्तःकरणादीनां जीवतादात्म्यप्रतीतेर्जीव एवोपादानम्। अत एवाध्यासभाष्येऽन्तःकरणादीनां जीव एवाध्यासो दर्शितः। विवरणे च प्रतिकर्मव्यवस्थायां ब्रह्मचैतन्यस्योपादानतया घटादिसङ्गित्वम्, जीवस्य तदसङ्गित्वेऽप्यन्तःकरणादिसङ्गित्वं च वर्णितम्—इत्याहुः॥

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥"

इत्यादिश्रुतेः कृत्स्नव्यावहारिकप्रपञ्चस्य ब्रह्मैवोपादानम्, जीवस्तु प्रातिभासिकस्य स्वप्नप्रपञ्चस्य च। "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्यधिकरणे ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माभावो वा एकदेशेन परिणामे निरवयवत्वश्रुतिविरोधो वा प्रसज्यत इति पूर्वपक्षे "आत्मनि चैवं विचित्राश्च हि" इति सूत्रेण विवर्तवादाभिप्रायेण स्वप्नदृशि जीवात्मनि स्वरूपानुपमर्दनेनानेकाकारस्वप्नप्रपञ्चसृष्टिवत् ब्रह्मणि वियदादिसृष्टिरुपपद्यत इति सिद्धान्तितत्वात्—इत्यन्ये ॥

जीव एव स्वप्नद्रष्टृवत् स्वस्मिन् ईश्वरत्वादिसर्वकल्पकत्वेन सर्वकारणमित्यपि केचित् ॥

अथ "मायां तु प्रकृतिं विद्यात्" इति श्रुतेः, मायाजाड्यस्य घटादिष्वनुगमाच्च माया जगदुपादानं प्रतीयते; कथं ब्रह्मोपादानम्?

अत्राहुः पदार्थतत्त्वनिर्णयकाराः—ब्रह्म माया चेत्युभयमुपादानमित्युभयश्रुत्युपपत्तिः, सत्ताजाड्यरूपोभयधर्मानुगत्युपपत्तिश्च। तत्र ब्रह्म विवर्तमानतयोपादानम्, अविद्या परिणममानतया। न च विवर्ताधिष्ठाने पारिभाषिकमुपादानत्वम्, स्वात्मनि कार्यजनिहेतुत्वस्योपादानलक्षणस्य तत्राप्यविशेषात्।

केचित्तूक्तामेव प्रक्रियामभ्युपगम्य विवर्त-परिणाम साधारणमन्यल्लक्षणमाहुः—स्वाभिन्नकार्यजनकत्वमुपादानत्वम्। अस्ति प्रपञ्चस्य सद्रूपेण ब्रह्मणा विवर्तमानेन जडेनाज्ञानेन परिणामिना चाभेदः; "सन् घटः" "जडो घटः" इति सामानाधिकरण्यानुभवात्। न च "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रे "अनन्यत्वं व्यतिरेकेणाभावः" "न खल्वनन्यत्वमित्यभेदं ब्रूमः, किन्तु

भेदं व्यासेधाम:'' इति भाष्य-भामतीनिबन्धाभ्यां प्रपञ्चस्य ब्रह्मा-भेदनिषेधादभेदाभ्युपगमेऽपसिद्धान्त इति वाच्यम्; तयोर्ब्रह्मरूप-धर्मिसमानसत्ताकाभेदनिषेधे तात्पर्येण शुक्ति-रजतयोरिव प्रातीति-तिकाभेदाभ्युपगमेऽपि विरोधाभावात्—इति ॥

सङ्क्षेपशारीरककृतस्तु—ब्रह्मैवोपादानम्; कूटस्थस्य स्वत: कारणत्वानुपपत्तेर्माया द्वारकारणम्; अकारणमपि द्वारं कार्येऽनुग-च्छति, मृद इव तद्गतश्लक्ष्णत्वादेरपि घटेऽनुगमनदर्शनात्—इत्याहु: ॥

वाचस्पतिमिश्रास्तु—जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानतयोपादानमिति माया सह-कारिमात्रम्, न कार्यानुगतं द्वारकारणम्—इत्याहु: ॥

सिद्धान्तमुक्तावलीकृतस्तु—मायाशक्तिरेवोपादानम्, न ब्रह्म, "तदेतद् ब्रह्मापूर्वमनपरमबाह्यम्'' "न तस्य कार्यं करणं च विद्यते'' इत्यादिश्रुते:; जगदुपादानमायाधिष्ठानत्वेन तूपचारा-दुपादानम्; तादृशमेवोपादानत्वं लक्षणे विवक्षितम्—इत्याहु: ॥

अनेनैव निखिलप्रपञ्चरचनाकर्तृभावेनार्थसिद्धं सर्वज्ञत्वं ब्रह्मण: "शास्त्रयोनित्वात्'' इत्यधिकरणे वेदकर्तृत्वेनापि समर्थितम् ॥

अथ कथं ब्रह्मण: सर्वज्ञत्वं सङ्गच्छते, जीववदन्त:करणा-भावेन ज्ञातृत्वस्यैवायोगात ?

अत्र सर्ववस्तुविषयसकलप्राणिधीवासनोपरक्ताज्ञानोपाधिक ईश्वर:, अतस्तस्य सर्वविषयवासनासाक्षितया सर्वज्ञत्वमिति नार-तीतीर्थादिपक्ष: ॥

प्रकटार्थकारास्त्वाहु:—यथा जीवस्य स्वोपाध्यन्त:करणपरि-णामाश्चैतन्यप्रतिबिम्बग्राहिण:, इति तद्योगात् ज्ञातृत्वम्, एवं ब्रह्मण: स्वोपाधिमायापरिणामाश्चित्प्रतिबिम्बग्राहिणस्सन्तीति

तत्प्रतिबिम्बितैः स्फुरणैः कालत्रयवर्तिनोऽपि प्रपञ्चस्यापरोक्षेणावकलनात् सर्वज्ञत्वम्—इति ॥

तत्त्वशुद्धिकारास्तु—उक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसम्भवात् तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेरतीतसकलवस्त्ववभाससिद्धिः, सृष्टेः प्राक् मायायाः सृज्यमाननिखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वसिद्धेः अनागतवस्तुविषयविज्ञानोपपत्तिः—इति सर्वज्ञत्वं समर्थयन्ते ॥

कौमुदीकृतस्तु वदन्ति—स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात् सर्वज्ञत्वम्; अतीतानागतयोरप्यविद्यायां चित्रभित्तौ विमृष्टानुन्मीलितचित्रवत् संस्कारात्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेः, न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम्; "तमेव भान्तमनु भाति सर्वम्" इति सावधारणश्रुतिविरोधात्, सृष्टेः प्राक् "एकमेवाद्वितीयम्" इत्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूप ईक्षणे तत्पूर्वकमहाभूतादौ च स्रष्टृत्वाभावप्रसङ्गाच्च । एवं सति ब्रह्मणस्सर्वविषयज्ञानात्मकत्वमेव स्यात्, न तु सर्वज्ञातृत्वरूपं सर्वज्ञत्वमिति चेत्, सत्यम्, सर्वविषयज्ञानात्मकमेव ब्रह्म, न तु सर्वज्ञातृ, तस्य न कर्तृत्वरूपं ज्ञातृत्वमस्ति; अत एव "वाक्यान्वयात्" इत्यधिकरणे विज्ञातृत्वं जीवलिङ्गमित्युक्तं भाष्यकारैः । "यस्सर्वज्ञः" इत्यादिश्रुतिरपि द्रष्टृत्वावच्छिन्नजीवरूपेणैव योजनीया—इति ॥

यद्यपि ब्रह्म स्वरूपचैतन्येनैव स्वसंसृष्टसर्वावभासकम्; तथापि तस्य स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण तु ब्रह्मकार्यत्वात् "यस्सर्वज्ञः" इति ज्ञानजननकर्तृत्वश्रुतेरपि न कश्चिद्विरोधः इति आचार्यवाचस्पतिमिश्राः—इति ॥ ओं तत्सत् ॥